Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

B15

गादाधरी-

# अवयवप्रकरणम्

'विलासिनी' व्याख्योपेतम्

व्याख्याकारः

श्री पं० ज्वालाप्रसादगौडः



प्राप्तिस्थानम्

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला
२०२



# गादाधरी

## ( अवयवप्रकरणम् )

'विलासिनी' संस्कृतव्याख्योपेतम्

व्याख्याकारः
न्यायाचार्य-पोष्ठाचार्य-
श्री पं० ज्वालाप्रसादगौडः
वाराणसीस्थ-श्रीसंन्यासिसंस्कृतमहाविद्यालयस्य प्राध्यापकः



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

© चौखम्बा संस्कृत सीरीज आफिस
गोपाल मन्दिर लेन,
पो० बा० ८, वाराणसी-१ ( भारतवर्ष )
फोन : ६३१४५

मुद्रक : श्री हरिप्रेस, वाराणसी




प्रधान शाखा
चौखम्बा विद्याभवन
चौक, पो० बा० ६९, वाराणसी-१
फोन : ६३०७६

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

THE

KASHI SANSKRIT SERIES

202

*****

# GĀDĀDHARĪ

## ( AVAYAVAPRAKAṆAṀ )

Edited With

*The Vilāsinī Sanskrit Commentary*

By

ŚRĪ Pt. JVĀLĀPRASĀDA GAUḌA

*Prof. Saṁnyāsi Sanskrit College, Varanasi.*



THE

CHOWKHAMBA SANSKRIT SERIES OFFICE

VARANASI-1

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

© The Chowkhamba Sanskrit Series Office
Gopal Mandir Lane
P. O. Chowkhamba, Post Box 8
Varanasi-1 ( India )
Phone : 63145

Price Rs. 10-00




*Also can be had of*
**THE CHOWKHAMBA VIDYABHAWAN**
Publishers and Oriental Book-Sellers
Chowk, Post Box 69, Varanasi-1 ( India )
Phone : 63076

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# भूमिका

*श्री गुरु शरणम्*

इहकिल प्रचञ्चूर्यमाणे मिथ्याज्ञानप्रकटितविविधवैचित्र्ये आपाततोऽतिरमणीयेऽस्मिन् प्रत्यक्षतो दृश्यमाने वैरिञ्चे प्रपञ्चे प्रत्यक्षोपजीवकं किम् इति प्रत्यक्षोपजीवकत्वप्रकारिकायां जिज्ञासायां-शिष्यद्वारा प्रकटीकृतायाम् अनुमानं निरूपयन्ति संगतिप्रदर्शनपुरःसरम् आचार्यचरणाः । तच्चानुमानं स्वार्थ-परार्थ-भेदेन द्विविधम् । तत्र परार्थानुमानं न्यायसाध्यमिति न्यायस्तदवयवाश्च निरूपिता प्राचीनाचार्यचरणैः ।

इदानीमैतिहासिकदृष्ट्या विचार्यमाणे परार्थानुमानार्थं प्रयुज्यमाना अवयवाः सन्ति कियन्तः के च ते सर्वेषां दर्शनकोविदानां प्रश्नोऽयं जागरूको भवतीत्यत्र नास्ति लेशतोऽपि संशयावसरः ।

एतस्य प्रश्नस्योत्तरं तत्तच्छास्त्रकाराः स्वस्वप्रयोगपद्धतेरनुसारम् इदमेव प्रदत्तवन्तो यत् केचन शास्त्रकाराः पञ्चावयवान्[1], केचन् दशावयवान्[2], अपरे चतुरोऽवयवान्[3], अन्ये च विद्वांसस्त्र्यवयवान्[4] केचन विद्वांसो द्वावेवावयवौ[5] एकञ्चावयवमप्येके[6] दार्शनिकाः स्वीकुर्वन्ति । एवंक्रमेण एतेषामवयवानां परम्परा षट्श्रेणीषु विभज्यमाना दृश्यते ।

## ( १ ) पंचावयवपरंपरा

पञ्चावयवपरम्परां सर्वप्रथमं आन्वीक्षिकीशास्त्रं जन्मप्रदाता पदार्थशास्त्रं परमार्थतोनुसंधाता महर्षिगौतम एव स्वीकृतवान् । स च गौतमो महर्षिस्तां परम्परां सूत्ररूपेण दर्शितवान् । तत्रापि प्रत्येकस्यावयवस्य लक्षणमपि सूत्रद्वारैव स्पष्टं चकार । येषामाशयः पश्चात् महर्षिणा वात्स्यायनेन स्वभाष्यद्वारा विशदीकृतः । नैतावन्मात्रमेव तेषां पर्याप्तमपितु ते परार्थानुमाने आवश्यकरूपेण पंचावयवप्रयोगं विशेषतः स्वीकृत्य अवयवानां विपरीतक्रमप्रयोगं न्यूनाधिकभावरूपेण च प्रयोगं नाङ्गीकृतवन्तः, तादृशं च प्रयोगं निग्रहस्थानत्वावेव (२) सन्निवेशयामासुः । एतादृशमेव च तेषां

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हृद्गतं भावं स्मारं स्मारं प्राचीना अर्वाचीनाश्च नैयायिकाः साग्रहं पञ्चावयवप्रयोगं पारमार्थिकत्वेनानुमोदितवन्तः परार्थानुमानसंपत्तये।

न्यायसूत्रकारद्वारा प्रदर्शिताः पंचावयवाः (१) प्रतिज्ञा, (२) हेतु, (३) उदाहरण, (४) उपनय, (५) निगमन स्वरूपाः सन्ति। एतेषामवयवानां महदेवेदं वैशिष्ट्यं यदेते स्वोत्पत्तिकालमारभ्यैव इदानीन्तनकालावच्छेदेनापि स्वनाम्नि किमपि परिवर्त्तनं परिवर्धनं चानपेक्षमाणा स्वस्वरूपेणावतिष्ठन्ते। यद्यपि अन्यत्र अनेकेषु विषयेषु नव्यनैयायिकै र्महत्त्वपूर्णान् परिष्कारान् संपाद्य कियन्ति कृतान्यपि परिवर्त्तनानि, कृतानि च तेषां नामान्तराणि, यथा हेत्वाभासप्रकारपरिष्कारेषु सत्प्रतिपक्ष-असिद्ध-बाधिता हेत्वाभासाः प्रकरणसम-साध्यसम-कालातीतशब्देनोच्यन्ते, एतान्येव च तेषां सन्ति नामान्तराणि। अथवा तुल्यवित्तिवेद्यतया इदमपि व्याहर्तुं शक्नुमः यत्-प्रकरणसम-साध्यसम-कालातीतपदाभिधेया हेत्वाभासाः सत्प्रतिपक्ष-असिद्ध-बाधितापरपर्यायभूतैर्नामधेयैः प्रोच्यन्ते।

एवं सूत्रपठितानि पूर्ववत्-शेषवत्-सामान्यतोदृष्टानुमानानि केवलान्वयि-केवलव्यतिरेकि-अन्वयव्यतिरेकिनामान्तरैः प्रयुज्यन्ते। परन्तु प्रतिज्ञा-हेतु-उदाहरण-उपनय-निगमनानां पञ्चानामवयवानां नाम्नि प्रयोगे वा वर्तमानकालावच्छेदेनापि किमपि परिवर्त्तनं परिवर्धनं वा दृष्टिगोचरतां नायाति। अपितु एते पञ्चावयवाः स्वस्वरूपे एव स्थितिमन्तो दृश्यन्ते। यद्यपि नवीननैयायिकैः प्राचीननैयायिकानां लक्षणानि अवश्यं परिवर्त्तितानि परिवर्धितानि च कृतानि पश्यामः। एवं नव्यनैयायिकैः पञ्चानामवयवानां क्रमिक एव प्रयोग आवश्यकत्वेन आदृत इत्यस्यापि पञ्चवयवानामस्ति विशेषः। अन्यच्च उद्योतकर-वाचस्पतिमिश्र-जयन्त—उदयनाचार्यप्रभृतिप्राचीननैयायिकैः प्रतिज्ञादिपंचावयवेभ्यो न्यूनावयवस्वीकर्तॄणांसमस्तास्ता अवयवपरम्पराः सविस्तरं निरस्ता इत्यपि विशेषं विदाङ्कुर्वन्तु भवन्तः।

वैशेषिकसूत्रेषु यद्यपि अवयवानामुल्लेखो न स्पष्टीकृतो वर्तते तथापि भाष्यकारश्रीप्रशस्तपादेन (३) पञ्चावयवानां प्रयोगः—सोदाहरणानि च लक्षणानि सुस्पष्टीकृतानि दृश्यन्ते, तदनुसारमेव तत्र पञ्चावयवानां प्रयोगः स्वीकृतो वर्तते, परन्तु तेषामवयवानां सन्ति नामानि पृथक् पृथग् भूतानि इत्यस्ति एतावानेव विशेषः। यथा—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



(१) प्रतिज्ञा, (२) अपदेश, (३) निदर्शन, (४) अनुसन्धान, (५) प्रत्याम्नाय,पदाभिधेयानि। एतेषु वैशेषिकदर्शनाभिमतेषु पञ्चावयवेषु प्रथमोऽवयवः न्यायसूत्रानुसारी, द्वितीयोऽप्यवयवो वैशेषिकसूत्रेषुअस्मिन्नेव स्वरूपे वाहुल्येनोपलभ्यते परन्तु अन्तिमानां त्रयाणामवयवानां नामधेयस्य निर्वचनं स्वयं प्रशस्तपादेनैव कृतमिति प्रतीयते। अत्र इदमेव कारणं भवितुमर्हति यन्न्यायसूत्रकारीयावयवेभ्यः स्वावयवानां किमपि वैलक्षण्यं प्रदर्शयितुमेव एवंविधं नामकरणं कृतम्। यद्यपि किरणावलीकार-कन्दलीकारप्रभृभिराचार्यचरणैः भाष्यानुसारमेव सर्वं विवेचनं कृतम्। तथापि तेषां तादृशविवेचने न्यायोक्तानि समस्तान्यपि नामानि प्रयुक्तानि भवन्ति। न्यायसूत्रेषु यथा पंचावयवा निर्दिष्टास्तथैव शंकर मिश्रे (४) णापि न्यायावयवा सम्यङ् निरूपिताः। अन्ते च श्रीमिश्रेण प्रशस्तपादद्वारा घोषितानां पंचावयवानां लक्षणनिर्देशपुरःसरं व्याख्यानमपि व्यधायि।

सांख्या (५) चार्य श्री माठरमहोदयेन पंचावयवनिर्देशावसरे श्री प्रशस्तपादानामेव अनुगमनं कृतम्। इयांस्तु विशेषः यदेभिर्निरूपिता त्रयोऽप्यवयवा दृष्टिगोचरतां यान्ति। पक्ष-हेतु-दृष्टान्तानां नामनिर्वचनं संपाद्य प्रतिज्ञा-हेतूदाहरणान्यपि निर्दिष्टवन्तः श्रीमाठरमहोदयाः। पञ्चावयवप्रयोगस्तु सांख्यसूत्रेष्वपि मान्योऽस्ति ये च पंचावयवा गौतमानुसारं श्री विज्ञानभिक्षुणा स्पष्टीकृताः।

## (२) दशावयववाद परम्परा

उपलब्धेषु प्राचीनग्रन्थेषु दशावयवव्यवस्थापि श्रावण एवं चाक्षुषप्रत्यक्षयोर्विषयीभूता भवति। साप्येकमात्रं न्यायभाष्ये (१), दशवैकालिकनिर्युक्तिगाथायाञ्च (२) एतद्द्वयोरेव ग्रन्थयोः। महर्षिणा वात्स्यायनेन स्वविरचिते भाष्ये दशावयववाद सम्बन्धिनी व्यवस्था इत्थं प्रस्तूयते। यथा—

| | |
|---|---|
| (१) प्रतिज्ञा | (६) जिज्ञासा |
| (२) हेतुः | (७) संशयः |
| (३) उदाहरणम् | (८) शक्यप्राप्तिः |
| (४) उपनयः | (९) प्रयोजनम् |
| (५) निगमनम् | (१०) संशयव्युदासः |

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



निर्युक्तिगाथानामके ग्रन्थे दशावयवव्याख्यानस्य प्रकारद्वयसंविधानमस्तीति श्रूयते । यथा—

प्रथमप्रकारः

| | |
|---|---|
| ( १ ) प्रतिज्ञा | ( २ ) प्रतिज्ञाविशुद्धिः |
| ( ३ ) हेतुः | ( ४ ) हेतुविशुद्धिः । |
| ( ५ ) दृष्टान्तः | ( ६ ) दृष्टान्तविशुद्धिः । |
| ( ७ ) उपसंहारः | ( ८ ) उपसंहारविशुद्धिः । |
| ( ९ ) निगमनम् | (१०) निगमनविशुद्धिः |

द्वितीयप्रकारः

| | |
|---|---|
| ( १ ) प्रतिज्ञा | ( ६ ) प्रतिषेधः |
| ( २ ) प्रतिज्ञाविभक्तिः | ( ७ ) दृष्टान्तः |
| ( ३ ) हेतुः | ( ८ ) आशंका |
| ( ४ ) हेतुविभक्तिः | ( ९ ) आशंकाप्रतिषेधः |
| ( ५ ) विपक्षः | (१०) निगमनम् |

न्यायभाष्ये कृतमवयवव्याख्यानं निर्युक्तिगाथाग्रन्थीयावयवव्याख्यानतः सर्वथा विभिन्नमस्ति । इदमेव प्रकारद्वयस्वरूपं वैलक्षण्यं विभिन्नपरम्परायाः प्रतीकभूतं भवति । अस्मिन्नेव प्रसङ्गे इदमप्युल्लेखनीयं वर्तते यन्नैयायिकसार्वभौम श्रीवात्स्यायनेन प्रथमपंचावयवातिरिक्तास्तुरीयपंचावयवाः परार्थानुमानप्रयोगे नाङ्गभूता भवन्ति इति सम्यगुद्घोषितम् । तार्किकदृष्ट्या एतेषां पंचावयववाक्यानां नास्ति किमपि मूल्यम् , सर्वथा निरसनीयाश्च ते सन्ति

## (३) चतुरवयववादपरम्परा

यद्यपि समुपलब्धेषु सर्वेष्वपि दार्शनिकग्रन्थेषु एवंविधा न कापि परम्परा श्रूयते दृश्यते वा यस्यामवयवचतुष्टयस्य व्यवस्था समुपलभ्येत । अनन्तवीर्य-हेमचन्द्राभिधानकैर्जैनाचार्यैः केवलमवयवचतुष्टयात्मिकायाः परम्पराया मीमांसकपरम्परानाम्ना उल्लेखनं कृतमिति श्रूयते । भाट्टप्रस्थाने-प्रभाकरप्रस्थाने च त्रयाणामेवावयवानामङ्गीकारः श्रूयते । मुरारिमिश्रप्रस्थानस्य तु कश्चिद् ग्रन्थ एव नेपालभ्यतेऽतस्तेषां कथायास्तु अवसर एव नास्ति । वयन्तु अनुमिनुमः यत् अनन्तवीर्य-हेमचन्द्र जैनाचार्याणां पुरस्तात् काचित्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एवंविधा अघटित-घटनात्मिका व्यवस्था परम्परा वा समुपस्थिता जाता यया वाध्यमानैस्तैरवयवचतुष्टयस्य व्यवस्था परम्परा वाऽङ्गीकृता, यां व्यवस्थां परंपरां वा आश्रित्य ते चतुरवयवान् निर्दिष्टवन्तः इत्येव प्रतीयते ।

( ७ )

## (४) अवयवत्रयवादपरंपरा

अवयवत्रयस्वीकारपक्षे प्रधानतया सांख्य-मीमांसक-अद्वैतवेदान्तिनामेव परिगणनं भवितुमर्हतीति । सांख्यग्रन्थेषु अवयवचर्चा केवलं माठरवृत्तावेवोपलभ्यते । गौड़पादभाष्ये-सांख्यप्रवचनभाष्ये-वाचस्पतिमिश्रकृतायां तत्त्वकौमुद्यां तु एतेषामवयवानामुल्लेख एव न मिलति । तथापि इदमेव भवितुमर्हति यन्माठरमहोदयस्य त्रय एवावयवा अभिप्रेता भवेयुरिति यदभिप्रायेणैव लक्षणसहितानां प्रतिज्ञा-हेतु-उदाहरण भूतानामवयवत्रयाणां निर्वचनं कृतम् । एतेषां नये पक्ष एव प्रतिज्ञापदप्रतिपाद्यः । मीमांसादर्शने यद्यपि जैमिनिसूत्रेषु तथा शाबरभाष्ये अवयवचर्चायाः सर्वथा अत्यन्ताभाव एव वर्तते । तथापि कुमारिलभट्ट-पार्थसारथिमिश्र-मानमेयोदयकार श्रीनारायणभट्ट-प्रभाकर-शालिकनाथप्रभृतिभिर्मीमांसकैस्त्रय एवावयवा अङ्गीकृता इति सुनिश्चितमेतत् । कुमारिलभट्टेनापि त्रयाणामेवावयवानां सविस्तरं वर्णनं कृतम् । तेषामयमाशयः प्रतिज्ञा-हेतु-उदाहरणानि, अथवा उदाहरणोपनयनिगमनानि इमे आद्यन्तवन्तस्त्रय एवावयवा आवश्यकाः । प्रभाकर-शालिकनाथ-नारायणप्रभृतिभिरपि विद्वद्भिस्त्रयाणामेवावयवानामङ्गीकारो व्यधायि । एतेषां विवेचने एतावानेव विशेषः यदिमे अवयवानां

( ८ )

क्रमिकधारां नाङ्गीकुर्वन्ति यथा नैयायिकास्तां स्वीकुर्वन्ति ।

वेदान्तपरिभाषाकारा अपि मीमांसकमतमेवानुसरन्ति । तेषामवयवनिरूपणेऽपि प्रतिज्ञा-हेतूदाहरणानि, अथवा उदाहरणोपनय-

( ९ )

निगमनानि एते एव आद्यन्तवन्तस्त्रयोऽवयवाः स्वीकृता भवन्ति ।

धर्मकीर्त्तेः पूर्ववर्त्तिनो बौद्धाचार्या अपि पूर्वोक्तांस्त्रीनेवावयवान् स्वीकृतवन्तः । आचार्यमैत्रेयेनापि प्रतिज्ञाहेतूदाहरणस्वरूपास्त्रय एवावयवाः स्वीकृताः । दिङ्नागेनापि त्रय एवावयवाः स्वीकृताः । पक्ष-हेतु-दृष्टान्तभूता एव त्रयोऽवयवा एतेषां मते सन्ति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



## (५) अवयवद्वयवादिपरम्परा

आचार्यधर्मकीर्तिः जैनतार्किकश्च द्वावेवावयवद्वयवादिनौ स्तः। द्वयोरेतावानेव भेदः यत् प्रथमः (धर्मकीर्तिः) उदाहरणोपनयौ स्वीकरोति। अपरश्च प्रतिज्ञाहेतू इति।

धर्मकीर्त्तिः प्रतिज्ञाप्रयोगस्य असाधनांगवचनत्वेन निर्वचनं कृत्वा निग्रहस्थाने तमन्तभावयन्ति। तेषामयमाशयः यत्-पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्वैस्त्रिभिर्धर्मैः संपन्नो हेतुः साध्यसाधको भवितुमर्हति। व्याप्तिपक्षधर्मतयोरेव अनुमानाङ्गत्वेन आवश्यकत्वेन स्वीकृतत्वात् तत्र चोदाहरणस्य व्याप्तिमूलकत्वेन, हेतोरुपनयस्य वा पक्षधर्मतामूलकत्वेन स्वीकार एव समुचितः, तत्रापि क्रमिकत्वं नापेक्ष्यते नैयायिकवत्, एवं दृष्ट्या उदाहरणस्य हेतोश्च अथवा उपनयस्य प्रकारान्तरेण स्वीकारेऽपि प्रतिज्ञास्वरूपस्य पक्षप्रयोगस्य निरर्थकत्वेन एवं निगमनस्य पिष्टपेषणतुल्यत्वेन च सर्वथैवानंगीकारात्। तेषामिदं कथनमपि समीचीनमेव प्रतिभाति यद् हेतोरुदाहरणस्य वा प्रयोगकाले श्रोतुः पक्षज्ञानस्य स्वयं जायमानत्वेन प्रतिज्ञास्वरूपस्य पक्षज्ञानस्य

(१०)

अनावश्यकत्वेन अवयवत्वं नाङ्गी क्रियताम्।

जैनविद्वांसोऽनुमानसंपत्तये प्रतिज्ञाहेत्वोरेवाऽऽवश्यकतां व्याहरन्ति। यथा बौद्धविद्वांसः पक्षप्रयोगं प्रतिज्ञास्वरूपम अनावश्यकं मन्यन्ते तथैव इमे जैनतार्किकाः अपि उदाहरणस्य सर्वथैवानावश्यकतां प्रतिपादयन्ति। एतेषां नये एकविधमेव साधनं भवति तच्चाविनाभावभूतम्। अनेनैव अविनाभावभूतेन साधनेन पक्षे साध्यसिद्धिर्जायते-विपक्षे बाधकप्रमाणसत्त्वात् व्याप्तिनिश्चयोऽपि भवत्येव अतो व्याप्तिनिश्चयार्थमुदाहरणोपादानं सर्वथा अनावश्यकमेव प्रतिभाति।

अन्यच्च दृष्टान्तस्तु (उदाहरणन्तु) कश्चिदेक एव व्यक्तिविशेषो भवितुमर्हति, व्याप्तिश्च सर्वोपसंहारकत्वेन सामान्यरूपैव भविष्यति। एकैव हि सा व्याप्तिः सकलधूमसाधारिणी। अतो यदि अस्मिन् महानसादिरूपे दृष्टान्ते कदाचित् कश्चिद् विवादः समुत्पद्यते तदा तन्निवृत्त्यर्थमुदाहरणान्तरमावश्यकं स्यात्, एवं पुनस्तस्मिन्नप्युदाहरणे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यदि काचित् शंका जायेत तदा तन्निवृत्त्यर्थमुदाहरणान्तरमपेक्षितं भविष्यति, इत्येवं क्रमेणानवस्थादोषः सुस्पष्ट एवेति विभावयन्तु।

अपि च व्याप्तिस्मरणार्थं नोदाहरणस्य सार्थकत्वं संभावनीयम्। यतोऽविनाभावभूतहेतुमात्रप्रयोगेणैव व्याप्तिस्मृतेः संभवात्।

इतोऽतिरिक्तमन्यदप्यस्ति यत् पदार्थतत्त्वनिरूपणे समस्त शास्त्रकाराणां विभिन्नानि मतान्तराणि समुपलभ्यन्ते। यथा घटात्मकं दृष्टान्तं बौद्धाः कथयन्ति घटस्य क्षणिकत्वेन दृष्टान्तत्वासंभवात्। वेदान्ती कथयति घटस्य मायारूपत्वेन मिथ्यात्वान्नैव दृष्टान्तत्वम्। जैनाः समुद्गिरन्ति घटरूपो दृष्टान्तः कथञ्चित् सदस्ति कथंचिच्च असदस्ति। एवं च नास्ति कोऽपि दृष्टान्तः सर्वसम्मतस्तदा तस्य स्वीकार एव सर्वथा वृथा प्रतिभाति।

इतोऽतिरिक्तं जैनानामिदमपि कथनं वर्तते यद् यदाऽन्तर्व्याप्तेः स्वीकारस्तदा तु पक्षे एव व्याप्तिनिश्चयो भविष्यति काऽऽवश्यकता दृष्टान्तस्य। एवं यदा सर्वस्य पक्षता तदा तु दृष्टान्त एवं दुर्लभः। अतो दृष्टान्तस्य समस्तेषु अनुमानेषु अङ्गत्वं नैव भवितुमर्हति। उपनयनिगमनयोस्तूपसंहरणमात्रत्वेन दृष्टान्तवदेव सर्वथा व्यर्थता। परन्तु अव्युत्पन्नानां कृते आवश्यकतानुसारं दृष्टान्तोपनयनिगमनानामपि प्रयोगो भवितुमर्हति इति भावः।

## (६) एकावयववादिपरम्परा

दार्शनिके जगति अवयवप्रयोगकाले केवलमेक एवावयवः सर्वप्राथम्येन स्वीकृतो धर्मकीर्त्तिना। एतस्य एकावयवप्रयोगस्य व्यवस्था धर्मकीर्त्तिना विशिष्टाधिकारिणां विदुषामेव कृता। परन्तु तेषामेकमात्रहेतुप्रयोगे उदाहरणमपि समाविष्टं भवति, अतस्तेषामयं हेतुप्रयोगो नोदाहरणशून्यः, एतदर्थमयं हेतुस्वरूपोऽवयवप्रयोगोऽवयवद्वयस्य संयुक्तमेकं रूपान्तरमस्तीत्यत्र नास्ति कश्चिल्लेशतोऽपि संदेहानध्यवसायावसरः। एभिरेव प्रभावितेन वादिना देवसूरिणा जैनेन विदुषाऽपि एतस्य सर्वथा सयुक्तिकत्वेन औचित्यं प्रतिपादितम्। एतेषां देवसूरिणां हेतुप्रयोगोऽपि सर्वथा धर्मकीर्त्तितुल्य एव। परन्तु त्रिरूपसमर्थने बौद्धाः पक्षसत्त्वरक्षार्थं प्रतिज्ञाप्रतिपाद्यविषयमपि निरूपयन्ति। जैनविद्वांसस्तु त्रैरूप्यस्य सिद्धान्तमेव नाङ्गीकुर्वन्ति ते तु केवलमविनारू-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पस्य विपक्षासत्त्वस्यैव हेतोरपरिहार्यं रूपं मन्यन्ते। अतो देवसूरिणोऽनुसारं हेतुस्वरूपमेव यदाऽविनाभावरूपमस्ति तदा प्रतिज्ञा कथं तेन गम्या भविष्यति। अत एव तेषां प्रतिज्ञाप्रयोगकरणं सिद्धान्ततः आवश्यकं भवतीति विभावनीयम्। अन्यथा साध्यसन्देहस्य निरासः कथं स्यादतस्तेषामियमेवावयवपरम्परा नहि जैनसिद्धान्तानुरूपा वर्तते इति शुभम्।

(१) न्यायसूत्रम् १।१।३२-प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः।
न्यायभाष्यम्
न्यायवार्तिकः
तात्पर्यटीका
परिशुद्धिः
न्यायमंजरी प्र०
न्यायसारः प्र०
तत्त्वचिन्तामणिः-अवयवप्रकरणम्।

(२) न्यायसूत्रम्–५।२।११–अवयवविपर्यासवचनमप्राप्तकालम्।
" ५।२।१२–हीनमन्यतमेनाप्यवयवेन न्यूनम्।
" ५।२।१३–हेतूदाहरणाधिकमधिकम्।

(३) प्रशस्तपाद भाष्यम्–पृ० ५६५-अवयवाः पुनः प्रतिज्ञापदेशनिदर्शनानुसंधानप्रत्याम्नायाः।

(४) उपस्कारः पृ० सूत्रम् ६-१-२-पर-न्यायश्च··· जनकवाक्यम्
तदवयवाश्च पंच। तत्रावयवत्वम्··· ·········वाक्यत्वम्।
तानि च वाक्यानि प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि तत्र प्रतिज्ञा··· न्यायावयववाक्यम् हेतुश्च·········न्यायावयवः।
उदाहरणन्तु न्यायावयवः। उपनयश्चाविनाभाव-न्यायावयवः।
निगमनम्····· ···न्यायावयवः।
एतेषामेव प्रतिज्ञापदेशनिदर्शनानुसंधानप्रत्याम्नाया इत्यन्वर्था वैशेषिकाणां संज्ञा।

(५) माठरवृत्तिः-पृ० १३ (का० ५-पर) पंचावयवमित्यपरे। तदाह-प्रतिज्ञापदेशनिदर्शनानुसंधानप्रत्याम्नायाः।
सांख्यसूत्रम्-५-२७।
सां० प्रव० भा० पृ० १७५–

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



(६) दशवैकालिकनिर्युक्तिगाथा-पृ० ८६-६१-
प्रमाणनय तत्वालोकालंकार सू० ३।४१।४८।
स्याद्वादरत्नाकर पृ० ५६४
परीक्षामुख सू० ३।४६-५१,३।२२,३।१५
प्रमाणमीमांसा-२।१।१०-१४।
न्यायदीपिका पृ० ७७-७६-

(७) दशवै० गाथा —६२-१३६,१३७-१४८
स्याद्वाद पृ० ५६५

(८) प्रमेयरत्नमाला-सू० ३।३६। पृ० ३३-प्रतिज्ञाहेतूदाहरणोपनयभेदेन चतुरवयवम् इति मीमांसकाः।
प्रमाणमी० पृ०५२— सू० २।१।८ पर वृत्ति — प्रतिज्ञाहेतूदाहरणानीति अवयत्रमनुमानमिति सांख्याः सहोपनयेन चतुरवयवमिति मीमांसकाः।

(९) माठरवृत्तिः-पृ० १२ का पांच पर-पक्षहेतुदृष्टान्ता इति त्र्यवयवम्। प्रतिज्ञापदं पक्षपरम्।
······त्रिरूपोहेतुः। साधर्म्यवैधर्म्याभ्यां द्विविधं निदर्शम्।

(१०) न्यायरत्नाकर अनु० ५४ पर स्वयमनुमितार्थे परस्याऽप्यनुमानबुद्धिर्येन वाक्येनोत्पद्यते तद्वाक्यं साधनमित्युच्यते। तच्च वाक्यं प्रतिज्ञा-हेतुः-दृष्टान्तः-प्रयोक्तव्य इति।

परेभ्यो वाञ्छता वाच्यः पूर्वपक्षो यथोदितः।
तत्र धर्मिण मुद्दिश्य साध्यधर्मो विधीयते ॥ ५४ ॥
नियमस्तद्विपक्षाच्च कल्प्यते नाविरोधिनः। पूर्वार्ध ५५ ॥

काशिकाकार सुचरितमिश्र ने बड़ी व्यापकता के साथ यह अपनी व्याख्या वस्तुतः की है और अधिकपंचावयववादी नैयायिकों का एवं न्यून अवयववादी बौद्धों का बलपर्वक खण्डन किया है।

शास्त्रदीपिका—पृ० २३८-२४०

यस्तु प्रतिपन्नमर्थं परमनुमानेन प्रतिपिपादयिषति तेन साधनं प्रयोक्तव्यम् येन वाक्येन परस्यानुमानबुद्धिरुत्पद्यते तत् साधनमित्युच्यते।
"तच्च पञ्चतयं केचित् द्वयमन्ये वयं त्रयम्।
उदाहरणपर्यन्तं यद्वोदाहरणादिकम् ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अक्षपादीयास्तावत्-प्रतिज्ञाहेतूदाहरणोपनयनिगमनैः पंचावयवं साधनं मन्यन्ते ।
अनित्यः शब्द इति प्रतिज्ञा......तस्मादनित्यः शब्द इति निगमनम्

अयं त्वतिविस्तरो गतार्थ इति मन्वानाः सौगता द्वाऽवयवम्-उदाहरणोपनयात्मकं मन्यते । स्मर्यमाणनियमं हि लिंगं साध्य-धर्मिण्यनुसन्दधानस्य स्वयमेव लिङ्गिबुद्धिरुत्पद्यते तेन—

"यत्कृतकं तदनित्यमिति कृतकत्वस्याऽनित्यत्वेन व्याप्ति-नियमं स्मारयित्वा कृतकश्च शब्द इत्युपनयमात्रे कृते शब्दस्या-नित्यत्वमवगम्यत एवेति कृतमवयवान्तरैः ।

एवं त्वत्यन्तसाकांक्षमेव वाक्यं क्लेशगम्यार्थं भवतीति त्र्यव-यवमेव युक्तम्-अनित्यः शब्दः, कृतकत्वात्, यत्कृतकं तदनित्यं यथा घटादीत्येवमुदाहरणान्त साधनं सर्वत्र वार्तिककारः प्रयुंक्ते ।

अथवा-यत्कृतकं तदनित्यं-यथा घटादिः-कृतकश्च शब्दस्तस्मा दनित्य इत्युदाहरणप्रभृति प्रयोक्तव्यम् । एवमप्यन्यूनाधिकमेव-साधनम् । तथा च—'यत् कर्म तत् फलवद् होमोऽपि कर्म तेनापि फलवता भवितव्यम्" इत्येव सर्वत्र भाष्यकारः प्रयुङ्क्ते ।

मानमेमोदयः-पृ० ६४-६५—"प्रतिज्ञया निगमनं हेतुनोपनयस्तथा ।
गतार्थ इति कः कुर्यात् पंचावयवघोषणम् ॥

तस्मात् अवयवं ब्रूमः पौनरुक्त्या सहा वयम् ।
उदाहरणपर्यन्तं यद्वोदाहरणादिकम् ॥
तदेवं पौनरुक्त्येन तथाऽध्याहारदोषतः ।
तर्कं बौद्धमते हित्वा वयं त्र्यवयवे स्थिताः ।

प्रकरणपंचिका-पृ. २२०—"भाष्यकार लक्षणेभ्यस्त्र्यवयवानां निष्पत्ति-रेवं भवितुमर्हति"—

ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् ।
एकदेशान्तरे बुद्धिरनुमानमबाधितम्

'तत्रावाधितमिति' प्रतिज्ञा । ज्ञातसम्बन्धनियमस्येत्यनेन दृष्टान्त-वचनम् । एकदेशस्य दर्शनात् इति हेत्वभिधानम्'
तदेव त्र्यवयवं साधनम् ।

दृष्टान्तहेतुवचनयोश्च प्रयोगे क्रमनियमो नादरणीयः ।...
प्रतिज्ञानन्तरं हेतुवचनं प्रयोक्तव्यम्—पर्वतोऽग्निमान् धूमव-त्वात् इति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दृष्टान्तश्च योयो धूमवान्
धूमवांश्चायमिति हेतुवचनम् वक्तव्यम्
उपनयनिगमन व्यर्थ हैं अन्येतु…यथोदितहेतुवलासिद्धत्वादर्थस्य।

(११) वेदान्त परिभाषा-पृ. ६९—न्यायो नाम अवयवसमुदायः। अवयवाश्च त्रय एव प्रसिद्धाः। प्रतिज्ञाहेतूदाहरणरूपा :– उदाहरणोनयनिगमनरूपा वा नतु पंचावयरूपाः। अवयवत्रयेणैव व्याप्तिपक्षतयोरुपदर्शनसंभवेनाधिकावयवद्वयस्य व्यर्थत्वात्।

## समर्पणम्

येषामसीमकृपया ग्रन्थोऽयं निर्विघ्नेन समाप्तिमवाप तेषामेव श्री विश्वनाथ सदृशानां श्रीमतां गुरुवराणां पं० श्री शिवदत्तमिश्राणां चरणकमलयोर्ग्रन्थमिमं समर्पयामि। तेन च मन्ये अनाथनाथो भगवान् विश्वनाथो प्रीतो भवेदिति।

विदुषां विधेयः

श्रीज्वालाप्रसादोगौड़:

दर्शनविभागाध्यक्षः संन्यासि सं० महाविद्यालयस्य

वाराणसी।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# समर्पणम्



येषामसीमकृपया ग्रन्थोऽयं निर्विघ्नेन परिसमाप्तिमवाप,
तेषामेव श्रीविश्वनाथसदृशानां प्रातर्वरेण्यानां
श्रीमतां महामहोपाध्यायकल्पश्रीशिवदत्त-
मिश्रगुरुवराणां चरणकमलयोरेव
ग्रन्थमिमं समर्पयामि। तेनाहं
मन्ये भगवान् विश्वे
श्वरोऽपि प्रीतो
भवेदिति।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

श्रीगणेशायनमः
अथानुमानगादाधर्यां
अवयवप्रकरणम् ।



श्रीः । तच्चानुमानं परार्थं न्यायसाध्यमिति न्यायस्तदवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि निरूप्यन्ते ।

---

श्रीरस्तु। अनुमानं निरूप्य न्यायतदवयवनिरूपणं प्रतिजानीते तच्चेति । तत् । निरुक्तं अनुमानं । परार्थं । विचारदशायां मध्यस्थस्य विवादविषयसाध्यनिश्चयरूपप्रयोजनसाधनम् । न्यायसाध्यमिति । न्यायप्रयोज्यमित्यर्थः । वादिप्रयुक्तन्यायजन्यशाब्दबोधेन मध्यस्थस्य चरमकारणलिंगपरामर्शरूपानुमानजननादितिभावः ज्ञायमानलिङ्गस्यानुमानत्वेपि तद्विशेषणस्य परामर्शस्य न्यायाधीनत्वात्तद्विशिष्टस्य तथात्वमित्यवधेयम् ।

---

यत्कारुण्यकणस्पर्शान्मूकोवाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवैर्धन्यां नौमि तां वागधीश्वरीम् ॥१॥
मूढान्विवेकिनः कृत्वा लोके सर्वोपदेशिकः ।
यस्तिष्ठति च तं श्रीमच्छिवदत्तं गुरुं भजे ॥२॥
सहस्रवारं पितरौ प्रणम्य प्रणम्य च श्रीचरणे शिवस्य ।
ज्वालाप्रसादः सुविचिन्त्य चैनां गदाधरोक्तिं वितृणोति धीरः ॥३॥
तस्य न्यायावयवस्य ग्रन्थस्यैवाऽपरिष्कृताम् ।
गादाधरीं परिष्कृत्य तनोति च विलासिनीम् ॥४॥

अनुमानमितिं द्वितीयार्थो विषयित्वम्, तस्य निरूप्येत्यत्र धात्वर्थ निरूपणघटकज्ञानेऽन्वयः । निरूपणंच अनुमानविशेष्यकलक्षणादिप्रकारकशिष्यसमवेतज्ञानानुकूलोव्यापारः, आनन्तर्यं ल्यबर्थः, तच्च ध्वंसाधिकरणकालवृत्तित्वम्, तस्याऽग्रिमनिरूपणपदार्थे व्यापारेऽन्वयः, निरूपणमित्यत्र धात्वर्थः पूर्ववत्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



**अथवा अनुमानं-अनुमितिः परार्थं-मध्यस्थस्य साध्यसंशयनिवृत्तिरूपप्रयोजनसाधनम् परस्य-प्रतिवादिनोऽर्थः-संशयनिवृत्तिर्यस्मादिति-तादृशानुमितिर्वा। एतेन निरूपणप्रयोजनमुपदर्शितम्, न्यायप्रयोगद्वारा मध्यस्थानुमितेरेव न्यायज्ञानप्रयोजनत्वात् कारणत्वं, स्मरणप्रयोजकसंबन्धकथनेन प्रसंगो वा संगतिरपि दर्शिता।**

द्वितीयार्थो विषयित्वम् तस्य प्रतिज्ञायामन्वयः प्रतिज्ञा चाऽन्यद्वितीत्तरकालकर्तव्यत्वप्रकारकज्ञानानुकूलो व्यापारः वर्तमानत्वं-कृतिश्चाऽख्यातार्थः तथाचाऽनुमानविशेष्यकलक्षणादिप्रकारक''शिष्यसमवेत''ज्ञानानुकूलव्यापारध्वंसकालीनों यो न्यायतदवयवविषयकशिष्यसमवेतज्ञानानुकूल ''अनुमितिचरमकरणेत्यादिशब्दात्मक'' .व्यापारविशेष्यकस्वोत्तरकालवृत्तिकृतिजन्यत्वप्रकारकबोधानुकूलतच्चेत्यादिशब्दात्मकव्यापारानुकूलकृतिमान् मूलकार इति बोधः।

**विचारदशायामिति**। विपरीतोद्भावकपरविजिगीषया न्यायप्रयोगो विचारः। **तद्दशायामिति**। तत्प्रयोज्यपरामर्शोत्तरकाले इति यावत्। अस्य च साध्यनिश्चयेऽन्वयः। **साध्यनिश्चयरूपप्रयोजनसाधनमिति**। तथा च परार्थमित्यस्य परः ''संशयभिन्नः'' निश्चयः अर्थः-''प्रयोजनं यस्येति विग्रहः। परस्य ''मध्यस्थस्य'' अर्थः ''प्रयोजनं'' यस्मादिति वा विग्रहः। आदौ न्यायनिरूपणं-ततो न्यायज्ञानं शिष्यस्य-ततोन्यायः प्रयुज्यते तस्मान्मध्यस्थस्यानुमितिरूपं प्रयोजनं भवतीति तत्त्वम्। तथा च परार्थत्वं मध्यस्थानुमितिजनकत्वम्। मूले-साध्यपदं न जन्यत्वार्थकमित्याह। **न्यायप्रयोज्यमित्यर्थ** इति। तत्र हेतुमाह। **वादिप्रयुक्तेति**। सविशेषणे हीति न्यायेन विशेषणस्य परामर्शस्य न्यायप्रयोज्यत्वमादाय विशिष्टे तद्व्यवहारसमर्थनेपि ज्ञायमानहेतोरनुमानत्वे तस्य वास्तवं न्यायप्रयोज्यत्वं मणिकारोक्तमनुपपन्नमत आह। **अथवेति**। केवलान्वयिग्रन्थादावनुमानस्येवाऽनुमितेरपि त्रैविध्योक्तेस्तच्चेत्यस्याऽनुमित्यर्थकत्वमाह **अथवेतीतिकेचित्**। **तत्**। निरुक्तलक्षणलक्षितमिव्यर्थः। अनुमीयते इत्यनुमानमिति व्युत्पत्या भावे ल्युटोविधानादाह। **अनुमानं-अनुमितिरिति**। पूर्वोक्तार्थाऽसंभवादाह। **परार्थमिति**। विजयप्रयोजकत्वमपि दर्शयति। **परस्येति**। **एतेन**। परार्थानुमानस्य न्यायप्रयोज्यत्वकथनेन **निरूपणप्रयोजनमिति**। न्यायतदवयवस्येत्यादिः। **उपदर्शितमिति**। प्रयोजनाऽप्रदर्शने ग्रन्थश्रवणे प्रवृत्त्यनुपपत्तेरिति भावः। **मध्यस्थानुमितेरेवेति**। एवकारेण स्वार्थानुमितेर्व्यवच्छेदः। संगतिमाह। **कारणत्वमिति**। प्रयोजकत्वमित्यर्थः। तथा चानुमानस्य-अनुमितेर्वा निरूपणानन्तरं न्यायनिरूपणे प्रयोजकत्वं संगतिः। प्रयोजकत्वस्य हेतुतानन्तर्भावेऽप्याह। **स्मरणेति**। **संबन्धकथनेन**। प्रयोजकत्वरूप-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तत्र समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न न्यायः, अत्रैव वाक्येतिव्याप्तेः । 5

समस्तरूपेति । पक्षसत्वादिपंचरूपेत्यर्थः । उपनयेन पक्षसत्वस्य उदाहरणेन व्याप्तिघटकसपक्षसत्वविपक्षाऽसत्वयो-र्निगमंनेन तु अबाधितत्वाऽसत्प्रतिपक्षितत्वयोः प्रतिपादनाल्लक्षणसमन्वयः ।

---

संबन्धकथनेन । तच्च प्रथमकल्पे स्वप्रयोज्यानुमितिप्रयोजकत्वम् । स्वं० । अनुमानम् । द्वितीयकल्पे च स्वप्रयोज्यसंशयनिवृत्तिप्रयोजक "अनुमिति" प्रयोजकत्वम् । स्वं० अनुमितिः । ननु स्वभिन्नत्वे सति स्वप्रयोज्यकार्यप्रयोजकत्वरूपैककार्यकारित्वसंगतिरपि संभवति, तथा हि परामर्शभिन्नत्वे सति परामर्शप्रयोज्यकार्यप्रयोजकत्वस्य न्याये सत्वादिति चेन्न । एककार्यकारित्वं हि स्वभिन्नत्वे सति स्वाद्वारकत्वे सति स्वप्रयोज्यकार्यप्रयोजकत्वरूपम्, एवं च परामर्शद्वारीकृत्यैव न्यायस्यानुमितिप्रयोजकतया निरुक्तैककार्यकारित्वस्य न्यायेऽसंभवादिति ध्येयम् ।

मूले । तत्रेति । न्यायतदवयवयोर्मध्ये इत्यर्थः समस्तेति । समस्तरूपैः पक्षसत्वादिपञ्चरूपैरुपपन्नस्य विशिष्टस्य लिंगस्य प्रतिपादकं वाक्यमित्यर्थः । पक्षसत्वादीति । पक्षसत्वं च पक्षसंबन्धः, एतच्च धूमवानयमित्येवोपनयाकारः इति प्राचीनमताभिप्रायेण । तेनोपनयस्य व्याप्तिबोधकत्वात्तेनैव सपक्षसत्ववक्ष्यमाणविपक्षासत्वयोर्बोधनादुदाहरणानुधावनमग्रेचोदाहरणादित्रिकेऽतिव्याप्तिकथनं नासंगतमिति ध्येयम् । पक्षसत्वादीति । आदिना सपक्षसत्व-विपक्षाऽसत्वाऽबाधितत्वाऽ-सत्प्रतिपक्षितत्वानां परिग्रहः । उदाहरणेन व्याप्तिघटकसपक्षसत्वविपक्षाऽसत्त्वयोरिति । ननु सपक्षसत्वविपक्षाऽसत्वयोः कथं व्याप्तिघटकत्वमिति चेन्न । प्राचां मते साध्यवदन्यावृत्तित्वे सति साध्यसामानाधिकरण्यस्यैव व्याप्तित्वात् । तथाचोदाहरणस्य व्याप्तिबोधकत्वे तदुभयबोधकत्वमक्षतमिति भावः । निगमनेन त्विति । ननु धूमज्ञानज्ञाप्याऽबाधिताऽसत्प्रतिपक्षितवह्निमानिति निगमनवाक्याद्बोधः तत्राऽबाधितत्वमसत्प्रतिपक्षितत्वं च न वन्हेर्धर्मः किन्तु हेतोरेवेतिचेन्न । अत्राऽबाधितत्वं पक्षनिष्ठाभावाऽप्रतियोगित्वं तच्च वह्नावक्षतमेव । एवं स्वाभावव्याप्यप्रतिहेतुमत्पक्षवृत्तित्वसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभाववत्वमसत्प्रतिपक्षितत्वं तत्र वन्हौ सुलभम् । वस्तुतस्तु निगमनघटकतत्पदस्याऽबाधितत्वादिविशिष्टलिंगे लक्षणा, प्रतिज्ञाहेतुभ्यां लिंग-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



**अत्रैवेति । समस्तरूपोपपन्नं लिंगमित्यत्रैवेत्यर्थः अतिव्याप्तेरिति । इदमुपलक्षणम् । उदाहरणादित्रिकस्यापि न्यायत्वापत्तिर्द्रष्टव्या ।**

---

ज्ञानज्ञाप्यसाध्यबोधेन पुनर्निगमनतस्तादृशबोधे तात्पर्यविरहात् । तथा चाऽबाधितत्वादिकं हेतोरेव धर्म इति ध्येयम् ।

ननु पर्वतो वन्हिमान् धूमादित्यादौ बाधसत्प्रतिपक्षयोरप्रसिद्ध्या निरुक्त-हेतावबाधितत्वादिघटितपंचरूपाऽप्रसिद्धिरिति चेन्न । अबाधित्वपदेन पक्ष-निष्ठाभावाप्रतियोगिसाध्यकत्वस्य, असत्प्रतिपक्षितत्वपदेन च स्वाभावव्याप्य-प्रतिहेतुमत्त्वसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभाववत्पक्षस्यैव विवक्षितत्वात् ।

न चैवमपि घटोऽभिधेयः प्रमेयत्वादित्यादिकेवलान्वयिसाध्यके विपक्षस्य, एतद्रूपवान् एतद्रसादित्यत्र व्यतिरेकसाध्यके सपक्षस्याऽप्रसिद्ध्या सपक्षसत्व-विपक्षाऽसत्वयोरप्रसिद्धिरिति वाच्यम् । सपक्षसत्वविपक्षाऽसत्वाभ्यां व्यापक-सामानाधिकरण्यस्यैव विवक्षितत्वात् ।

**समस्तरूपोपपन्नमिति** । लिंगं पक्षसत्वादिरूपनानाधर्मवदित्याकारक-वाक्ये इत्यर्थः । न्यूनतां परिहरति । **इदमिति । न्यायत्वापत्तिरिति ।** उदाहरणादित्रिकेऽतिव्याप्तिरितिभावः[१] ननु प्रतिज्ञाहेत्वोः पक्षसत्वाद्यबो-धकतया प्रतिज्ञाहेतुघटितपंचावयवात्मकन्याये लक्षणाऽगमनेनाऽसंभवसंभवेऽति-व्याप्तिरसंगतेति चेन्न । पंचरूपोपपन्नलिंगप्रतिपत्तिजनकप्रतिज्ञाहेतूदाहरणादि-पंचावयवविषयक "यत्किंचिद्" समूहालंबनज्ञानविषयत्वमादाय लक्षण-समन्वयात् ।

स्वार्थविशिष्टं ज्ञानमित्येकत्वोक्तेर्लक्षणे एकज्ञानं निवेशयतामुपाध्यायानां मतं दर्शयति । **अनुमितीत्यादि** । "मूले" घटमानयेति वाक्येऽतिव्याप्ति-वारणाय प्रयोजकान्तम् । उपनयेऽतिव्याप्तिवारणाय चरमेति । तस्याऽनुमिति-कारणपरामर्शप्रयोजकशाब्दज्ञानजनकत्वात् । **चरमत्वं** चाऽनुमितिजनने स्वोत्तर-भाविज्ञानानपेक्षत्वम् । तथा चोपनयप्रयोज्यानुमितिकारणपरामर्शस्य स्वोत्त-रोत्पन्ननिगमनजन्याऽबाधितत्वादिज्ञानापेक्षणान्नातिव्याप्तिः । न चाऽनुमिति-चरमकारणशाब्दज्ञानजनकत्वमित्येवोच्यतां किं लिंगपरामर्शप्रयोजकेत्यनेनेति

---

१ यद्यपि तादृशशाब्दबोधप्रयोजकवाक्यपञ्चकमात्रवृत्तिसमुदायत्वोक्तौ नायंदोषः । मात्रपदोपादानात्कोवन्हिमान् कुत इत्यादिप्रश्नवाक्यानां व्युदासः । तथापि लिंगं पक्ष-वृत्ति सपक्षवृत्तीत्यादिवाक्यपञ्चकसमूहे तिव्याप्तेः । प्रतिज्ञात्वादिना वाक्यनिवेशे च प्रयोजकान्तवैयर्थ्यात् सिद्धान्तलक्षणे पर्यवसानम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



3 किन्तु अनुमितिचरमकारणलिंगपरामर्शप्रयोजकशाब्दज्ञान-जनकवाक्यं न्यायः । 2A

किन्त्विति । अनुमितीति । अनुमितिचरमकारणं यो लिंगपरामर्शः व्याप्तिप्रकारेण पक्षे यल्लिंज्ञानं तत्प्रयोजकं यच्छाब्दज्ञानं तज्जनकं वाक्यमित्यर्थः । अत्र च प्रयोजकान्तं प्रतिज्ञादिसकलावयवार्थविषयकस्य महावाक्यार्थबोधस्य तावदर्थविषयकसमूहालंबनात्मकबोधस्य वा परि-चायकमात्रं,

---

वाच्यम् । तथा सत्यसंभवापत्तेः । न्यायजन्यज्ञानस्य पक्षतावच्छेदकविशिष्टे साध्यव्याप्यवदभेदस्यैव विषयीकरणात् । नामार्थयोर्भेदान्वयस्याऽव्युत्पन्नतया पक्षे साध्यव्याप्यवैशिष्ट्यानवगाहित्वेन तादृशज्ञानस्यानुमित्यजनकत्वात् । तादृश-परामर्शप्रयोजकत्वं च तादृशपरामर्शजनकत्वम् । केचित्तु परामर्शप्रयोजकत्वं-परामर्शजनकजनकत्वम्, अन्यथाऽसंभवापत्तेः । न्यायजन्यज्ञानस्य वादिवाक्य-जन्यत्वेनाऽप्रामाण्यज्ञानास्कन्दितत्वेन परामर्शाजनकत्वादतोऽप्रामाण्यज्ञाना-नास्कन्दितविशेषणतावच्छेदकप्रकारकनिश्चयात्मकं "व्याप्तिज्ञानं" तादृश"न्याय-ज्ञानजन्यज्ञानान्तरमपेक्षणीयं तच्चाऽग्रे स्फुटीभविष्यतीति प्राहुः ।

यत्र समयबन्धेनाऽयं नाभास इत्यादिरूपकण्टकोद्धारसहित एव न्यायप्रयोगः कृतः तत्र कण्टकोद्धारवाक्येऽतिव्याप्तिवारणाय शाब्देति । तथा च तत्पद-महिम्ना तादृशपरामर्शं प्रति तज्जन्यज्ञानस्य शाब्दत्वेन प्रयोजकत्वमित्यर्थः पर्यवस्यति । कण्टकोद्धारवाक्यस्य च योग्यताज्ञानमात्रसंपादकत्वात्, योग्यता-ज्ञानस्य च शाब्दऽशाब्दसाधारणमेव हेतुत्वमिति नाति प्रसंगः । न्यायजन्य-ज्ञानस्य च प्रतिवादिपरामर्शं प्रति तादृशशाब्दत्वेन हेतुत्वमन्वयव्यतिरेकादिति ध्येयम् ।

महावाक्यार्थबोधस्येति । विशिष्टैकार्थतापन्नबोधस्येत्यर्थः । स चाऽनुषङ्ग-पक्षे धूमज्ञानज्ञाप्यवन्हिमत्पर्वताऽभिन्न-धूमव्यापकवन्हिमद-भिन्नधूमवदभिन्नवन्हिव्याप्य-धूमवदभिन्नःपर्वतोऽबाधिताऽसत्प्रतिपक्षित"धूमज्ञा नज्ञाप्य"वन्हिमत्पर्वताभिन्नः इत्याकारकः (केवलनिगमनार्थविधेयकः) अननुषङ्गपक्षे निगमनैकार्थतापन्नोय उपनयार्थस्तद्विधेयकः उदाहरणा-र्थान्वितो यो हेत्वर्थान्वितप्रतिज्ञार्थस्तदुद्देश्यको-वा बोधः अत्रेदंबोध्यम् । उदाहरणवाक्ये यो य इत्यस्य स इत्यस्य-यथा महानसमित्यस्य च तात्पर्यग्राहकत्वमात्रम् वन्हिपदस्य धूमव्यापकवन्हौ लक्षणा तद्वतोधूमवत्पदार्थे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation, Kolkata. Digitization: eGangotri.



**न तु परामर्शप्रयोजकत्वेन शाब्दज्ञानस्य लक्षणघटकता, किन्तु तावदर्थविषयकबोधत्वेनैव। अतो धूमवान्पर्वत इत्यादिवाक्यमात्रजन्याया अपि बुद्धेरुपनायकज्ञानादिविधया मानसपरामर्शप्रयोजकतया तत्रातिव्याप्तिरिति निरस्तम्।**

---

ऽभेदान्वयः। तथा च धूमव्यापकवन्हिमदभिन्नोधूमवान् उदाहरणार्थ इति। एतादृशमहावाक्यार्थबोधे च प्रतिज्ञादिपंचकस्यैव कारणतेत्याशयः। वक्ष्यमाणरीत्या तादृशबोधाऽसंभवमभिप्रेत्याह। **समूहालंवनात्मकवोधस्य वेति**। वन्हिमदभिन्नः पर्वतः-धूमज्ञानज्ञाप्योवह्निः—धूमव्यापकवन्हिमदभिन्नोधूमवान्- वन्हिव्याप्यधूमवदभिन्नःपर्वतः-धूमज्ञानज्ञाप्याऽवाधिताऽसत्प्रतिपक्षितवन्हिमदभिन्नः पर्वत इत्याकारकस्य वेत्यर्थः। **परिचायकमात्रमिति**। उपलक्षणमिति यावत्। तदेवाह **नत्विति**। नन्वेवं घटमानयेतिवाक्येऽतिव्याप्तिरत आह। **किन्त्विति**। **तावदर्थविषयकवोधत्वेनैवेति**। प्रतिज्ञार्थविषयकवोधत्वेन हेत्वर्थविषयकबोधत्वेन उदाहरणार्थविषयकवोधत्वेन-उपनयार्थविषयकवोधत्वेन-निगमनार्थविषयकवोधत्वेनेत्यर्थः एवकारेण तादृशपरामर्शप्रयोजकत्वव्यवच्छेदः। प्रयोजकत्वान्तपरित्यागे वीजमाह। **अतइति**। एतेनेति यावत्। तावदर्थविषयकवोधत्वेन निवेशादिति परमार्थः। अस्य निरस्तमित्यनेनाऽन्वयः। **उपनायकज्ञानादिविधया**। ज्ञानलक्षणासन्निकर्षविधया। **मानसपरामर्शप्रयोजकतयेति**। तद्विषयकमानसवोधे तद्ज्ञानमात्रस्य हेतुत्वादित्यर्थः।

ननु मूलोक्तलक्षणस्याऽसंभवः, तादृशशाब्दज्ञानजनकत्वस्य वाक्ये ऽसत्वात्, प्रत्युत वाक्यज्ञाने एव सत्वात्। न च तादृशशाब्दज्ञानजनकज्ञानविषयत्वं वाक्येविवक्षणीयमिति वाच्यम्। तथाप्येकदेशातिव्याप्तेर्दुर्वारत्वात्, तादृशविषयताव्यापकत्वोक्तावसंभव इत्यत आह। **तादृशेति**। प्रतिज्ञाद्यर्थविषयकेत्यर्थः। तथा च प्रतिज्ञाद्यर्थविषयकसमूहालंवनबोधं प्रति प्रतिज्ञादिवृत्तिआनुपूर्वीप्रकारकज्ञानत्वेन प्रतिज्ञादिविशेष्यकज्ञानस्य कारणता अस्ति प्रत्येकं तादृशानुपूर्वीमद्वाक्यसमुदायत्वस्य प्रतिज्ञादिसमुदायरूपन्याये सत्वाल्लक्षणसमन्वयः। **अत्रेदंवोध्यम्**। घटमानयेति वाक्येऽतिव्याप्तिवारणाय तादृशत्वं शाब्दवोधविशेषणम्। न च यादृशयादृशेतिवीप्सा किमर्थेतिवाच्यम्। तथा सति एकैककारणतामादाय प्रतिज्ञादौ न्यायैकदेशेऽतिव्याप्तेः, न्यायज्ञाने एककारणता विरहात। तात्पर्यज्ञानयोग्यताज्ञानादीनां व्यावृत्तये **शब्दज्ञानस्येति**। तत्तद्-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तादृशयत्त्किंचिच्छाब्दबोधं प्रति यादृशयादृशधर्मप्रकारकत्वेन शब्दज्ञानस्य कारणता प्रत्येकं तत्तद्धर्मावच्छिन्न वाक्यसमुदायत्वस्य-तादृशयत्किंचिच्छाब्दबोधनिरूपिता शब्दज्ञाननिष्ठा या या कारणता प्रत्येकं तत्तदवच्छेदककोटिप्रविष्टयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्व-व्यापकसमुदायत्वपर्यवसितस्य विवक्षितत्वान्नास्माकं न्यायैकदेशेऽति व्याप्तिः। तादृश धर्माश्च प्रतिज्ञादीनामानुपूर्वी विशेषा एव।

---

र्मावच्छिन्नैकवाक्याऽप्रसिद्धिरतः **प्रत्येकमिति**। तथा च प्रतिज्ञाद्यर्थविषयक यत्किंचिच्छाब्दबोधनिष्ठजन्यतानिरूपितशब्दज्ञाननिष्ठजनकता यादृशयादृशधर्म प्रकारकत्वावच्छिन्ना तादृशतादृशधर्मसमानाधिकरणसमुदायत्वं पर्यवसितम्।

अत्र पर्वतोवन्हिमानिति प्रतिज्ञाज्ञानस्याऽव्यवहितोत्तरत्वसंवन्धेन तत्तद्वर्ण-विशिष्टचरमवर्णवृत्तिधर्मप्रकारकज्ञानत्वेन हेतुत्वाद् ( वर्णानुपूर्वी एव तादृशो धर्मः स च पविशिष्टनत्व-धविशिष्टतत्व-यविशिष्टनत्व-तविशिष्टमत्व-तविशिष्टनत्व रूपः ] तदवच्छिन्नत्वं पंचवर्णस्यैवेति तादृशवाक्यगतचरमवर्णपंचकेऽति-व्याप्तिः। यद्यपि तादृशशाब्दबोधं प्रति पूर्वपूर्ववर्णविशिष्टोत्तरोत्तरवर्णत्वप्रकारक-ज्ञानस्य हेतुत्वेऽसंभव एव, तत्तदवच्छिन्नमात्रवृत्तित्वस्य न्यायगतसमुदायत्वेऽस त्वात्, उदासीनवाक्यान्तरसाधारणसमुदायत्वमादायोदासीनवाक्यघटितसमुदाये तिव्याप्तिवारणाय मात्रपदार्थान्तर्भावस्याऽऽवश्यकत्वात्। एवं चाऽसंभववारणाय तादृशयत्किंचिच्छाब्दबोधं प्रति शब्दज्ञानस्य यादृशयादृशधर्मप्रकारकत्वेन हेतुत्वं तादृशतादृशधर्मप्रकारकज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वं विवक्षणीय-मतोनातिव्याप्तिरपि। तथापि गौरवमस्त्येवातोलघुलक्षणान्तरमाह। **तादृशेति**।

**वस्तुतः** पत्वादिना घटाद्यवगाहिज्ञानस्यापि हेतुत्वानुरोधेन पूर्वपूर्ववर्णविशि-ष्टोत्तरोत्तरवर्णत्वप्रकारकज्ञानत्वेन न हेतुत्वं किन्तु अव्यवहितोत्तरत्वसंबन्धावच्छि-न्नपत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभिन्नाऽव्यवहितोत्तरत्वसंवन्धावच्छिन्ना-ऽत्वावच्छिन्नप्रकारतानिरूपितेत्यादिक्रमेण निरूप्यनिरूपकभावापन्ननत्वावच्छि-न्नविशेष्यताकज्ञानत्वेनैव प्रतिज्ञादिज्ञानस्य कारणताकल्पनमावश्यकम्, तत्र च विनिगमनाविरहेणाऽव्यवहितपूर्वत्वसंवन्धावच्छिन्ननत्वावच्छिन्नप्रकारतानिरूपित-विशेष्यत्वाभिन्नाऽव्यवहितपूर्वत्वसंवन्धावच्छिन्नाऽऽत्वावच्छिन्नप्रकारतानिरूपितेत्या दिक्रमेण पत्वावच्छिन्नविषयताकत्वस्यापि कारणतावच्छेदकतया पत्वादि रपि तादृशोधर्म इति तत्तद्धर्मावच्छिन्नसमुदायत्वं न चरमवर्णपंचक-स्येति न तत्रातिव्याप्तिः परन्तु यादृशवर्णस्यानेकधाप्रतिज्ञादिघटकत्वंतादृशैके-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पर्वतोवन्हिमानित्याकारकबोधे पर्वतोवन्हिमान् पर्वतोदहनवानित्याकारकविविधानुपूर्वीप्रकारकज्ञानानामेव हेतुतया तथात्रिधैकैकानुपूर्व्यवच्छिन्नवाक्यपंचकस्य न्यायत्वानुपपत्तिरतो यत्किंचिच्छाब्दबोधनिवेशः ।

---

कवर्णघटितप्रतिज्ञादिसमुदायेऽतिव्याप्तिदुर्वारैवेत्यतः कल्पान्तरानुसरणमिति परमगुरवः ।

तादृशयत्किंचिच्छाब्दपदं च प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थपंचविषयकसमूहालंबनपरम् । तादृशसमूहालंबनशाब्दबोधनिरूपितजनकतान्तर्गताः प्रतिज्ञादिवृत्तिश्रानुपूर्वीविषयकज्ञानत्वावच्छिन्नपंचजनकताः एव तासां प्रत्येकमवच्छेदककोटिप्रविष्टा या प्रतिज्ञादिविषयकयत्किंचिद्ज्ञानीयविषयता तदाश्रयवर्णत्वव्यापकसमुदायत्वस्य प्रतिज्ञादिपंचके सत्वाल्लक्षणसमन्वयः । तादृशसमुदायत्वस्य केवल प्रतिज्ञायां विरहान्नातिव्याप्तिरित्याशयेनाऽऽह । नास्माकमिति पूर्ववदत्रापि कल्पे घटमानयेति[1] वाक्येऽतिव्याप्तिवारणाय तादृशत्वं शाब्दबोधविशेषणम् ।

---

१. नन्वत्र लक्षणे तादृशपदेन प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयक हेतुप्रतिपाद्यविशिष्टार्थविषयक उदाहरणप्रतिपाद्यविशिष्टार्थविषयक उपनयप्रतिपाद्यविशिष्टार्थविषयक निगमनप्रतिपाद्यविशिष्टार्थविषयकसमूहालंबनयत्किंचिद्बोधनिवेशे धूमादालोकवान्पर्वतो वन्हिमान् धूमादित्यत्र हेतुवाक्याऽघटित. प्रतिज्ञोदाहरणादिचतुष्टयेऽतिव्याप्तिः, तद्वृत्तिसमुदायत्वे हेतुप्रतिपाद्यविशिष्टार्थविषयकशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतप्रतिज्ञामात्रविषयकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकत्वस्य सत्वात्, यदि च हेतुज्ञानज्ञाप्यसाध्यवत्पक्षविषयक"प्रतिज्ञाहेत्वोर्विशिष्टवैशिष्ट्यावगाहि"बोधस्तादृशलक्षणघटकस्तदा तत्रातिव्याप्तिवारणेऽपि एकन्यायघटकीभूतप्रतिज्ञाऽपरन्यायघटकीभूतहेत्वादिचतुष्टये तदुभयघटितसमुदायेऽतिव्याप्तिवारणाय "स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत्समुदायत्वं तद्भिन्नरूपविशेषणस्य" वैयर्थ्यमिति चेन्न । तादृशभिन्नत्वस्याऽत्राऽनिवेशात् । न चैवमुत्तरग्रन्थाऽसंगतिरिति वाच्यम् । प्रतिज्ञा आदिर्येषामिति व्युत्पत्त्या प्रतिज्ञापदस्य हेत्वादिपरत्वात् । हेतुरादिर्येषामितिव्युत्पत्त्या हेत्वादिपदस्योदाहरणादिपरत्वात् । भेदद्वयनिवेशे तद्ग्रंथतात्पर्यात्, उपनयनिगमनयोरपि विशिष्टवैशिष्ट्यावगाहिबोधसंभवात् । अन्यथा भेदत्रयनिवेशो बोध्य इति ध्येयम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शब्दबोधे यत्किंचित्त्वनिवेशस्य फलमाह । **पर्वतोवन्हिमानित्याकारक-बोधे** इति । वन्हिमदभिन्नः पर्वत इत्याकारकबोधे इत्यर्थः **न्यायत्वा-नुपत्तिरिति** । एकविधानुपूर्व्यवच्छिन्नवाक्यपंचकस्य विविधानुपूर्व्यवच्छिन्न-वर्णत्वव्यापकत्वाभावादिति भावः । तथा च यत्किंचित्पदेन पर्वतोवन्हिमा-नित्याद्येकैकवाक्यपंचकज्ञानाव्यवहितोत्तरजायमानस्तन्मात्रविषयकः शाब्दबोधो विवक्षणीयः । **इदमुपलक्षणम्** । हेत्वर्थादिविषयकबोधमादायाऽप्यसंभवो बोध्यः । तादृशबोधं प्रत्यपि विविधानुपूर्वीप्रकारकज्ञानानां हेतुत्वात् ।[1]

तादृशयत्किंचिद्ज्ञाननिवेशे यत्र पर्वतपदप्रतिपाद्यत्वादिरूशब्दघटितहेतुभिः प्रतिज्ञाद्यर्थविषयकानुमितिः वन्हिमदभिन्नपर्वतविषयकं ज्ञानं प्रतिज्ञार्थविषयकं पर्वता दिपदप्रतिवाद्यत्वादित्याकारिका, तत्र तादृशानुमितिनिष्ठजन्यतानिरूपितज-नकतावच्छेदकविषयताश्रयवर्णत्वव्यापकत्वस्य परामर्शविषयपर्वतधूमवन्हिपदसमु-दायत्वे सत्वात्तादृशसमुदायेऽतिव्याप्तिरिति शाब्दबोधनिवेशः, शाब्दत्वावच्छिन्न-जन्यतालाभाय ।

अत्र कारणतायां शब्दज्ञाननिष्ठत्वाऽनिवेशे तादृशयत्किंचिच्छाब्दबोधनिरू-पिता या योग्यताज्ञाननिष्ठकारणता तदवच्छेदकविषयताश्रयवर्णाऽप्रसिद्ध्याऽ-संभवःस्यादतस्तदुपात्तम्[2] ।

---

१ अथ यत्किंचित्त्वनिवेशेऽननुगम इतिचेन्न तादृशशाब्दबोधविशिष्टज्ञानविशिष्ट समुदायत्वस्य विवक्षणात् । ज्ञाने शाब्दबोधवै० व्यापकतासंबन्धेन तत्र व्याप्यतावच्छेदकसबन्धः स्वनिष्ठजन्यतानिरूपितशब्दज्ञाननिष्ठजनकतात्वरूपः, स्व-निरूपितविषयिवावच्छेद्यत्वं व्यापकतावच्छेदकसंबन्धः, समुदायत्वे ज्ञानवै० व्यापकता संबन्धेनैव । व्याप्यत्वं स्वनिरूपित''वर्णनिष्ठ''विषयतासंबन्धेन । व्यापकता च स्वरूपसंबन्धेनेति ध्येयम् ।

२ न च योग्यताज्ञानकारणताया अपि शब्दविषयकसमूहालंवनवृत्तितया ऽसंभवो दुष्परिहर एवेति वाच्यम् । शब्दत्वव्याप्यजात्यवच्छिन्नविषयित्वा-वच्छिन्नत्वस्य कारणतायां विवक्षणात् । न च तथापि यत्र ग ''वर्ण'' स्य पक्ष-त्वं क ''वर्ण'' स्य साध्यत्वं तत्रत्यन्याये ऽव्याप्तिर्दुर्वारैव, योग्यताज्ञानकारणताया अपि तादृशविषयित्वावच्छिन्नत्वेन यावदन्तर्गतत्वेन तादृशकारणतावच्छेदककोटि-प्रविष्टविषयताश्रयत्वस्य साध्यात्मकवर्णे सत्वेन तत्र न्यायगतसमुदायत्वस्याभावा-दिति वाच्यम् । शब्दज्ञाननिष्ठेत्यनेन निश्चयत्वावच्छिन्नत्वस्य कारणतायां विव-क्षणात्, तथा च योग्यताज्ञानकारणता न निश्चयत्वावच्छिन्ना किन्तु संशयसा-धारणज्ञानत्वावच्छिन्नैवेति योग्यताज्ञानकारणताव्यावृत्तिः । अथैवमपि विशिष्टवै-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation, Kolkata. Digitization: eGangotri.



शिष्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपितविशेषणतावच्छेदकप्रकारकनिश्चयत्वावच्छिन्नकारणतामादाय गगनपक्षकवर्णविशिष्टवर्णसाध्यकन्यायेऽव्याप्तिः, तादृश कारणतावच्छेदककोटिप्रविष्टविषयतायाः वर्णविशिष्टवर्णे एव सत्वेन तत्र न्यायगतसमुदायत्वस्याभावादितिचेन्न । तादृशयत्किंचिच्छाब्दबोधनिरूपितेत्यनेनशाब्दबोधनिष्ठशाब्दत्वव्याप्यजात्यवच्छिन्ननिरूपितत्वस्य विवक्षणादिति ।

केचित्तु शाब्दबोधं प्रति यथाऽऽनुपूर्वीरूपाऽऽकाङ्क्षाज्ञानं कारणं तथा एकपदार्थे अपरपदार्थवत्वरूपाया योग्यताया ज्ञानमपि कारणं तथा च पर्वतधर्मिकवन्हिमत्प्रकारकशाब्दत्वावच्छिन्नजन्यतानिरूपिता या पर्वतधर्मिकवन्हिमत्प्रकारकशानत्वरूपयोग्यताज्ञानत्वावच्छिन्नकारणता तदवच्छेदकीभूतविषयताश्रयवर्णाऽप्रसिद्ध्या संभवः अतः शब्दज्ञाननिष्ठत्वंजनकताविशेषणम् ।

न च तथापि घटशब्दोगुणः द्रव्यकर्मान्यत्वेसति सत्वादित्यादौ पक्षीभूतघटशब्दविषयकत्वघटितयोग्यताज्ञानत्वावच्छिन्नजनकताया अपि शब्द ज्ञाननिष्ठतया तदवच्छेदकीभूतयत्किंचिद्ज्ञानीयविषयताश्रयपक्षीभूतशब्दसाधारणवर्णत्वव्यापकत्वस्य न्यायगतसमुदायत्वे विरहात्तत्रत्यन्याये ऽव्याप्ति दुर्वारैवेति वाच्यम् । शब्दज्ञाननिष्ठेत्यनेनाऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नावच्छेदकताकजन्यतानिरूपितत्वस्य जनकतायां विवक्षणात् । तथा च पर्वतधर्मिकवन्हिमत्प्रकारकशब्दबोधंप्रति पर्वतो वन्हिमानित्यानुपूर्वीप्रकारकज्ञानत्वेन कारणत्वे पर्वतोदहनवान् गिरिर्वन्हिमानित्याद्यानुपूर्वीप्रकारकज्ञानोत्तरपर्वतधर्मिक वन्हिमत्प्रकारकशाब्दबोधे व्यभिचारः । तद्वारणार्थं पर्वतोवन्हिमानित्यानुपूर्वीप्रकारकज्ञानत्वाच्छिन्नकारणतानिरूपितकार्यतायां अव्यवहितोत्तरत्वसंबन्धावच्छिन्नतादृशानुपूर्वीप्रकारकज्ञाननिष्ठावच्छेदकताकत्वमवश्यं वाच्यम् । एवं चाऽव्यवहितोत्तरत्वसंबंधेन पर्वतोवन्हिमानित्यानुपुर्वीप्रकारकज्ञानविशिष्टपर्वतधर्मिकवन्हिमत्प्रकारकशाब्दबोधं प्रति पर्वतोवन्हिमानित्यानुपूर्वीप्रकारकज्ञानं कारणमिति कार्यकारणभावः । पर्वतधर्मिकवन्हिमत्प्रकारकशाब्दत्वाच्छिन्नं प्रति पर्वतधर्मिकवन्हिमत्प्रकारकयोग्यताज्ञानत्वेन कारणत्वे व्यभिचारविरहेण तत्कार्यतायामव्यवहितोत्तरत्वसंबन्धावच्छिन्नावच्छेदकताकत्वस्यानिवेशनीयतया योग्यताज्ञानत्वावच्छिन्नकारणताया लक्षणाऽघटकत्वान्नासंभवः ।

यदि च यत्रैकविधाऽनुपूर्वीज्ञानादेव प्रतिज्ञाजन्यशाब्दबोधो जायते तत्र तादृशप्रतिज्ञाज्ञानकारणतायां व्यभिचाराभावात्तत्कार्यतायामव्यवहितोत्तरत्वसंबन्धावच्छिन्नावच्छेदकताकत्वस्याऽनिवेशेन तादृशप्रतिज्ञाघटितन्याये ऽव्याप्तिरित्युच्यते, तदा पदार्थोपस्थितिद्वाराजनकतालाभायैव शब्दज्ञाननिष्ठेत्युक्तम् । तथा चाऽकांक्षाज्ञानमेव पदार्थोपस्थितिद्वारा कारणं न तु योग्यताज्ञानमिति योग्यताज्ञानकारणतामादाय न दोष इति वदन्ति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तादृशकारणतावच्छेदकीभूतप्रतिज्ञाद्यैकैकमात्रविषयकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकत्वस्य प्रतिज्ञादिघटकवर्णमात्रवृत्तिसमुदायत्वेऽपि सत्वात्प्रतिज्ञाद्येकैकावयवेऽतिव्याप्तिः, तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वाऽसत्वान्न्यायमात्रेऽसंभवोवा स्यादतोया येति । तथा च प्रत्येकवृत्तिसमुदायत्वस्य तावद्यत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वाऽव्यापकत्वान्न दोषः । न च कस्याश्चिदपिविषयताव्यक्तेस्तावज्जनकतावच्छेदकत्वाभावादुक्तलक्षणाऽसंभव इति वाच्यम् । यत्किंचिच्छाब्दनिरूपितशब्दज्ञाननिष्ठजनकतात्वव्यापकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वे तात्पर्यात् । यत्किंचिद्ज्ञाने जनकतात्वव्यापकता च स्वनिरूपितविषयत्वावच्छेद्यत्वसंबन्धेन[1] । स्वं-ज्ञानम् ।

अथ तादृशशाब्दबोधनिष्ठा या याऽव्यवहितोत्तरत्वसम्बन्धेन ज्ञानावच्छिन्नजन्यता प्रत्येकं तत्तदवच्छेदकीभूतयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वमित्यस्यैव सम्यक्त्वे किं तादृशजन्यतानिरूपितजनकतायां प्रत्येकावच्छेदकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वनिवेशेन । जन्यतायां ज्ञानावच्छिन्नत्वनिवेशाद् योग्यताज्ञानकारणतानिरूपिततज्जन्यताव्याववृत्तिरिति चेन्न । यादृशधर्मिणि यादृशधर्मस्य शाब्दबोधः एकानुपूर्वीज्ञानादेव भवति तादृशशाब्दबोधे तादृशज्ञानानन्तर्यस्य कार्यतावच्छेदककोटौ निवेशे प्रयोजनविरहेण तादृशधर्मिणि तादृशधर्मसाध्यकस्थलीयन्यायेऽव्याप्तिः स्यादिति ।

अत्र समूहालंबनशाब्दबोधनिरूपितशब्दज्ञाननिष्ठा या या कारणता तत्तत्कूटवद्यत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्व[2]निवेशे स्वरूप-

---

१ तादृशयत्किंचिच्छाब्दबोधविशिष्टसमुदायत्वम् । वै० स्वनिरूपितंजनकतात्वविशिष्टज्ञानवत्वसम्बन्धेन वै० स्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसम्बन्धेन, अवच्छेदकता च स्वीयविषयत्वावच्छेद्यत्वसम्बन्धेन "आधेयतासंबन्धेन वा" । ज्ञानवत्ता च स्वीयविषयताश्रयवर्णत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठात्वच्छेदकताकप्रतियोगिताकभेदवत्वसंबन्धेनेति परम गुरुचरणाः ।

२ अनुगमस्तु—तादृशकारणतात्वव्यापकसमुदायत्वम् । व्यापकता च स्वनिष्ठनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वच्छिन्नप्रकारतानिरूपितश्रत्वावच्छिन्नविशेष्यत्वावच्छिन्न "तादृशसंबन्धावच्छिन्न" प्रकारतीनिरूपितरत्वावच्छिन्नविशेष्यतेत्यादिक्रमेण कारणता वक्तव्या नतु . पत्वनिष्ठप्रकारतानिरूपितपनिष्ठविशेष्यत्वावच्छिन्नप्रकारतेत्यादिक्रमेण गौरवात् । तथा च पनिष्ठविशेष्यतायां जनकतावच्छेदकत्वविरहादिति ध्येयम् एवं तादृशप्रकारताव्यापकत्वमित्युक्तौ नभिन्नसमुदायेऽतिव्याप्तिर्बोध्या । तादृशी या या कारणता प्रत्येकं तत्तदवच्छेदककोटिप्रविष्टविषयताश्रयवर्णत्वसामानाधिकरण्यस्याऽन्तिमपचवर्णवृत्तिसमुदायत्वे सत्वेनाऽन्तिमपंचवर्णेऽतिव्याप्तिरतो व्यापिकेति ।

यथाश्रुतन्यायलक्षणस्यानुगमस्तु तादृशाब्दबोधविशिष्टसमुदायत्वम् वै० स्वनिष्ठजन्यतानिरूपितनिश्चयत्वावच्छिन्नकारणतात्वव्यापकत्वसंबन्धेन व्यापकताऽऽधेयतासंबन्धेन । आधेयता च स्वनिष्ठनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपिताऽवच्छेदकतानिरूपिता सती ज्ञानवृत्तिउभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छिन्नावच्छेदकतानिरूपकनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपिका या विषयतात्वावच्छिन्नावच्छेदकता तन्निरूपकवर्णनिष्ठावच्छेककतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकीभूता याऽवच्छेदकतात्वावच्छिन्न प्रतियोगिता तन्निरूपकाभाववत्वसंबन्धावच्छिन्ना ग्राह्या अभावप्रतीस्तु स्वावच्छेदकीभूततद्ज्ञानीयविषयताश्रयवर्णवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति । स्वंकारणता[1] ।

---

१ यद्वा प्रतिज्ञादिप्रतिपाद्यतद्वाद्विशिष्टार्थविषयकशाब्दबोधविशिष्टज्ञानविशिष्टसमुदायत्वं तत्पक्षसाध्यहेतुकन्यायत्वम् । ज्ञाने शब्दबोधवै०स्वनिरूपितजनकतानिष्ठभेदप्रतियोगितावच्छेदकत्वसंबन्धावछिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्व सं० । स्वनिष्ठावच्छेदकता च स्वनिरूपिताविषयतत्वावच्छिन्नत्व संबन्धावच्छिना । स्वंज्ञानम् । ज्ञानवै०स्वनिरूपितविषयताश्रयवर्णनिष्ठभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नेति ध्येयम ।

अथ यत्किंचिच्छाब्दबोधनिरूपितजनकतावच्छेदिका यत्किंचिद्ज्ञानीयवर्णनिष्ठा या या विषयता प्रत्येकं तत्तत्सामानधिकरण्यस्य 'समुदायदले" विवक्षणेनैव सामंजस्ये व्यापकत्वनिवेशो व्यर्थः । नचाऽनन्तसामानाधिकरण्यनिवेशे गौरवमिति वाच्यम् । यत्किंचिच्छाब्दबोधनिरूपितजनकतावच्छेदकीभूतयत्किंचिद्ज्ञानीयवर्णनिष्ठ विषयतात्वव्यापकत्वस्य समुदायत्वे विवक्षणीयत्वात् । व्यापकता च सामानाधिकरण्यसंबन्धेन । न च यत्किंचित्पदेन प्रतिज्ञामात्रविषयकज्ञानमादाय प्रतिज्ञायामतिव्याप्तिरिति वाच्यम् । तादृशशाब्दबोधविशिष्टसमुदायत्वस्यैव विवक्ष-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अथ तथापि तादृशयावत्कारणतायां तादृशयत्किंचिद्ज्ञानीयविषयत्वावच्छिन्नत्वमस्ति तादृशयत्किंचिद्ज्ञानीयतत्तत्कारणतानिरूपितसाक्षादवच्छेदकताश्रयप्रमीयविषयतासामानाधिकरण्यं यादृशसमुदायत्वेऽस्ति तादृशसमुदायत्वं न्यायत्वमित्युक्तौ न कुत्रापि दोषः—किं तादृशवर्णत्वव्यापकत्वनिवेशेन विषयतायां प्रमीयत्वनिवेशात् पत्वादिना घटावगाहिभ्रममादाय नाऽसम्भवः **अनुगमस्तु** तादृशकारणतात्वव्यापकसमुदायत्वम् व्यापकता च स्वसमानाधिकरणविषयतावत्त्वसंबन्धेन विषयतावत्ता च स्वनिरूपितसाक्षादवच्छेदकतावत्त्व— स्वनिरूपकनिरूपितकारणतात्वव्यापकज्ञानीयत्वैतदुभयसंबन्धावच्छिन्नाधेयत्वसम्बन्धेन ज्ञानव्यापकत्वं च स्वनिरूपितविषयत्वावच्छिन्नत्वसंबन्धनेति चेन्न प्रकृतकल्पापेक्षया एतत्कल्पस्य गुरुत्वात्।

नन्वत्र रमाधवः पूज्योरमाधवत्वादित्यादौ तादृशप्रतिज्ञाघटकरेफाऽघटिततादृशप्रतिज्ञैकदेशमाधवः पूज्य इत्यादिभागघटितहेत्वादिसमुदायेऽतिव्याप्तिः, तद्वृत्तिसमुदायत्वे रमाधवः पूज्य इत्यादित्यादिप्रतिज्ञाज्ञानाऽव्यवहितोत्तरजायमानपूज्यतावदभिन्नोमाधव इत्याकारकयत्किंचिच्छाब्दबोधनिरूपिततादृशप्रतिज्ञाविषयकज्ञानत्वावच्छिन्नजनकतावच्छेदकीभूतपूर्वोक्तप्रतिज्ञाघटकीभूत माधवः पूज्य इति भागविषयकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्व व्यापकत्वस्य सत्वात् एवं तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वस्य न्यायगतसमुदायत्वेऽसत्वेन तत्रत्यन्यायेऽ व्याप्तेश्चेति चेन्न तादृशयावत्कारणतान्तर्गतायाःतात्पर्यज्ञानकारणताया अवच्छेदकीभूतयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्व व्यापकत्वस्य तादृशसमुदायत्वेऽ भावात्, रमाधवः पूज्य इति प्रतिज्ञाघटकवर्णसमुदायस्यैव वक्तृतात्पर्यविषयतया तादृशसमुदायविषयकज्ञानस्यैव कारणत्वेन तदवच्छेदकविषयताश्रयवर्णत्वस्य तद्घटकीभूतरेफादिवर्णेपि सत्वात् तदेकदेशमात्रस्यवक्तृतात्पर्यविषयत्वे समुदायप्रयोगानुपपत्तेः, कथंचित्प्रयोगेऽपि तत्समुदायघटितहेत्वादिसमुदायस्य न्यायत्वानंगीकारात् अत एव प्रतिज्ञालक्षणप्रविष्टन्यायावय

---

णात्। वै० व्यापकतासंबन्धेन। तत्र च व्याप्यत्वं स्वनिरूपितजनकतावच्छेदकत्वस्वाव्यहितपूर्ववर्तिज्ञानीयवर्णनिष्ठविषयतात्वोभयसंबन्धेन। व्यापकता च स्वाश्रयवर्णवृत्तित्वसंबन्धेनेति चेन्न। यत्र स्थलविशेषे यन्न्यायविषयकज्ञानोत्तरं तादृशबोधो न जातस्तत्राऽव्याप्तिः, तद्ज्ञानीयविषयतायां स्वनिरूपितजनकतावच्छेदकत्वसत्वेपि स्वाव्यवहितपूर्ववर्तिज्ञानीयविषयतात्वाभावेन तादृशसमुदायत्वस्य शाब्दबोधविशिष्टत्वाभावात्। न च तवापि तत्राऽगतिरिति वाच्यम्। स्वमते न्यायान्तरजन्यबोधमादायैव तत्र लक्षणगमनादिति ध्येयम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न च वाक्यान्तरसाधारणसमुदायत्वमादाय वाक्यान्तरघटित-समुदायेऽतिव्याप्ति वाच्यम् । तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूप-कत्वेन समुदायत्वस्य विवक्षणीय त्वात् ।

---

घटकाऽवयवाघटकत्वदलसार्थक्यमुपपादयतां केषांचिन्मतदूषणसमये स्वयमेवोक्तमिति ध्येयम् ।

ननु घटवद्भूतलादिरूपोदासीनवाक्यघटितन्यायेऽतिव्याप्तिः, प्रतिज्ञादि-पंचार्थविषयक यत्किंचिच्छाब्दबोधनिरूपितप्रतिज्ञादिपंचविषयक "शब्द" ज्ञान-निष्ठकारणतावच्छेदकविषयताश्रयवर्णत्वव्यापकसमुदायत्वस्य तत्र सत्वात् । तादृ-शवाक्यघटितन्यायवृत्तिसमुदायत्वस्य तादृशवर्णत्वव्यापकत्वादित्याशंकते । नचेति । वाक्यान्तरसाधारणेति घटवद्भूतलसाधारणेत्यर्थः । वाक्यान्तर-घटितसमुदाये इति । घटवद्भूतलघटितप्रतिज्ञादिसमुदाये इत्यर्थः । तादृशसमुदायत्वनिष्ठेति तादृशयत्किंचिच्छाब्दबोधनिरूपितशब्दज्ञाननिष्ठ-सकलकारणतावच्छेदकविषयताश्रयवर्णत्वव्यापकसमुदायत्वनिष्ठेत्यर्थः न्यून-वृत्तित्वाऽनिरूपकत्वेनेति यद्यदन्यूनवृत्ति तन्निष्ठन्यूनवृत्तितानिरूपकत्वं तस्ये-तिनिरुक्तसमुदायत्वं वाक्यान्तरघटिततादृशसमुदायत्वस्य न्यूनवृत्तिइतिनिरुक्त-समुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वं वाक्यान्तरघटिततादृशसमुदायत्वस्येति-भावः । तथा च तादृशयत्किंचिच्छाब्दबोधनिरूपितशब्दज्ञाननिष्ठसकलजनक-तावच्छेदकविषयताश्रयवर्णत्वव्यापकसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकं यद्य-त्समुदायत्वं तद्भिन्नं यत्तादृशवर्णत्वव्यापकसमुदायत्वं तद्वत्वं समुदितार्थः तथाच वाक्यान्तरघटितसमुदायत्वे तद्भिन्नत्वविरहान्नातिव्याप्तिः ।

प्रतिज्ञात्वादिनिष्ठन्यूनवृत्तितानिरूपकत्वादसम्भववारणाय सकलकारणता-निवेशः । तादृशवर्णत्वसमानाधिकरणप्रतिज्ञानिष्ठसमुदायत्वनिष्ठन्यूनवृत्तिता-निरूपकत्वादसम्भववारणाय व्यापकतानिवेशः । अतएव वर्णत्वनिष्ठन्यूनवृत्ति-त्वानिरूपकत्वं वर्णत्वे नोक्तम् ।

अत्रच तादृशसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वं च यत्किंचित्तादृशसमु-दायत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वे सति तदन्यत्वम् । अवच्छेद-कताच पर्याप्त्यतिरिक्तस्वरूपसंबन्धावच्छिन्ना ग्राह्या । तेन न्यायगतसमुदाय त्वाधिकरणे वाक्यान्तरघटितन्यायवृत्तिसमुदायत्वनिष्ठपर्याप्तिसम्बन्धावच्छिन्ना-वच्छेदकताकप्रतियोगिताकभेदसत्वेऽपि न क्षतिः । सामान्यतस्तादृशसमुदाय-त्वनिवेशे पर्वतो वन्हिमान् पर्वतोदहनवानित्यादिन्यायत्ववति एकतरन्याये

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चालनीयन्यायेन वाक्यान्तरसाधारणसमुदायभेदसत्वेनातिव्याप्तिरतोयत्किंचित्वनिवेशः। असंभववारणाय तदन्यत्वनिवेशः[१]। [ स्वसमानाधिकरणयत्किंचित्तादृशसमुदायत्वावच्छिन्नभेदसामानाधिकरण्यनिवेशे तु समुदाये एकदेशभेदस्वीकारापत्तेः ]

अत्रेदं बोध्यम्। तादृशी या या कारणता तत्तदवच्छेदकीभूतयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वसमनियतसमुदायत्वनिवेशे असंभवः। तादृशी या या कारणता प्रत्येकं तत्तदवच्छेदकीभूतयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वसामनैयत्यस्य कुत्रापि समुदायत्वेऽसत्वात्, अतः सामनैयत्यघटकव्याप्यत्वं परित्यज्य वाक्यान्तरघटितसमुदायवारणाय तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वं समुदायत्वे निवेशितम्।

नच स्वावच्छेदकविषयतावत्वसंबन्धेन तादृशकारणताकूटवद्यत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वसामनैयत्यनिवेशे नासंभवः-तादृशकारणताकूटवत्वस्य न्यायघटकनिखिलवर्णेष्वेव सत्वेन तादृशवर्णत्वसामनैयत्यस्य समुदायत्वे सत्वादिति वाच्यम्। तादृशकारणताकूटवद्वाक्यान्तरविषयकन्यायविषयकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वसामनैयत्यस्य वाक्यान्तरसाधारणसमुदायत्वे सत्वेन तद्वत्यतिव्याप्तेर्दुर्वारत्वात्। न च तादृशी या या कारणता प्रत्येकं तत्तदवच्छेदकीभूतयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकत्वे सति प्रत्येकं तत्तदवच्छेदकीभूतविषयत्वाभावकूटवद्वर्णावृत्तित्वस्य विवक्षणान्नोक्तदोष इति वाच्यम्। तत्समानाकारकन्यायान्तरघटकीभूतयकिंचिद्वर्णघटितन्यायसमुदायेऽतिव्याप्तेः। न च तथापि-

१. यत्तु न्यूनवृत्तित्वं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वसमानाधिकरणत्वम्। स्वद्वयं-वाक्यान्तरघटितसमुदायत्वपरम्। नच स्वाधिकरणं यत्प्रत्येकं प्रतिज्ञादि तत्रन्यायत्वावच्छिन्नभेदसत्वेनाऽसंभवइतिवाच्यम्। स्वावच्छिन्नानुयोगिताकभेदप्रतियोगितानिवेशेन तद्वारणात्। प्रतियोगितायां चाऽनुयोगितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं निवेशनीयम्। तेन वाक्यान्तरसाधारणसमुदायत्वस्य न्यायत्वन्यूनवृत्तित्वेऽपि नासंभवः। उच्चारणभेदेन न्यायभेदादेकन्यायत्वस्याऽपरन्यायत्वनिष्ठन्यूनवृत्तितानिरूपकतयाऽसंभवइतिस्वसमानाधिकरणत्वनिवेशः। एवंच घटमानयेतिवाक्येऽतिव्याप्तिवारणाय विशेष्यदले व्यापकान्तमिति। तन्न। तत्र नियमतो वाक्यान्तरार्थविषयकन्यायार्थबोधः तत्र वाक्यान्तरघटितसमुदाये एतद्विशेषणोपादानेपि अतिव्याप्तिरशक्यसमाधाना स्यात्,एवं न्यायत्वेऽप्येककन्यायघटकवाक्यपंचकवृत्तिसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वसत्वादसंभवापातादिति ध्येयम्।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तादृशी या या कारणता प्रत्येकं तत्तदवच्छेदकीभूतयादृशयत्किंचिद्ज्ञानीयविषयता-श्रयवर्णत्वव्यापकत्वं तादृशकारणतानां प्रत्येकावच्छेदकीभूततादृशकिंचिद्ज्ञानीय-विषयत्वाभावकूटवद्वर्णावृत्तित्वं समुदायत्वे विवक्षणायमतो नोक्तदोष इति वाच्यम् । अननुगमात् ।

यद्यपि अनुगमः संभवति । तथाहि समुदायत्वविशिष्टसमुदायत्ववत्त्वम् । समुदायत्वे समुदायत्ववै०स्वतादात्म्य-स्ववृत्तित्वों यत्किंचिच्छाब्दबोधनिरूपित-तादृशजनकतात्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नत्वे सति निरूपित-त्वसम्बन्धावच्छिन्नकिंनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरू-पिता या ज्ञानवृत्त्युभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपक"निरूपितत्व-संबन्धावच्छिन्नज्ञाननिष्ठ"अवच्छेदकतानिरूपिका विषयतात्वावच्छिन्ना प्रतियोगिता तन्निरूपकाऽभाव"रूपसंबन्धावच्छिन्ननिरूपकता तन्निरूपिताधिकरणतवाद्वृत्तित्वं नास्तीतिप्रतीतिसिद्धाभावस्तदीयवृत्तित्वत्वावच्छिन्नप्रतियोगितानिरूपितधर्मिनिष्ठा-वच्छेदकतानिरूपिताऽधिकरणतानिष्ठावच्छेदकतानिरूपितावच्छेदकताविशिष्टनिरू-पकतानिरूपिताधिकरणतावत्त्वएतदुभयसंबन्धेन । निरूपकतायामवच्छेदकतावै० स्वाश्रयनिरूपकतावच्छेदकरूपावच्छिन्नत्व - स्वनिरूपिताऽवच्छिन्नत्वसम्बन्धाव-च्छिन्नाऽभावरूपसम्बन्धनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतायाः परम्परया निरूपिता या ज्ञानवृत्त्युभयावृत्तिधर्मनिष्ठावच्छेदकता तत्समानाधिकर-णाऽवच्छेदकतानिरूपकावच्छेदकतानिरूपिका या यत्किंचिन्निरूपितावच्छेदकता-वद्विषयतात्वावच्छिन्नावच्छेदकता तन्निरूपकवर्णनिष्ठावच्छेदकतानिरूपकवृत्ति-त्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेद-कतानिरूपकाऽवच्छेदकत्वनिष्ठप्रतियोगिताकाभाववत्त्वसम्बन्धावच्छिन्नत्वैतदुभ-यसम्बन्धेनेति । तथापि यत्किंचित्पदेन न्यायद्वयविषयकज्ञानमादाय न्यायद्वये पर्वतोवन्हिमानितिप्रतिज्ञाद्वयघटितहेत्वादिसुमुदाये चातिव्याप्तिर्बोध्या ।

ननु तथापि यत्र न्यायद्वयविषयकज्ञानमेव नियमतो जायते तत्र न्यायद्वयेऽ-तिव्याप्तिस्तदवस्थैवेति वाच्यम् । तत्राऽगत्या न्यायत्वस्येष्टत्वात् । एतेन स्वाश्रयी-भूतयत्किंचित्प्रतिज्ञाव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत्समुदायत्वं तदन्यत्वनि-वेशस्याऽवश्यकतया तत्र प्रतिज्ञायां यत्किंचित्वनिवेशादेवोक्तातिव्याप्तिवारण-संभवे व्यर्थं तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वविशेषणमिति निरस्तम् । उक्तन्यायद्वयेऽव्याप्तिभिया स्वाश्रयीभूतेत्यादिनिवेशस्याऽशक्यत्वात् । पर्वतो वन्हिमान् धूमाद् योयो धूमवान् सस वन्हिमान्-वन्हिव्याप्यधूमवानयं-तस्माद्वन्हि-मान्पर्वतइत्यादिसमुदायेऽतिव्याप्तिश्चाऽतः सामनैयत्यं विहाय तादृशसमुदाय-त्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वन्निवेशितं गदाधरेणेति ध्येयम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नचैवमपि व्युत्क्रमप्रयुक्तप्रतिज्ञादिसमुदायेऽतिव्याप्तिस्तदवस्थैवेति वाच्यम् । व्युत्क्रमप्रयुक्तप्रतिज्ञादिवृत्तियद्यत्समुदायत्वं तावद्भेदकूटेन निरुक्तसमुदायत्वस्य विशेषणीयत्वादितिदिक् ।

नचैवमपि एकैकन्यायघटकं यत्प्रतिज्ञादिवाक्यं तत्समुदायेऽति-व्याप्तिरितिवाच्यम् । स्वाश्रयीभूतयत्किंचित्प्रतिज्ञाद्यव्यवहितोत्तरत्वशून्य-हेत्वादिवृत्ति यद्यत्समुदायत्वं तदन्यत्वस्य समुदायत्वे विशेषणीयत्वान्न दोष इति ध्येयम् ।

---

एवमपि । तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वाऽनिरूपकत्वनिवेशेपि । व्युत्क्रमप्रयुक्तप्रतिज्ञादिसमुदाये इति । सामान्यतः साध्यवत्पक्षादिबोधकवाक्या-द्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्तियद्यत्समुदायत्वं तादृशसमुदायत्ववतीत्यर्थः । तेन तत्र प्रतिज्ञाव्यवहाराभावेपि न क्षतिः । अतिव्याप्तिस्तदवस्थैवेति । व्युत्क्रमप्रयुक्त-प्रतिज्ञादिवृत्तिसमुदायत्वे तादृशवर्णत्वव्यापकत्वस्य तादृशन्यूनवृत्तित्वाऽनिरूपक-त्वस्य च सत्त्वादिति भावः । कथायामाकांक्षाक्रमेणाऽभिधानमितिमतेऽलक्ष्यत्वं स्फुटमेवेति हृदयम् । तावद्भेदकूटेनेति । सामान्यतः प्रतिज्ञाद्यव्यवहितोत्तरत्व-शून्यहेत्वादिवृत्तियद्यत्समुदायत्वं तदन्यत्वेनेत्यर्थः । अग्रे चाऽत्रैव प्रतिज्ञायां स्वा-श्रयत्वनिवेशोऽधिकः । प्रतिज्ञापदं च तत्समानानुपूर्वीकवाक्यपरम् । अव्यावर्त्तक पदार्थभेदाऽनिवेशलाभाय समुदायत्वमिति ।

दिगिति । एकैकन्यायघटकप्रतिज्ञादिवाक्यसमुदायेऽतिव्याप्तिवारणायाऽऽव-श्यकस्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्येत्यादिविशेषणेनैव व्युत्क्रमप्रयुक्त-प्रतिज्ञादिपंचकेऽतिव्याप्तिवारणसंभवान्निरुक्तसमुदायत्वे एतादृशसमुदायत्वभेद-निवेशो व्यर्थ एवेति ध्येयम् ।

आशंकते । नचेति । एवमपि । व्युत्क्रमप्रयुक्तप्रतिज्ञादिवृत्तियद्यत्समुदायत्वं तदन्यत्वनिवेशेपि । यत्रैकन्यायघटकप्रतिज्ञा-न्यायान्तरघटकं हेत्वादिचतुष्टयम्, एवमेकन्यायघटकप्रतिज्ञाहेतुवाक्यद्वयमपरन्यायघटकवाक्यत्रयं— एवमेकन्याय घटकप्रतिज्ञादिवाक्यत्रयं अपरन्यायघटकवाक्यद्वयं—एवमेकन्यायघटकवाक्यचतुष्टयं अपरन्यायघटकनिगमनवाक्यमितिरीत्या तत्तद्वाक्यवृत्तिसमुदायत्वमादाय तद्यत्पंचकेऽतिव्याप्तिर्बोध्या । समुदायत्वस्येति । प्रतिज्ञाद्यर्थविषयकशाब्द-बोधनिरूपिता शब्दज्ञाननिष्ठा या या कारणता प्रत्येकं तत्तदवच्छेदककोटिप्रविष्ट-यत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वस्येत्यर्थः । इदंचाव्यावर्त्तक

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भेदानिवेशलाभाय। स्वाश्रयीभूतेति। स्वं-समुदायत्वम्। इदंचाऽसंभववारणाय। समानाकारकप्रतिज्ञाद्वयघटितहेत्वादिसमुदायेऽतिव्याप्तिवारणाय यत्किंचिदिति। विशेषणीयत्वादिति। तथाच स्वाश्रयीभूतयत्किंचित्प्रतिज्ञाऽव्यवहितोत्तरत्वशून्यहेतुवृत्तिसमुदायत्व-स्वाश्रयीभूतयत्किंचिद्धेत्वव्यवहितोत्तरत्वशून्योदाहरणवृत्तिसमुदायत्व- स्वाश्रयीभूतयत्किंचिदुदाहरणाऽव्यवहितोत्तरत्वशून्योपनयवृत्तिसमुदायत्व-एवं स्वाश्रयीभूतयत्किंचिदुपनयाऽव्यवहितोत्तरत्वशून्यनिगमनवृत्तिसमुदायत्वएतद्भेदकूटस्य समुदायत्वे विशेषणीयत्वादित्यर्थः। तथाच निरुक्तसमुदायत्वे समुदायत्वविशिष्टान्यत्वं निवेशनीयम्। समुदायत्ववै०स्वतादात्म्य स्वाश्रयीभूतयत्किंचित्प्रतिज्ञाऽव्यवहितोत्तरत्वशून्यहेतुवृत्तित्व-स्वाश्रयीभूतयत्किंचिद्धेत्वव्यवहितोतरत्वशून्योदाहरणवृत्तित्व-स्वाश्रयीभूतयत्किंचिदुदाहरणाव्यवहितोत्तरत्वशून्योपनयवृत्तित्व-स्वाश्रयीभूतयत्किंचिदुपनयाव्यवहितोत्तरत्वशून्यनिगमन-वृत्तित्वान्यतम एतदुभयसंबन्धेनेति[1]। अत्र स्वपदेन समुदायत्वान्तरमादायाऽसंभववारणाय स्वतादात्म्यनिवेशः। एवं हेतुवृत्तित्वान्ताऽनिवेशे धूमाद् यो धूमवान् स वन्हिमान् वन्हिव्याप्यधूमवानयं तस्माद्वन्हिमान्,पर्वतोवन्हिमानितिवाक्यसमुदायेऽतिव्याप्तिःस्यात्। एवमन्येषामपि सार्थक्यंबोध्यम्।

नचाऽत्र न्यायवृत्तिसमुदायत्वस्यापि स्वाश्रयीभूतयत्किंचित्प्रतिज्ञाऽव्यवहितोत्तरत्वशून्यहेतुघटकद्वितीयादिवर्णवृत्तित्वेन तदन्यत्वस्य तत्राऽसत्वेनाऽसंभव इति वाच्यम्। स्वाश्रयीभूतप्रतिज्ञाव्यवहितोत्तरत्वशून्यत्वाऽनतिरिक्तवृत्तियद्धेतुत्वं तत्समानाधिकरणं यद्यत्समुदायत्वं तदन्यत्वस्य विवक्षणात्। इत्थं च स्वाश्रयीभूतयत्किंचित्प्रतिज्ञेत्यत्र प्रतिज्ञापदानुक्तौ धूमाद्-यो यो धूमवान् सस वन्हिमान्-वन्हिव्याप्यधूमवानयं-तस्माद् वन्हिमान्-पर्वतो वन्हिमानितिव्युत्क्रमप्रयुक्तवाक्यपंचकेऽतिव्याप्तिः,तद्वृत्तिसमुदायत्वसमानाधिकरणहेतुत्वस्य स्वाश्रयीभूतधकारादिवर्णाव्यवहितोत्तरवृत्तित्वेन स्वाश्रयीभूताऽव्यवहितोत्तरत्वशून्यत्वाऽनतिरिक्तवृत्तित्वाभावेन स्वपदेन तादृशसमुदायत्वस्योपादानाऽसम्भवात्,स्वपदोपात्तसमुदायान्तरभेदस्य तत्र सत्वात्। प्रतिज्ञापदोपादाने तु स्वपदेन तस्योपादानसंभवान्न तत्राऽतिव्याप्तिरिति।

नच तथाप्यसंभवः, पर्वतो वन्हिमान् धूमादित्यादिन्यायवृत्तिसमुदायत्वे स्वाश्रयीभूतप्रतिज्ञात्वाश्रयपकाररूपयत्किंचित्प्रतिज्ञाऽव्यवहितोत्तरत्वशून्यत्वस्य हेतौ सत्वेन तद्वृत्तिसमुदायत्वभेदस्य निरुक्तसमदायत्वेऽसत्वादितिवाच्यम्। स्वसमानाधिकरणप्रतिज्ञात्वपर्याप्त्य"नुयोगिता"वच्छेदकयत्किंचिद्धर्मावच्छिन्नाव्यवहितोत्त-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रत्वशून्यहेत्वादिवृत्तिसमुदायत्वभेदस्य तादृशसमुदायत्वविशेषणान्नोक्ताऽसम्भव इतिध्येयम् ।

ननु तथापि जिज्ञासाद्वाराप्रयुक्ते पंचावयवात्मकन्यायेऽव्याप्तिः,तद्वृत्तिसमुदायत्वसमानाधिकरणहेतुत्वस्य स्वाश्रयीभूतप्रतिज्ञाऽव्यवहितोत्तरत्वशून्यत्वाऽनतिरिक्तवृत्तितया स्वपदेनोपादानसंभवात्,तद्भेदस्य तत्राऽसत्वादिति वाच्यम् । स्वप्रयोज्यजिज्ञासाप्रयोज्यत्व-स्वाव्यवहितोत्तरत्वैतदन्यतरसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताक''स्वाश्रयीभूत''प्रतिज्ञावद्भेदव्याप्यहेतुत्वसमानाधिकरणसमुदायत्वभेदे तात्पर्यात् । एवं हेत्वव्यहितोत्तरत्वशून्यत्वादिकं निर्वाच्यम्[1] ।

अथात्र नञ्द्वयोपादानं किमर्थम् । स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वविशिष्टसमुदायत्वस्यैव सम्यक्त्वादिति चेन्न । अनुयोगिनि स्वत्वान्तर्भावेणाऽननुगमापातात् । नञ्द्वयान्तर्भावे तु प्रतियोगिनि स्वत्वान्तर्भावान्नाननुगम-इति ध्येयम् । नव्यास्तु एकन्यायस्य प्रतिज्ञाहेतू-अन्यस्य हेतूदाहरणे-अपरस्योदाहरणोपनयौ-अन्यस्योपनयनिगमने इत्यष्टावयवसमुदायेऽतिव्याप्तिवारणाय स्वाश्रयप्रतिज्ञोत्तरहेतुवृत्तित्वे सतीत्याद्यपहाय नञ्द्वयप्रवेश इत्याहुः । तच्चिन्त्यम् ।

---

१. केचित्तु स्वाश्रयोत्तरवर्तिस्वानाश्रयतत्पुरुषप्रयुक्तशब्दानुत्तरत्व, स्वाश्रयप्रतिज्ञोत्तरत्वोभयाभावविशिष्टं यद्धेतुवृत्तिसमुदायत्वं तद्भिन्नं सत्, एवं तादृशशब्दानुत्तरत्व-स्वाश्रयहेतूत्तरत्वोभयाभावविशिष्टोदाहरणवृत्तिसमुदायत्वभिन्नं''एवमुदाहरणोपनयाऽव्यवहितोत्तरत्वशून्यवृत्तिसमुदायत्वभिन्नत्वं निरुच्य तादृशसमुदायत्व भिन्नं''यत्समुदायत्वं तस्य स्वाश्रयीभूतेत्यादिना विवक्षणान्नाव्याप्तिः । तेनद्वित्रिक्षणसाधारणाऽव्यवहितोत्तरत्वनिवेशे यत्र प्रतिज्ञाप्रयोगानन्तरं दण्डादिविलंबे हेत्वादि प्रयोगस्तत्र नाव्याप्तिरित्याहुः ।

नचैवं यत्र प्रतिज्ञाप्रयोगानन्तरं घटपदप्रयोगः ततो हेत्वादिप्रयोगस्तादृशहेत्वादिघटितन्यायेऽव्याप्तिरिति वाच्यम् । तादृशहेत्वादिघटितप्रतिज्ञादिपंचकसमुदायस्य न्यायत्वानभ्युपगमात् । यत्र प्रतिज्ञाप्रयोगानन्तरं नोदासीनप्रयोगः किन्तु हेत्वादिप्रयोगस्तत्रैव न्यायत्वस्वीकारात् । एतन्मते प्रतिज्ञाप्रयोगानन्तरं यत्र दण्डादिविलंबेन हेत्वादिप्रयोगस्तत्रहेत्वादिघटितन्यायस्याप्यलक्ष्यतयैवेतिध्येयम् ।

वस्तुतोऽत्राऽव्यवहितोत्तरत्वं न स्वाधिकरणक्षणध्वंसाधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वम् । येन जिज्ञासाप्रयुक्तन्यायेऽव्याप्तिः स्यात्,किन्तु प्रतिज्ञोत्तरं यादृशयादृशक्षणव्यवधानेऽपि हेत्वादिप्रयोगे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अत्र तत्तत्समुदायत्वभेदानां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वेन न लक्षणघटकता प्रतियोगिनामानन्त्येनाऽनन्तभेदनिवेशे गौरवात्, किन्तु स्वतादात्म्य-स्वाश्रयीभूतप्रतिज्ञानिरुक्ताऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदव्याप्यहेतुत्वसामानाधिकरण्योभयसंबन्धावच्छिन्नसमुदायत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्व-स्वतादात्म्य-स्वाश्रयीभूतहेतुनिष्ठतादृशसंबन्धावच्छिन्नाऽवच्छेदकताकप्रतियोगिताकभेदव्याप्योदाहरणत्वसामानाधिकरण्योभयसंबन्धावच्छिन्नसमुदायत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्व-स्वतादात्म्य-स्वाश्रयीभूतोदाहरणनिष्ठतादृशसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदव्याप्योपनयत्वसामानाधिकरण्योभयसंबन्धावच्छिन्नसमुदायत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्व-स्वतादात्म्य-स्वाश्रयीभूतोपनयनिष्ठतादृशसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदव्याप्यनिगमनत्वसामानाधिकरण्योभयसंबन्धावच्छिन्नसमुदायत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदचतुष्टयानां अनुगतरूपावच्छिन्नप्रतियोगिताकानां तत्तद्व्यक्तित्वेन निवेशः, नतु अननुगतरूपावच्छिन्नप्रतियोगिताकभेदत्वेन निवेशो गौरवात्[१]।

---

न्यायव्यवहारोऽनुभवसिद्धस्तस्यैव क्षणत्वात्,तत्तत्क्षणभिन्नत्वस्यैव शून्यत्वान्तेन-विवक्षणात्। तत्त्वंच स्वाधिकरणसमयध्वंसाधिकरणत्व-स्वाधिकरणत्वएतदन्यतरवत्त्वेसति स्वाधिकरणसमयध्वंसाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वादिरूपं यथायथमूह्यमितिसंक्षेपः।

अत्र लक्षणे पंचपुरुषप्रयुक्तक्रमिकपंचावयवघटितसमुदायेऽतिव्याप्तिवारणाय एकत्ववदन्यत्वमपि समुदायत्वे विशेषणीयम्। एकत्ववत्ता च स्वाश्रयसमवेतकृतिप्रयोज्यशब्दवृत्तित्व-स्वानाश्रयसमवेतकृतिप्रयोज्यशब्दवृत्तित्वोभयसं १।

अथवा स्वाश्रयीभूतप्रतिज्ञाव्यवहितोत्तरत्वशून्येत्यत्रप्रतिज्ञाऽव्यवहितोत्तरत्वं प्रतिज्ञावत्वम्। प्रतिज्ञावत्ता च स्वोत्तरत्व-स्वोच्चारकपुरुषोच्चरितत्व-स्वोत्तरवाक्यवदन्यत्वेतत्त्रितयसबन्धेन। वाक्यवत्ता च स्वोत्तरत्व-स्वोच्चारकपुरुषोच्चरितत्वोभयसंबन्धेन। एवंच न कोपि दोष इति ध्येयम्।

१. एतेन निरुक्तसंबन्धावच्छिन्ननिरुक्तरूपावच्छिन्नप्रतियोगिताकत्वविशिष्टभेदचतुष्टयनिवेशापेक्षया स्वतादात्म्य-स्वाश्रयप्रतिज्ञाऽव्यवहितोत्तरहेतुवृत्तित्व,स्वाश्रयहेत्वव्यवहितोत्तरोदाहरणवृत्तित्व,स्वाश्रयोदाहरणाऽव्यवहितोत्तरोपनयवृत्तित्व, स्वाश्रयोपनयाव्यवहितोत्तरनिगमनवृत्तित्व एतत्पंचसंबन्धेन, समुदायत्ववत्त्वनिवेशे लाघवं किं नन्द्वयघटितभेदचतुष्टयनिवेशेनेत्यपि निरस्तम्। तत्तद्व्यक्तित्वेन भेदचतुष्टयनिवेशापेक्षया निरुक्तपंचसंबन्धेन समुदायत्ववत्वनिवेशस्याऽतिगुरुत्वादिति ध्येयम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अथ नानान्यायघटकप्रतिज्ञाद्येकवाक्यवृत्तिसमुदायत्वस्य प्रकृतन्यायनिष्ठसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वविरहेणातिप्रसंग एव नास्ति किमर्थं स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्येत्यादिनिवेशः। नचैवं विनिगमनाविरहेण नानान्यायघटकप्रतिज्ञाद्येकैकवाक्यवृत्तिसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वस्यैव प्रकृत न्यायत्वे सत्वादसंभवः,अतः स्वाश्रयीभूतप्रतिज्ञाद्यव्यहितोत्तरत्वशून्यहेत्वादि वृत्ति यद्यत्समुदायत्वं तदन्यत्वविशिष्टसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वनिवेशनमावश्यकमिति वाच्यम्। तथापि तत्राऽतिव्याप्तिकथनाऽसंगतेरितिचेत्-सत्यम्। तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वनिवेशेऽसंभवः,स्वातिरिक्तं यन्न्यायत्वं तन्निष्ठन्यूनवृत्तितानिरूपकत्वस्यैव स्वस्मिन् सत्वादतो न्यूनवृत्तित्वं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वसामानाधिकरण्यं वाच्यम्। एवंच स्वातिरिक्तन्यायत्वे स्वसामानाधिकरण्यविरहेण न्यूनवृत्तित्वविरहान्नासंभवः। तथाच स्वावच्छिन्नभेदसामानाधिकरण्य-स्वसामानाधिकरण्योभयसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंवन्धेन तादृशसमुदायत्ववत्त्वं न्यूनवृत्तित्वानिरूपकत्वं पर्यवसितम्। अथवा प्रकृतन्यायत्वे नानान्यायघटकप्रतिज्ञाद्येकैकसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वसत्वेऽपि नाऽसंभवः। एवंच तादृशसमुदायेऽतिप्रसंगवारकतयैव स्वाश्रयीभूतेत्यादि निवेशसार्थक्यम्।

केचितु न्यूनवृत्तित्वमत्र व्याप्यतारूपमेव विवक्षणीयम्। स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसहितसामानाधिकरण्यरूपस्य तस्य विवक्षणे न्यायत्वरूपसमुदात्वस्य नानान्यायघटकप्रतिज्ञादिपंचकसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वेन न्यायमात्रेऽसंभवापत्तेः। तथाच न्यायनिष्ठसमुदायत्वस्यननान्यायघटकप्रतिज्ञादिपंचकसमुदात्वव्याप्यत्वाभावात्तादृशविशेषणाऽनपायादतिव्याप्तिसंगतिः।

नचाऽसंभववारणायाऽनिरूपकत्वकुक्षिप्रविष्टसमुदायत्वमेव तादृशभेदकूटैर्निवेश्यतां,न्यायगतसमुदायत्वस्य नानान्यायघटकप्रतिज्ञादिपंचकसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वेऽपि तादृशप्रतिज्ञादिपंचकसमुदायत्वस्य तादृशभेदकूटवत्वविरहान्नाऽसंभवः। नवा नानान्यायघटकप्रतिज्ञादिपंचकसमुदायेऽतिव्याप्तिः,तादृशसमुदायत्वस्य तादृशभेदकूटवन्न्यायवृत्तिसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वात्। व्याप्यत्वरूपन्यूनवृत्तित्वं निवेश्य पुनरतिव्याप्तिवारणार्थमनुयोगिनि भेदकूटनिवेशस्य प्रक्षालनाद्धीतिन्यायेन हेयत्वादिति-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



5 प्रतिज्ञादिपंचवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते। तेन च विशिष्टवैशिष्टयावगाहिमानान्तरमुत्त्थाप्यते। तेन च चरमः परामर्श उत्पाद्यते इति न्यायजन्यशाब्दज्ञानस्य परामर्शप्रयोजकता। 43

न्यायजन्यबोधस्य परामर्शप्रयोजकतां संगमयति। प्रतिज्ञादीति। एकवाक्यतयेति। विशेषणे तृतीया। तथाचैकवाक्यतापन्नै

---

वाच्यम्। प्रतियोगिकुक्षौ भेदकूटनिवेशेऽपि समानाकारकन्यायान्तरवृत्तिसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वस्य प्रकृतन्यायत्वे सत्वेनाऽसंभववारणाय न्यूनवृत्तित्वस्य सामानाधिकरण्यघटितताध्रौव्ये न्यायसमुदायत्वासमानाधिकरणसमुदायत्ववति व्युत्क्रमप्रयुक्तप्रतिज्ञादिसमुदायेऽतिव्याप्तिवारणायानुयोगिन्यपि भेदकूटनिवेशस्याऽऽवश्यकत्वात्।

नच तथापि अनुयोगिनि व्युत्क्रमप्रतिज्ञादिवृत्तिसमुदायत्वभेदाः,प्रतियोगिनि च नानान्यायघटकप्रतिज्ञादिवृत्तिसमुदायत्वभेदाः,निवेश्यन्ताम्, त्वन्मतेऽनुयोगिन्येव,मम तु अनुयोगिनि एकविधाः-प्रतियोगिनि चाऽन्यविधा भेदा इति विभागेन निवेशः,अत उभयत्र तुल्यनिवेशेन न गौरवमपीति वाच्यम्। तावतापि अनुयोगिनि भेदकूटनिवेशापेक्षया प्रतियोगिकुक्षौ निवेशे तावत्सु प्रतियोगितावच्छेदकत्वमावश्यकमिति गौरवस्य जागरूकत्वात्। तस्माद्व्याप्यत्वमेव न्यूनवृत्तित्वम्। एवंचाऽतिव्याप्तिवारणायाऽनुयोगिनि भेदकूटनिवेश आवश्यक इति प्राहुः।

अथ एकैकन्यायघटकप्रतिज्ञाद्येकैकवाक्यघटितसमुदायत्वस्य स्वव्यभिचारित्व-स्वसामानाधिकरण्योभयसंबन्धेन तादृशसमुदायत्वविशिष्टान्यत्वरूपतादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वविरहादेवाऽतिव्याप्तिवारणसंभवे व्यर्थं स्वाश्रयप्रतिज्ञाद्यव्यवहितोत्तरत्वादिविशेषणम्। नच न्यायत्वरूपसमुदायत्वस्यापि नानान्यायघटकप्रतिज्ञादिपंचगततादृशसमुदायत्वनिष्ठसामानाधिकरण्यघटितन्यूनवृत्तितानिरूपकत्वादसंभव इति वाच्यम्। सामानाधिकरण्यमपहाय व्यापकत्वस्य निवेशनीयत्वादितिचेन्न। तथासति नानान्यायघटकप्रतिज्ञादिपंचगतसमुदायत्वेऽव्यापकत्वघटितन्यूनवृत्तित्वानिरूपकत्वस्याऽक्षततया तादृशसमुदायेऽतिव्याप्तिरतः स्वाश्रयीभूतप्रतिज्ञेत्यादिविशेषणम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रित्यर्थः। एकवाक्यत्वं च विशिष्टैकार्थप्रतिपादकत्वम्, तदुत्थाप्याऽऽकांक्षानिवर्त्तकत्वं-तन्निवर्त्तनीयाऽऽकांक्षोत्थापकत्वाऽन्यतरवत्त्वं वा। तेन पंचवाक्यजन्यमहावाक्यार्थबोधाऽसंभवेऽपि न क्षतिः। स्वार्थविशिष्टज्ञानं। तत्तद्वाक्यार्थविषयकज्ञानं। तच्च समूहालंबनमन्यथा वेत्यन्यदेतत्। विशिष्टवैशिष्ट्यावगाहिमानान्तरं। विशिष्टवैशिष्ट्यबोधात्मकपरामर्शजनकं मनः। उत्थाप्यते। स्वात्मकसहकारिसंपन्नीक्रियते। तेन तथाविधेन मनसा। परामर्श उत्पाद्यते इत्युपाध्यायः।

अत्र च तदेव ज्ञानं परामर्शरूपं उपनयार्थविषयकत्वादित्याक्षिप्य उपनयस्य व्याप्त्यंशे न तात्पर्यं, तथासति न्यायजन्यबोधे उदाहरणार्थतया उपनयार्थतया च व्याप्तिभाने पौनरुक्त्यं स्यात् किन्तु पक्षधर्मत्वमेवोपनयेन विवक्षितम्। तथाचोदाहरणार्थव्याप्तेरुपनयार्थपक्षधर्मतायाश्च विशृंखलमेव भानमिति न न्यायजन्यबोधस्य व्याप्तिविशिष्टवैशिष्ट्यावगाहिता। व्याप्यः पक्षे वर्त्तते न वा इत्याकांक्षानिवर्त्तनानुरोधेनैव वन्हिव्याप्यादिपदघटितमुपनयवाक्यं प्रयुज्यत इति स एव समाहितवान्।

---

तदुत्थाप्येति। प्रतिज्ञानिगमनयोः संग्रहाय प्रतीकद्वयम्। तेन। द्वितीयकल्पानुसरणेन। न्यायार्थबोधपरामर्शयोरन्तराज्ञानाऽभावाद्विशिष्टेत्याद्यसंगतिरतो व्याचष्टे। विशिष्टेति। मीयते अनेनेतिव्युत्पत्तिलब्धज्ञानकरणघटकज्ञानेविशिष्टवैशिष्ट्यावगाहीत्यस्याऽभेदेनाऽन्वयाद्विशिष्टवैशिष्ट्यावगाह्यभिन्नज्ञानकरणमित्यर्थलाभः। तच्च करणं न्यायजन्यबोधः। करणान्तरं मनइत्यर्थः। उत्थाप्यते इत्यस्य जन्यते इति नार्थो, मनसोनित्यत्वादतआह। स्वात्मकेति। स्वं-न्यायजन्यशाब्दज्ञानं। तेनेतितत्पदस्य केवलमनःपरामर्शकत्वेऽसंगतिः, तस्य परामर्शानुत्पादकत्वादतआह। तथाविधेनेति। तादृशविशिष्टज्ञानसहितेनेत्यर्थः। तदेवज्ञानं। तत्तद्वाक्यार्थविषयकज्ञानमेव। तर्हि तथोपनयः कथं प्रयुज्यतेइत्यतआह। व्याप्यःपक्षेइति। स एव। उपाध्यायएव।

उपाध्यायमतेऽस्वरसं दर्शयति। अत्रेदं चिन्त्यते इत्यादिना। आकांक्षितं। जिज्ञासितं। तादृशाकांक्षां। वन्हिव्याप्यः पर्वतेनवेत्याकांक्षां। तथाविधबोधे। व्याप्तिविशिष्टविषयकबोधे। एवकारेण शुद्धहेतुतावच्छेदकावच्छिन्ने पक्षधर्मत्वस्य व्यावृत्तिः। तद्भानात् व्याप्तिभानात्। ननु अवान्तरवाक्यार्थबोधस्य परामर्शरूपत्वे तत एवाऽनुमित्युपपत्तौ परामर्शान्तरस्वीकारो व्यर्थ इत्यतआह। अवान्तरवाक्यार्थधिय इति। तावत्पर्यन्तं। निगमनजन्याऽबाधितत्वादिप्रतिपत्तिपर्यन्तं। तदसत्त्वेनेति। उपनयवाक्यजन्यव्याप्तिविशिष्टवैशिष्ट्यावगाहि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अत्रेदं चिन्त्यते। यदि व्याप्तिविशिष्टे पक्षधर्मत्वमेवाऽऽकांक्षितं तदा व्याप्तिविशिष्टविषयक एव बोधस्तादृशाकांक्षां निवर्त्तयिष्यतीति तथाविध-बोधे एवोपनयतात्पर्यमावश्यकम्। न चैवमपि आकांक्षानिवृत्तये अवान्तरवाक्यार्थबोधस्य व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वोपगमेऽपि न्यायजन्यमहावाक्यार्थबोधे उपनयाद्व्याप्तिभानं नोपेयते, उदाहरणादेव-तद्भानात्। अवान्तरवाक्यार्थधियः परामर्शरूपत्वेऽपि निगमनजन्याऽ-बाधितत्वादिप्रतिपत्तेरनुमितावपेक्षितत्वात्तावत्पर्यन्तं तदसत्वेन परामर्शा-न्तरस्याऽपेक्षेतिवाच्यम्। अवान्तरवाक्यार्थबोधे व्याप्तिभानानुरोधेन तदंशेप्युपनयतात्पयकल्पनाया आवश्यकत्वे महावाक्यार्थबोधे तद्भा-नेऽपि बाधकाभावादिति।

न्यायजन्यज्ञानस्य वादिवाक्यजन्यत्वेनाऽप्रामाण्यशंकाकवलिततयाऽ-नुमितिजननायोग्यतया परामर्शान्तरस्वीकार इति मिश्राः।

नव्यास्तु पक्षांशे व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिज्ञानमेवाऽनुमिति-हेतुः। नतु व्याप्याऽभिन्नहेतुमदभिन्नज्ञानम्। तादृशविशिष्टवैशिष्ट्या-वगाहिता च न न्यायजन्यशाब्दबुद्धेः, नामार्थयोर्भेदेनाऽन्वयबोधस्याऽ-व्युत्पन्नत्वात्, अतो व्याप्यत्वावच्छिन्नहेतुनिष्ठप्रकारताबोधहेतु हेतु-विशेष्यकव्याप्तिरूपविशेषणतावच्छेदकप्रकारकमानसज्ञानान्मानस एव तादृशपरामर्शोऽवश्यमंगीकर्त्तव्य इत्यभिप्रायेण तेनचेत्याद्यभिहितम्।

---

परामर्शाऽसत्वेनेत्यर्थः। उपनयजन्यबोधोत्तरं निगमनश्रवणपदार्थोपस्थित्या तन्नाशादितिभावः। तदंशेपि। व्याप्यंशेपि तद्भानेपि। व्याप्तिभानेपि। बाधकाभावादिति। अवान्तरवाक्यार्थबोधे एव सामग्र्यपेक्षिता। महावाक्यार्थ-बोधश्च संभूतसामग्रीकाऽवान्तरवाक्यार्थबोधाधीन एवेति पुनर्भाने वादितात्प-र्यापेक्षाशंकानवकाशः। मिश्रसमाधानमाह। न्यायजन्यज्ञानस्येति। मिश्रा-इति। एवमपि अप्रामाण्यशंकानैयत्ये मानाभावात् क्वचित्परामर्शवैयर्थ्यं दुर्वा-रमेवेत्यस्वरसः।

स्वमतेन समाधानमाह नव्यास्त्विति एवकारव्यवच्छेद्यमाह। नत्विति। अत इति। न्यायजन्यशाब्दबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वाभावादित्यर्थः। व्याप्य-त्वावच्छिन्नहेतुनिष्ठप्रकारताकबोधहेत्विति। वन्हिव्याप्यधूमवान्पवर्त इत्या-कारकबोधहेत्वित्यर्थः। मानसज्ञानादिति। वन्हिव्याप्यो धूम इत्याकारकमानस-ज्ञानादित्यर्थः न्यायार्थज्ञानस्य हेतौ व्याप्त्यप्रकारकत्वान्मानसानुधावनम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विशिष्टवैशिष्ट्यावगाहिमानान्तरं-विशिष्टवैशिष्ट्यबोधजनकं विशेषणतावच्छेदकीभूतव्याप्तिप्रकारकधूमत्वावच्छिन्नविशेष्यकज्ञानं । उत्थाप्यते । जन्यते । तेन । तादृशविशेषणतावच्छेदकप्रकारकज्ञानेन परामर्शो जन्यते इत्यर्थः । न चैवं तेन परामर्शस्य जननादितिग्रन्थाऽसंगतिः । तत्र परामर्शपदस्य व्याप्याभिन्नहेतुमदभेदबोधपरत्वादित्याहुः ।

शुद्धहेतुतावच्छेदकावच्छिन्ने पक्षधर्मत्वाकांक्षया तत्र पक्षधर्मत्वबोधमात्रतात्पर्यकं व्याप्त्यर्थकपदाऽघटितमेवोपनयवाक्यं प्रयुज्यते इति प्राचीनमताभिप्रायकमिदम्, अतएव दीधितिकृता तन्मताभिप्रायेणैवोदाहरणोपनययोरेव तत्पर्यवस्यतीत्यत्रोदाहरणान्तर्भावेनैव परामर्शप्रयोजकत्वपर्यवसानमुक्तम्, न तूपनयमात्रस्येत्यपि वदन्ति ।

अत्र परामर्शप्रयोजकत्वेन शाब्दज्ञानस्य लक्षणघटकत्वे स्वयमनुपपत्तेर्वक्ष्यमाणतया शाब्दज्ञानपदं प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थज्ञानपंचकपरं, जनकवाक्यपदं च प्रत्येकं तत्तद्बोधजनकवाक्यपंचकपरम्, अतःप्रतिज्ञादिवाक्यपंचकलाभः । प्रयोजकान्तं च बोधविशेषाणां परिचायकमात्रम् । यद्यप्येवं प्रतिज्ञादिपंचवाक्यैरेकज्ञानाऽजननेप्येतादृशलक्ष-

---

अभिहितमिति मूलकृतेतिशेषः । तेन । वन्हिव्याप्यधूमवानयमितिवाक्येन । तत्र । परामर्शजनकवाक्यमितिलक्षणे ।

धूमः पक्षे वर्तते नवेत्याकांक्षा, तथा चाऽयमित्येवोपनय इति व्याप्तिपक्षधर्मतयोर्विशृंखलमेव भानमिति वदतां मतमाह शुद्धेति । तत्र । न्याये इदम् । चरमःपरामर्शउत्पाद्यते इत्येतत् । अतएवेति उपनयस्यव्याप्त्यर्थकपदाऽघटितत्वादेवेत्यर्थः । तन्मताभिप्रायेणैवेति । प्राचीनमताभिप्रायेणैवेत्यर्थः । तत् परामर्शप्रयोजकत्वम् ।

स्वयं न्यायलक्षणमाहेति जगदीशोक्तावतरणमसंगतम्, मूलार्थताया एव तस्य संभवादित्याह अत्रेति । अनुपपत्तेर्वक्ष्यमाणतयेति । उदाहरणोपनययोरेव तत्पर्यवस्यतीत्यादिनेतिभावः । प्रतिज्ञादिपंचवाक्यार्थविषयकसमूहालंबनबोधस्याप्यसार्वत्रिकतया आह तत्तद्विशिष्टार्थेति । तत्तद्विशिष्टार्थविषयकेत्यर्थः । ज्ञानपञ्चकपरं यत्र न्यायजन्यसमूहालंबनबोधोऽसिद्धस्तत्र पूर्वोक्तप्रकाराभावात्पंचकेत्युक्तम् लाभइति उचितानुपूर्वीकत्वं तु पूरितं दीधितिकारेण । सामान्यतो बोधनिवेशे घटमानयेतिवाक्येऽतिव्याप्तिः स्यादत आह प्रयोजकान्तं चेति ननु परामर्शप्रयोजकशाब्देत्यत्र शाब्दपदस्य पंचबोधपरत्वे प्रतिज्ञादिपंचवाक्यैरित्यादिमूलाऽसंगतिः, एकबोधाजननेऽपि उक्तरीत्या पंच-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



(दी) उचितानुपूर्वीकप्रतिज्ञादिपंचकसमुदायत्वं न्यायत्वम् । 33

णाऽनिर्वाहविरहः । तथापि प्रतिज्ञादिजन्यबोधानां परामर्शप्रयोजकतालाभायैव संभवाभिप्रायेण तावदर्थविषयकमेकं ज्ञानं परामर्शप्रयोजकत्वेनाऽभिहितमित्यभिप्रेत्य दीधितिकृत्पर्यवसितन्यायलक्षणमाह । उचितेति । उचितानुपूर्वीकानि प्रतिज्ञादिपंच यत्र समुदाये तत्वं,तादृशपंचपर्याप्त समुदायत्वमिति यावत् । पंचपदं निगमनान्तां विशिष्य निवेशलाभाय,-न तु पंचत्वेनाऽपि तेषां निवेशः प्रयोजनाभावात् । व्युत्क्रमप्रयुक्तप्रतिज्ञादिपंचकेऽतिव्याप्तिवारणायोचितानुपूर्वी केति । उचितानुपूर्वी प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपा ।

ननु किमिदमुचितानुपूर्वीकत्वं, न तावत्तादृशानुपूर्व्याश्रयत्वं, तादृशानुपूर्व्या निगमने एव विश्रान्तेः । नापि तादृशानुपूर्वीघटकत्वं घटकतायाः दुर्वचत्वात् । तद्धि न स्वाविषयकप्रतीत्यविषयतादृशानुपूर्वीकत्वं, प्रतिज्ञाद्यविषयकप्रतीत्या शुद्धनिगमनत्वस्य विषयीकरणात्, विशिष्टनिगमनत्वे तादृशप्रतीत्यविषयत्वानुपपत्तेः । विशेष्यवृत्तेर्विशिष्टानुयोगिकाऽभावानभ्युपगमात् । नापि तादृशानुपूर्वी विषयिताव्यापकविषायिताकत्वं, शब्दव्यक्तिभेदेन प्रतिज्ञादेर्भिन्नतया कस्याश्चिदपि प्रतिज्ञादिव्यक्तेर्विषयितायास्तादृशानुपूर्वी विषयितासामान्यव्यापकत्वाऽसंभवात् । प्रतिज्ञादिव्यक्त्यन्त-

---

बोधानादाय लक्षणसमन्वयसंभवादित्याशयेन शंकते यद्यपीति । दीधितिकृन्मते स्वार्थविशिष्टज्ञानमित्यत्रैकत्वानुपपत्तिं परिहरति संभवाभिप्रायेणेति। यत्र प्रतिज्ञादिपंचवाक्यानामेकदैव समूहालंबनोपस्थितिः तत्स्थलाभिप्रायेणेत्यर्थः । तथाच पंचार्थविषयकैकबोधे परामर्शप्रयोजकतोपपादनेऽर्थात्पंचानां तदुपपादितं भवतीति रहस्यम् । प्रतिज्ञोत्तरेति । प्रतिज्ञाऽव्यवहितोत्तरेत्यर्थः । प्रतिज्ञोत्तरवाक्योत्तरहेतोः हेत्वादिनिगमनान्तोत्तरप्रतिज्ञादेश्च वारणायाऽव्यवहितत्वस्य-उत्तरत्वस्य च निवेशः । एवमग्रेऽपि । तादृशानुपूर्व्या इति । प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपानुपूर्व्या इत्यर्थः । निगमने एवेति । अत्र निगमनपदं निगमनघटकान्त्यवर्णपरम् । नापीति तथाचोचितानुपूर्वीकानि प्रतिज्ञादिपंच यत्रेत्यत्र सप्तम्यर्थो घटकत्वमितिभावः । तद्धि । घटकत्वं हि । स्वाविषयकेति । स्वं घटकत्वेनाऽभिमताः प्रतिज्ञादयः । तथा च स्वं-प्रतिज्ञा तदविषयकप्रतीतिर्हि घटपटाद्युदासीनविषयकप्रतीतिरेव "नत्वानुपूर्वीविषयकप्रतीतिः, तस्या प्रतिज्ञाद्यविषयकत्वाभावात्" तदविषयतादृशानुपूर्वीकत्वस्य प्रतिज्ञायां सत्वेन घटकत्वम्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रघटितन्यायविषयकज्ञानेऽपितादृशानुपूर्वी विषयितासत्वात्। यत्किंचित्तानुपूर्वी विषयिताव्यापकत्वस्य व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयितासाधारणत्वात्,तादृशप्रतिज्ञादिविषयकन्यायज्ञानीयतथाविधानुपूर्वी विषयिताया एव तादृशप्रतिज्ञादिविषयिताव्याप्यत्वात्। नच ज्ञानभेदेन विषयिताभेदानभ्युपगमान्नैवमिति वाच्यम्। तादृशप्रतिज्ञादिव्यक्तिसमानाधिकरणत्वादिनाऽऽनुपूर्वी विशेषावच्छिन्नन्यायविषयकज्ञानीयाऽऽनुपूर्वी विशेषविषयितायास्तादृशप्रतिज्ञादिव्यक्तिविषयिताशून्यावृत्तित्वात्, तस्यास्तद्व्याप्यत्वानपायात्।

---

एवं हेत्वादावपि घटकत्वं बोध्यम्। तादृशानुपूर्वीविषयिताव्यापकेत्यनेन तादृशानुपूर्वीविषयितासामान्यव्यापकत्वं विवक्षितं, तादृशयत्किंचिद्विषयिताव्यापकत्वं वा। आद्ये दूषणमाह। शब्दव्यक्तिभेदेनेति। प्रतिज्ञादेरैक्ये ज्ञानभेदेन विषयिताभेदेऽपि प्रतिज्ञाविषयितात्वेनाऽऽनुपूर्वीविषयिताव्यापकत्वं स्यादतः शब्दव्यक्तिभेदेन भिन्नत्वोत्कीर्त्तनम्। तादृशानुपूर्वी विषयितासत्वादिति। आनुपूर्व्याभेदाभावादिति भावः। यत्किंचिदिति। तच्च विषयिताविशेषणम्, यत्किंचित्तादृशानुपूर्वीविषयितेत्यर्थः। साधारणत्वादिति। क्रमप्रयुक्तव्युत्क्रमप्रयुक्तप्रतिज्ञादिपंचकोभयसमूहालंबनज्ञाने आनुपूर्वीविषयित्व-व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयित्वव्यक्त्योर्व्याप्यव्यापकभावः। ज्ञानभेदेन। विषयिताभेदात्केवलन्यायज्ञाने समूहालंवनज्ञानीयन्यायानुपूर्वीविषयताविरहादितिभावः। तादृशेति। व्युत्क्रमप्रयुक्तेत्यर्थः। तथाच तादृशसमूहालंबनज्ञानीयाऽऽनुपूर्वीविषयिताव्यापकत्वस्य व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयितायां सत्वात्तस्या अपि घटकत्वापत्तिरितिभावः। नैवमिति। न पूर्वोक्तदोषइत्यर्थः। आनुपूर्वीविषयितायाः क्रमप्रयुक्तज्ञानमात्रेऽपि सत्वेन तत्र व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयिताविरहादितिभावः। न्यायविषयकज्ञानीयेति। व्युत्क्रमप्रयुक्तप्रतिज्ञादिव्यक्तिसमानाधिकरणे न्यायइतिज्ञानीयेत्यर्थः। आनुपूर्वीविशेषविषयिताया इति। ज्ञानभेदेन विषयिताभेदस्यानभ्युपगमेऽपि निरूपकभेदेन[1] तद्भेदस्याऽवश्यकत्वादितिभावः।

---

१. तादृशप्रतिज्ञासमानाधिकरणेन्यायइतिज्ञानीयाऽऽनुपूर्वीनिष्ठा या सामानाधिकरण्यनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकता तादृशावच्छेदकताकविषयिताकाऽऽनुपूर्वीविषयकज्ञानान्तरे नास्ति, एतादृशविषयितानिरूपकीभूता या विशेष्यतावच्छेदकता तस्या अभावात्। तथाच ज्ञानभेदे विषयिताया ऐक्येऽपि निरूपकभेदाद्भिन्नेतिभावः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अथ निगमनपूर्वोपनयपूर्वोदाहरणपूर्वहेतुपूर्वत्वरूपानुपूर्व्याश्रयत्वेन प्रतिज्ञायाः तादृशोदाहरणपूर्वत्वे सति प्रतिज्ञोत्तरत्वरूपानुपूर्व्याश्रयत्वेन च हेत्ववयवादीनां निवेशान्नानुपपत्तिः ।

अथवा तादृशैकविधानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वमेवतादृशानुपूर्वीघटकत्वमिनिचेत् एवमप्येकैकन्यायघटकं यत्प्रतिज्ञाद्येकैकवाक्यं तत्समुदायेऽतिप्रसंगो दुर्वार एवेति ।

---

तस्याः । आनुपूर्वीविषयितायाः । तद्व्याप्यत्वानपायादिति । व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयिताव्याप्यत्वानपायादित्यर्थः ।

ननु तादृशानुपूर्वी यथा विशिष्टनिगमनत्वरूपा तथा विशिष्टप्रतिज्ञात्वरूपापीत्यादिरीत्या पंचविधा या आनुपूर्वी तदाश्रयत्वरूपं तादृशानुपूर्वीकत्वं वक्तुं शक्यते इत्याशंकते । अथेति । तादृशोदाहरणपूर्वत्वेसतीति । निगमनपूर्वोपनयपूर्वोदाहरणपूर्वत्वे सतीत्यर्थः । हेत्ववयवादीनामिति । आदिना निगमनपूर्वोपनयपूर्वत्वे सति प्रतिज्ञोत्तरहेतूत्तरत्वरूपानुपूर्व्याश्रयत्वेनोदाहरणस्य-निगमनपूर्वत्वे सति प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरत्वरूपानुपुर्व्याश्रयत्वेनोपनयस्य, एवं प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयात्तरनिगमनत्वरूपानुपूर्व्याश्रयत्वेन निगमनस्य संग्रहः ।

वक्ष्यमाणदोषेण निरसनीयकल्पान्तरमाह । अथवेति । पूर्वं पञ्चानुपूर्व्य उक्ताः इदानी तासु एकैव निवेश्येति दर्शयति । तादृशैकविधेति । प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपेत्यर्थः । अत्र स्वाश्रयनिगमनवृत्तित्वसंबन्धेनोपनयोत्तरत्वविशिष्टनिगमनत्वरूपानुपूर्व्यवच्छिन्नभेदप्रतियोगितावच्छेदककोटौ संसर्गघटकतया निगमनप्रवेशान्निगमनसंग्रहो बोध्यः । अन्यथा साक्षात्प्रतियोगितावच्छेदकत्वस्य निगमनत्वे परंपरया तस्योपनयादौ सत्वेन निगमनाऽसंग्रहप्रसंगात् । एतेनोपनयोत्तरत्वं निगमनत्वे न संभवतीत्यपि समाहितमितिध्येयम् । तथाच प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपानुपूर्वीमान्नेति "तादृशानुपूर्व्यवच्छिन्नप्रतियोगिताक" भेदप्रतियोगितानिरूपितसाक्षात्परंपरासाधारणावच्छेदकत्वमेव उचितानुपूर्वीकत्वं फलितम् ।

ननु तादृशानुपूर्व्यवच्छिन्नप्रतियोगितावच्छेदकत्वनिवेशेनैवोपपत्तौ भेदनिवेशनं किमर्थमिति चेन्न । धर्मसंबन्धसाधारणैकावच्छेदकताभ्युगमे स्वसमानकालीनव्युत्क्रमप्रयुक्तप्रतिज्ञासंबन्धेन तादृशानुपूर्वीमान्नास्तीत्याकारकात्यन्ताभावी-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मैवम् । स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत्समुदायत्वं तदन्यत्वस्य समुदायत्वविशेषणत्वे तात्पर्यात् । व्युत्क्रमप्रयुक्तप्रतिज्ञादिनिष्ठस्य नानान्यायान्तर्गप्रतिज्ञादिपंचनिष्ठस्य च समुदायत्वस्य तदन्यत्वाविरहान्नातिप्रसंगः । एवं च घटमानयेतिवाक्यवृत्तिसमुदायत्ववारणाय प्रतिज्ञादिवृत्तित्वविशेषणमपिसार्थकमित्यवधेयम् ।

---

यप्रतियोगितावच्छेदकताया व्युत्क्रमप्रयुक्तप्रतिज्ञात्मकसंबन्धेऽपि सत्वाद् व्युत्क्रमप्रयुक्तप्रतिज्ञादेरपि उचितानुपूर्वीकत्वापत्तेः ।

केचित्तु प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपत्वे व्युत्क्रमप्रयुक्तप्रतिज्ञाकालीननिगमनत्वावच्छिन्नप्रतियोगित्वताद्दशरूपावच्छिन्नप्रतियोगित्वयोरैक्यतया तदवच्छेदकत्वस्य व्युत्क्रमप्रयुक्तप्रतिज्ञायामपि सत्वादिति व्युत्क्रमप्रयुक्तप्रतिज्ञाघटितसमुदायेऽतिव्याप्तिरतो भेदप्रतियोगितावच्छेदकत्वपर्यन्तानुधावनम् । एवं च भेदनिरूपितत्तद्व्यक्तिनिरूपितत्व-प्रतियोगितात्वोभयधर्मावच्छिन्ननिरूपकतानिरूपितविलक्षणनिरूप्यतावच्छेदकत्वलाभान्न ताद्दशसमुदायेऽतिव्याप्तिरिति प्राहुः ।

ननु ताद्दशानुपूर्वीभेदप्रतियोगितावच्छेदकत्वनिवेशेनैवोपपत्तौ ताद्दशानुपूर्व्यवच्छिन्नभेदप्रतियोगितावच्छेदकत्वनिवेशः किमर्थं इति चेन्न । साक्षात्प्रतियोगितावच्छेदकताया व्यासज्यवृत्तित्वानुपगमे ताद्दशानुपूर्वीभेदप्रतियोगितावच्छेदकत्वाप्रसिद्धेः, ताद्दशोपनयोत्तरत्वविशिष्टनिगमनत्वं नेति भेदप्रतियोगितावच्छेदकताया उपनयोत्तरत्ववैशिष्ट्य-निगमनत्वत्वद्वयोरेव सत्वात् । अतः ताद्दशोपनयोत्तरत्ववैशिष्ट्यं निगमनत्वे सामानाधिकरण्यसंबन्धेन न दातुं शक्यते अपि तु समानाधिकरणवृत्तित्वसंबन्धेन निगमनत्वत्वे एवेति गौरवमतस्ताद्दशानुपूर्व्यवच्छिन्नभेदो निवेशितः ।

स्वं समुदायत्वम् तथा च स्वतादात्म्य-स्वाश्रयीभूतप्रतिज्ञाऽव्यवहितोत्तरत्वशून्योहेतुवृत्तित्व-स्वाश्रयीभूतहेत्वव्यवहितोत्तरत्वशून्योदाहरणवृत्तित्व-स्वाश्रयीभूतोदाहरणाव्यवहितोत्तरत्वशून्योपनयवृत्तित्व-स्वाश्रयीभूतोपनयाव्यवहितोतरत्वशून्यनिगमनवृत्तित्वान्यतमएतदुभयसंबन्धेन समुदायत्वविशिष्टान्यत्वं निरुक्तसमुदायत्वे विशेषणीयमिति भावः । नच स्वाश्रयीभूतप्रतिज्ञादिपदं व्यर्थम् । तथासति स्वाश्रयीभूतयत्किंचिदव्यवहितोतरत्वशून्यत्वादेर्विवक्षणीयतयाऽसंभवापतेः, स्वाश्रयीभूतयत्किंञ्चित्पदेन निगमनमादाय तदव्यवहितोतरत्वशून्यत्वस्य प्रतिज्ञादौ सत्वात् । तात्पर्यादिति उचितानुपूर्वीकेत्यस्येत्यादिः । एवंचेति । उचितानुपूर्वीकेत्यस्य स्वाश्रयीभूतेत्यादिविशेषणतात्मकत्वे चेत्यर्थः । वारणायेति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रतिज्ञादिवृत्तित्वं च प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकयत्किंचिद्धर्मपंचकव्यापकत्वम्। अतः प्रतिज्ञादिपंचकैकदेशसमुदाये नातिप्रसंगः।

---

घटमानयेति वाक्यवृत्तिसमुदायत्वस्यापि तदन्यत्वादिति भावः। प्रतिज्ञादिवृत्तित्वविशेषणमपीति प्रतिज्ञादिपंचकसमुदायत्वमित्यस्य प्रतिज्ञादिपंचवृत्तिसमुदायत्वमर्थः। अपिर्भिन्नक्रमे घटमानयेति वाक्यवृत्तिसमुदायत्ववारणायापीत्यर्थः। तथा च तादृशानुपूर्व्यवच्छिन्नभेदप्रतियोगितावच्छेदकत्वमिति पूर्वकल्पेऽपि न्यायघटककतिपयवर्णवृत्तिसमुदायत्ववारणायापि प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकधर्मपंचकव्यापकत्वस्वरूपस्य विशेष्यदलस्य सार्थक्यमिति सूचितम्। एतेन "नन्वत्र सन्दर्भविरोधः, तथाहि-एवं चेत्यादिग्रन्थेन पूर्वकल्पे विशेष्यदलसार्थक्यमिति-भावार्थो ज्ञायते, तन्न संगच्छते तादृशानुपूर्व्यवच्छिन्नभेदप्रतियोगितावच्छेदकत्वरूपोचितानुपूर्वीकत्वनिवेशेपि न्यायघटककतिपयवर्णवृत्तिसमुदायत्ववारणाय प्रतिज्ञात्वपर्याप्त्यवच्छेदकधर्मपंचकव्यापकत्वरूपस्य विशेष्यदलस्य सार्थक्यसंभवात्, असंभवभयेन तादृशानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकवर्णत्वव्यापकतानिवेशायोगात्, समानानुपूर्वीकयावन्न्यायघटकवर्णानामेव तादृशानुपूर्व्यवच्छिन्नभेदप्रतियोगितावच्छेदकत्वादिति निरस्तम्। वस्तुतस्तु तादृशानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वस्याऽवच्छेकतावच्छेदक - साधारणस्याऽप्रामाणिकत्वे तादृशानुपूर्व्यवच्छिन्नभेदप्रतियोगितावच्छेदकत्वमपहाय तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वस्य निवेशनीयतया एकदेशवृत्तिसमुदायत्ववारणसंभवे प्रतिज्ञादिपंचवृत्तित्वरूपदलवैयर्थ्यमेवेति न एवंचेत्यादिग्रन्थस्य सन्दर्भविरोध इति ध्येयम्।

अवधेयमिति। ननु धूमादालोकवान् पर्वतो वन्हिमानित्यादौ हेत्ववयवातिरिक्तचतुरवयवमात्रवृत्तिसमुदायत्वमादायाऽतिव्याप्तिरिति चेन्न। प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतापन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नान्वितस्वार्थबोधकत्वे सति प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयितावहिर्भूतविषयिशून्यबोधजनकत्वरूपहेतुत्वव्यापकत्वसमुदायत्वनिवेशान्नातिप्रसंगः। एतच्च स्वयमग्रे वक्ष्यमाणत्वात्।

प्रतिज्ञादिवृत्तित्वं चेति प्रतिज्ञादिपंचकसमुदायत्वमित्यनेन विवक्षितं तच्चेति शेषः। तथा च प्रतिज्ञात्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदको यो धर्मः एवं हेतुत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदको यो धर्मः—एवमुदाहरणत्व-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



(2) 28 प्रतिज्ञात्वादिकं पुनरुदासीनवाक्यव्यारकन्यायान्तर्गतत्वशून्यमेवाऽत्रोपादेयमिति नान्योन्याश्रयः। साध्यादिभेदनियंत्रिताश्च प्रतिज्ञादयो वाच्या इति विभिन्नसाध्यादिपक्षकप्रतिज्ञादिसमुदाये नातिव्याप्तिः । व्याप्त्यादेरिव साध्यादेरप्यननुगमादननुगमो न्यायादेरपीष्यत एव । 35

---

प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदको यो धर्म :—एवमुपनयत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदको यो धर्म :—एवं निगमनत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदको यो धर्मस्तादृशधर्मपंचकसमुदायत्वमित्यर्थः । तादृशधर्मश्चप्रतिज्ञाघटकसकलवर्णगतसमुदायत्वरूपः । एवं हेत्वादावपि । एवं च तादृशसमुदायत्वव्यापकत्वं न्यायगतसमुदायवे एवेति सर्वत्र लक्षणसमन्वयः ।

नन्वत्र प्रतिज्ञात्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदधर्मव्यापकत्वमेवोच्यतां किं यत्किंचित्पदेनेतिचेन्न । तथासति असंभवापत्तेः । तथाहि प्रतिज्ञात्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्य समानानुपूर्वीकाऽन्यन्यायघटकसमुदायत्वेपि सत्वेन तद्व्यापकत्वस्यैतत्प्रतिज्ञाघटितन्यायगतसमुदायत्वे विरहात्, एतत्प्रतिज्ञात्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकसमुदायत्वव्यापकत्वस्य तादृशप्रतिज्ञाघटितसमुदायत्वे विरहात् । तदुपादाने तु यत्किंचित्प्रतिज्ञागतसमुदायत्वव्यापकत्वस्य यत्किंचिन्न्यायगतसमुदायत्वे सत्वाल्लक्षणसमन्वयः ।

अथात्र प्रतिज्ञात्वादिधर्मपंचकव्यापकत्वनिवेशेनैव सामंजस्ये किं पर्याप्त्यवच्छेदकत्वनिवेशेनेति चेन्न । स्वनिष्ठानुमित्यन्यूनानतिरिक्तविषयकशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्ववत्वसम्बन्धेन शाब्दबोधविशिष्टत्वरूपप्रतिज्ञात्वस्य सकलप्रतिज्ञासाधारणतया कस्यचिदपि न्यायस्य तादृशप्रतिज्ञात्वव्यापकत्वाभावेनाऽसंभवभिया तादृशनिवेशाऽयोगात् । नच सर्वसाधारणप्रतिज्ञात्वस्यैक्येन यत्किंचित्प्रतिज्ञादिवृत्तिसमुदायत्वस्य तादृशप्रतिज्ञात्वपर्याप्त्यवच्छेदकतया तद्दोषतादवस्थ्यमितिवाच्यम् । यत्किंचित्प्रतिज्ञादावपि प्रतिज्ञात्वादिव्यवहारबलात्तत्समुदायत्वस्यापि प्रतिज्ञात्वपर्याप्त्यवच्छेदकत्वादिति ध्येयम् ।

**नचैवमपि** प्रतिज्ञात्वादिपर्याप्त्यनुयोगितावच्छेदकधर्मसामान्यव्यापकत्वस्य न्यायत्वेऽप्यसत्वात्तादृशधर्मसामान्यव्यापकतानिवेशाऽयोगः, प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकीभूतयत्किंचिद्धर्मव्यापकतानिवेशे च तादृशधर्मस्य विषयतात्मकतया विषयतायाश्च वर्णभेदेन भिन्नतया प्रतिज्ञादिघटकीभूतवर्णवृत्तिपंचविषयतामा-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रतिज्ञात्वादेर्व्यासज्यवृत्तितया तदाश्रयैकदेशमात्रवृत्तेस्तत्पर्याप्त्यनवच्छेदकत्वात्। समुदात्वं चाऽनेकपर्याप्तो धर्मः तस्य च पर्याप्तिसंबन्धेन न्यायपदप्रवृत्तिनिमित्तत्वान्नैकदेशे न्यायव्यवहार इति तु विभावनीयम्।

ननु प्रतिज्ञादिलक्षणे न्यायान्तर्गतत्वविशेषणस्य प्रवेशनीयतयाऽन्योन्याश्रयप्रसंग इत्यत आह। प्रतिज्ञात्वादिकमिति। उदासीनवाक्यवारकेति। न्यायानन्तर्गतवाक्यवारणमात्रप्रयोजनकेत्यर्थः। एतेन न्यायान्तर्गतप्रतिज्ञादिपंचकसमुदायस्य उचितानुपूर्वीकत्वविरहादेव न्यायत्वाप्रसक्तेर्न्यायघटकप्रतिज्ञादिशरीरे तादृशविशेषणानुपादानेऽपि न क्षतिरिति सूचितम्।

---

दाय वर्णपंचकेतिव्याप्तितादवस्थ्यमेवेति वाच्यम्। प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकताविशिष्टसमुदायत्वस्य विवक्षितत्वात्। वै० व्यापकतासंबन्धेन। व्यापकता च पर्याप्तिसंबन्धावच्छिन्ना। वस्तुतो धीविशेषविषयतात्मकस्य प्रतिज्ञात्वादेर्वाक्यभेदेन नानात्वात् यत्किंचित्प्रतिज्ञात्वादिव्यापकत्वमेव निवेशनीयम्। यत्किंचित्प्रतिज्ञात्वव्यापकतालाभायैव पर्याप्त्यवच्छेदकत्वोपादानमपीति न काप्यनुपपत्तिरिति ध्येयम्।

न च तथापि प्रतिज्ञेतराऽवृत्तित्वे सति प्रतिज्ञावृत्तित्वं यथाश्रुतमेवास्तु। एवं हेतुवृत्तित्वादिकमपीति चेन्न। प्रतिज्ञाघटककतिपयवर्णवृत्तिसमुदायत्वस्यापि प्रतिज्ञावृत्तित्वात्, एवं हेत्वादिघटककतिपयवर्णवृत्तिसमुदायत्वस्यापि हेत्वादिवृत्तित्वात्, तदितरावृत्तित्वाच्च तादृशसमुदायत्वविशिष्टेऽतिव्याप्तेः।

तत्पर्याप्त्यनवच्छेदकत्वादिति। न्यूनपर्याप्तस्याऽधिकपर्याप्त्यनवच्छेदकत्वादिति भावः। तस्यचेति। समुदायत्वस्य चेत्यर्थः। न्यायपदप्रवृत्तिनिमित्तत्वादिति न्यायपदशक्यत्वावच्छेदकत्वादित्यर्थः। एकदेशे। प्रतिज्ञादौ।

न्यायान्तर्गतत्वशून्यमेवेति। प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाह्यनुमित्यन्यूनानतिरिक्तविषयकशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वमात्रमित्यर्थः।[1]

---

१. अथात्र न्यायलक्षणप्रविष्टप्रतिज्ञाशरीरे न्यायान्तर्गतत्वप्रवेशे कथमन्योन्याश्रयः, प्रतिज्ञाघटकीभूतन्यायान्तर्गतत्वस्य प्रतिज्ञोत्तरहेतूरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपाऽऽनुपूर्व्यवच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वमात्ररूपत्वेन प्रकृतन्यायत्वाऽघटितत्वादिति चेन्न। स्वावेषयकप्रतीत्यविषयन्यायत्वकत्वं न्यायत्वाश्रयत्वं वा न्यायान्तर्गतत्वमिति यथाश्रुताभिप्रायेण त तत्संगतेः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



35 एतेन प्रतिज्ञानिगमनयोरुदाहरणावयवान्तरयोश्च न संभूयैकार्थप्रतिपादकत्वम्, द्रागेव तु पञ्चानामवयवानाम्, 39

"अत्र केचित । असाधकतास्थलीयन्यायेऽव्याप्तिः, तत्राऽव्याप्तेरुभयवादिसिद्धत्वेनोदाहरणाभावेन पंचावयवाभावादिति । तन्न । साध्यसाधनभेदेन न्यायभेदाच्चतुरवयवस्यैव ग्राह्यत्वादिति । यदि च सर्वत्रैव समयबन्धस्थले पंचावयवप्रयोगइति मन्यते तदाभिमतनिर्वाहाय समयबंधं विना-सर्वत्रैव पंचावयवप्रयोग इति स्वीकरणीयमिति ।" क्रमप्रयुक्तविभिन्नपक्षसाध्यहेतुकप्रतिज्ञादिपंचकेऽतिव्याप्तिशंकां निरस्यति । साध्यादीति । तत्साध्यपक्षहेतुकन्यायलक्षणे तत्साध्यपक्षकप्रतिज्ञा-तत्साधनकहेतु-तत्साध्य साधनकोदाहरण-तत्साध्यपक्षसाधनकोपनय-तत्साध्यसाधनकनिगमनानि-निवेशनीयानीत्यर्थः । नन्वेवं न्यायपदार्थस्याननुगततया न्यायपदस्य नानार्थताकपत्तिरित्यत्रेष्टापत्तिमाह । व्याप्त्यादेरिवेति व्याप्त्यादिपदार्थस्येवेत्यर्थः । साध्यादेरननुगमात् । स्वघटकसाध्यादीनां भिन्नरूपेण निवेशनीयत्वात् । अननुगमः । अनुगतप्रवृत्तिनिमित्तविरहः । न्यायादेः । न्यायादिपदार्थस्य । आदिपदादवयवपरिग्रहः । इष्यते एवेति । गत्यन्तराभावादितिभावः ।

यथाश्रुतमूलस्वरससिद्धवाक्यपंचकजन्यमहावाक्यार्थबोधमादायलक्षणमन्वयं निराचिकीर्षुर्वाक्यपंचकस्यैकविशिष्टार्थबोधकतां खण्डयति । प्रतिज्ञानिगमनयोरिति । न संभूयैकार्थप्रतिपादकत्वमित्यग्रेतनेनाऽन्वयः । प्रतिज्ञार्थे वन्हिमतिपर्वते निगमनार्थस्य विशिष्टहेतुज्ञानज्ञाप्यसाध्यवत्वस्यान्वयोपगमे साध्यवत्त्वांशमादाय पौनरुक्त्यप्रसंगात् । दण्डवान् रक्तदण्डवानित्यादाविव विधेयांशेऽधिकावगाहिनस्तादृशान्वयबोधस्य संभवेऽपि-शुद्धपक्षतावच्छेदकविशिष्टेऽबाधितत्वादिविशिष्टसाध्यवत्तावगाहिन्याः प्रतीतेरेवोपयोगित्वेन साध्यविशिष्टपक्षे तादृशसाध्यवत्त्वान्वबोधस्याऽनाकांक्षिततया वादितात्पर्याविषयत्वाच्च ।

---

न्यायानन्तर्गतेति । उचितानुपूर्वीरहितेत्यर्थः । क्रमप्रयुक्तविभिन्नपक्षसाध्यहेतुकप्रतिज्ञादिपंचके इति । पर्वतोवह्निमान्, पृथिवीत्वात्, योयो रसवान् स रूपवान् यथा घटः, सत्ताव्याप्यद्रव्यत्ववानयं, तस्माद्गुणवानित्यादावित्यर्थः । तत्साध्येति । शुद्धन्यायत्वं नास्त्येवेति भावः । नानार्थकेतापत्तिरिति । नानाधर्मप्रकारकबोजनकत्वापत्तिरित्यर्थः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यत्तु वन्हिविशिष्टपर्वतोद्देश्यकबोधे वन्हिमत्पदोत्तरपर्वतपदोपस्थिति-रपेक्षिता। नीलेघटः सुन्दर इत्यादाविव घटोनीलः सुन्दर इत्यादौ नीलान्वितघटाद्यंशोविधेयाऽभानात् उद्देश्यतावच्छेदकवाचकपदस्योद्देश्यवाचकपदपूर्ववर्त्तिताया अपेक्षणीयत्वादतो न तादृशान्वयबोधसंभव इति।

न च शुद्धपर्वतत्वावच्छिन्ने एव शुद्धवन्हिमत्त्व-निगमनोपस्थाप्यविशिष्टवन्हिमत्त्वयोर्युगपद्विधेयतयाऽन्वयोपगमेन एकवाक्यत्वं निर्वहति वाच्यम्। गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादिति न्यायेन भासमानयोः शुद्धवन्हिमत्त्वविशिष्टवन्हिमत्त्वयोरवच्छेद्यावच्छेदकभावापन्नविषयिताकस्वरूपसंबन्धाभावेन एकवाक्यत्वानिर्वाहात्। अत एव विधेयभेदे सर्वत्र वाक्यभेदः। केवलोपनयजन्यबोधे पक्षे साध्यव्याप्यहेतुमत्त्वस्य विधेयत्वेऽपि उपनयनिगमना

---

यथाश्रुतमूलेति। एकवचनान्तस्वार्थविशिष्टज्ञानमिति मूले इत्यर्थः। अवयवलक्षणानुरोधेन समूहलंवनानात्मकतल्लाभसूचनाय स्वरसेति। तात्पर्येत्यर्थः। उद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दवोध इत्याह। पौनरुक्त्यप्रसंगादिति। प्रतीतेरेवेति। एवकारेण विशिष्टपक्षव्यावृत्तिः। शुद्धपक्षेउपयोगित्वेनेति। अन्यथा वाधानुवृत्या मध्यस्थस्याऽनुमित्यनापत्तेरिति भावः। साध्यविशिष्टपक्षे। वन्हिमदभिन्नपर्वते। तादृशेति। विशिष्टहेतुज्ञानज्ञाप्येत्यर्थः।

संभूयैकार्थप्रतिपादकत्वे आकांक्षाविरहोवीजं वदतां मतमुत्थापयति यत्त्विति तादृशान्वयबोधसंभव इति। वह्निमत्पर्वते निगमनार्थविधेयकबोधसंभव इत्यर्थः युगपद्विधेयतयेति एकत्र द्वयमितिरीत्येति भावः। एकवाक्यत्वं विशिष्टैकार्थप्रतिपादकत्वम्। गुणानां च परार्थत्वात् असंबन्ध समत्वात्स्यादिति जैमिनिसूत्रम्। तदर्थश्च गुणानां-विधेयानां परार्थत्वात् उद्देश्यमात्रसाकांक्षत्वात् उद्देश्यमात्रनिष्ठविषयतानिरूपितविषयताश्रयत्वादिति यावत्। असंबन्धः-अवच्छेद्यावच्छेदकभावापन्नविषयिताकस्वरूपसंवन्धाभावः। समत्वात् तुल्यत्वेन भानादिति। तथा च परस्परधर्मितावच्छेदकप्रकारभावापन्नयोरेव विषयतयोरवच्छेद्यावच्छेदकभावो न तदनापन्नयोरिति भावः। अत एव। एकवाक्यत्वविरहेणैव।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धीनबोधे उद्देश्यपदपूर्वनिर्दिष्टस्य व्याप्यवत्पदार्थस्योद्देश्यतावच्छेदकतयैव भानेन तद्विषयकत्व-निगमनार्थविषयकत्वयोरवच्छेद्यावच्छेदकभावात्तदुभयैकवाक्यतेति उपनयोपेक्षेति । तन्न । तात्पर्यसत्वे योजनयापि तादृशबोधसंभवात्, उद्देश्यवाचकपदस्य विधेयवाचक पदपूर्वत्वेन प्रतिसन्धानस्याऽपेक्षणीयतया योजनयैवोपनयेन पक्षेऽयं पदार्थे साध्यव्याप्यवत्वबोधनात्, तात्पर्यसत्वे वादिवाक्ये योजनायाः दूषणानर्हत्वात् । तात्पर्यविरहस्यैव तत्र वीजत्वात् । इदमुपलक्षणम् । उपनयेनापि समं प्रतिज्ञायाः न विशिष्टैकार्थप्रतिपादकत्वं, वन्हिमति पर्वते उपनयार्थस्य साध्यव्याप्यहेतुमत्पक्षस्याऽप्राप्ततादृशहेतुमत्वांशघटिततया विधेयत्वसंभवेपि अनुमित्युपयोगिनः पक्षतावच्छेदकविशिष्टे हेतुमत्त्वस्याऽऽकांक्षयैवोपनयप्रतिपादनादनाकांक्षितस्य पर्वते पर्वताऽभेदबोधस्य तात्पर्याऽविषयत्वात् । उदाहरणावयवान्तरयोरिति । उदाहरणघटकयोर्यत्तत्पदघटितभागयोरपि नैकविशिष्टार्थबोधकत्वं तत्र द्विरुक्तयत्पदेन महानसत्व-महानसान्यत्वादिनोद्देश्योपस्थापनात् । तत्पदेनापि तद्रूपावच्छिन्नपरामर्शाद् महानसं धूमवद्वन्हिमच्च महानसान्यद् धूमवद् वन्हिमच्चेति वाक्यार्थचतुष्टयविषयकसमूहालंवनवोधस्यैवोदयात् ।

न च वीप्सया व्यापकत्वबोधनाद् धूमवान् धूमव्यापकवन्हिमानित्याकारक एकविशिष्टार्थवोध एव तत्रोत्पद्यते इतिवाच्यम् । योय इत्यादेरनन्वितार्थकत्वप्रसंगात् । न च द्विरुक्तयत्पदस्यैव व्यापकत्वमर्थः स च साध्यांशेन्वेतीति वाच्यम् । नामार्थयोर्भेदान्वयवोधस्याऽव्युत्पन्नत्वात् ।

---

नन्वेवं कथंचिदित्यादिपङ्क्त्यसंगतिः, निगमने साध्यस्य उपनये साध्यव्याप्यहेतुमत्वस्य च विधेयत्वादित्यत आह । **केवलोपनयेति** । **योजनयापि** । उद्देश्यतावच्छेदकवाचकपदस्योद्देश्यवाचकपदपूर्वत्वानुसन्धानेनाऽपि । **तत्र** । प्रतिज्ञानिगमनाधीनवोधे । **वीजत्वात्** । योजनाविरहप्रयोजनकत्वात् । तथा च शाब्दवोधविरहे तात्पर्यविरह एव वीजं किं योजनाविरहकल्पनेनेति भावः । **अप्राप्तेति** । प्रतिज्ञावाक्यजन्यज्ञानाऽविषयेत्यर्थः । **तादृशहेतुमत्वांशस्येति** । साध्यव्याप्यहेतुमत्वांशस्येत्यर्थः । **विधेयत्वसंभवेपीति** । विधेयकोटावाधिक्यात्, द्वयोरविधेयत्वादपरार्थत्वाच्चेतिभावः ।

**तदर्थस्य** । द्विरुक्तयत्पदार्थस्य । **सुन्दरोदण्डीति** । अभेदान्वयवोधे क्वचिद्विशेषणवाचकपदाव्यवहितोत्तरत्वविशिष्टविशेष्यवाचकपदज्ञानं कारणम्, यथा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्यापकत्वावच्छिन्नस्य तदर्थस्याऽभेदेनाऽन्वय इत्यपि न संभवति। सुन्दरोदण्डीत्यादौ दण्डाद्यंशे सुन्दराद्यभेदानन्वयवत्समानविभक्तिकत्वाभावेन मत्वर्थीयप्रकृत्युपस्थाप्येऽर्थे असमस्तनामार्थोऽभेदान्वयस्याऽसंभवात्। अभेदान्वयप्रतियोगिसापेक्षतयाऽ सामर्थ्येन साध्यवाचकपदोत्तरं तद्धिताऽसंभवाच्च। तत्पदस्य तावतापि सार्थक्याऽसंभवाच्च। तस्माद्यत्पदार्थे हेतोस्तत्पदार्थे च तस्मिन् साध्यस्य विधेयतया भानमेव समूहालंबनरूपं तत्र जायते तदुत्तरं व्यापकताबोधो मानसः। स एव वा शाब्दबोधः, साध्यवाचकपदस्य प्रकृतसाधनव्यापकताविशिष्टसाध्ये लाक्षणिकतया तत्पदार्थे व्यापकताविशिष्टसाध्यवत्तामवगाहते इत्युपेयम्। वीप्सासमभिव्याहारस्थले व्यापकतातात्पर्यस्याऽनादितया तादृशलक्षणाया निरूढलक्षणात्वेन वादिवाक्ये तत्स्वीकारे क्षतिविरहात्।

न च व्यापकताबोधस्याऽऽवश्यकत्वे नानाहेत्वधिकरणे वन्ह्यादिमत्वबोधस्याऽप्रयोजनकतया धूमादिकमुद्देश्यतावच्छेदकीकृत्य समूहालंबनानात्मक एव व्यापकताविशिष्टसाध्यबोध उपेयतां, यत्तत्पदं तु तादृशलक्ष्यार्थतात्पर्यग्राहकमेवास्त्विति वाच्यम्। अर्थबोधकत्वसंभवे

---

नीलघट इत्यादौ। क्वचिच्चविशेष्यविशेषणवाचकपदयोः समानविभक्तिकत्वज्ञानं कारणम् यथा नीलोघट इत्यादौ। सुन्दरो दण्डीइत्यादौ द्विविधस्याप्यभावाच्छाब्दबोधो वारणीयः। प्रकृतेपि भवन्मते सैव दुरवस्थेति भावः। **मत्वर्थीयप्रकृत्युपस्थाप्येऽर्थे** इति। मत्वर्थीयप्रकृतिः दण्ड-वन्ह्यादिपदम्। सुन्दरदण्डीत्यादौ अभेदबोधनादाह। **असमस्तेति** समासाघटकेत्यर्थः। **प्रतियोगीति**। प्रतियोगिवाचकपदेत्यर्थः। **सापेक्षतयेति**। तृतीयार्थोऽभेदः। सापेक्षत्वं च तद्धितानिविष्ट पदार्थोऽन्वितस्वार्थबोधकत्वम्। सापेक्षे न कृत्तद्धितसमासा इत्यनुशासनम्[1]। सर्वमिदंवीप्साविरहस्थले एव इत्युक्तौत्वाह। **तत्पदस्येति**। **इत्युपेयमिति**। तथा च महानसं धूमवत् धूमव्यापकवन्हिमत्, महानसान्यद् धूमवद् धूमव्यापकवन्हिमच्चेति समूहालंबनबोध इति भावः।

---

१. समर्थःपदविधिरिति सूत्रम्। अस्यार्थः—पदविधिः पदकार्यम्। कार्याणि च कृतद्धितसमासादीनि। समर्थः—समर्थाश्रित एव, सर्वं वाक्यं सावधारणमिति न्यायात्। एवकारव्यवच्छेद्यं चाऽसमर्थाश्रितत्वम्, असामर्थ्यं च स्वविशिष्टविशेष्यकशाब्दबोधानुकूलवृत्त्यघटकपदार्थान्वितस्वार्थपरत्वम्। तथा च प्रकृते वन्हिपदस्यवृत्त्यघटकद्विरुक्तयत्पदार्थान्वितस्वार्थपरत्वेऽसामर्थ्यान्न तदुत्तरं तद्धितसंभव इति भावः। वृत्तयश्च कृत्तद्धितसमासैकशेषसनाद्यन्तधातवः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



35 परन्तु प्रतिज्ञाहेत्वोः कथंचिदुपनयनिगमनयोः । 41

तत्परित्यागाऽसंभवात्। यो यो न वह्निमान् स न धूमवानित्यादौ व्यतिरेक्युदाहरणे, वह्निमद्भेदादिहेतुके धूमवद्भेदादिसाध्यके तादृशान्वय्युदाहरणे वा यत्तत्पदार्थाऽविवक्षायां प्रतियोगिवाचकपदसमानविभक्तिकपदोपस्थाप्यस्याऽनुयोगिनोऽप्रवेशेन तत्र नञाऽन्योन्याभावबोधनाऽसंभवाच्च । एवं चैत्रो जानाति कर्तृत्वादित्यादौ न्यायान्तर्गते यो यः करोति स जानातीत्युदाहरणे यत्तत्पदार्थाऽविवक्षायां धर्मिणोऽलाभेन साध्याश्रयविकलतयोदाहरणाऽऽभासताप्रसंगाच्चेति । एवं चोदाहरणसमुदायस्याऽवयवान्तरेण समं विशिष्टार्थप्रतिपादकत्वं सुतरामेव न संभवति इति भावः । एतेन हेतूदाहरणयोर्धूमवान् धूमाद्धूमव्यापकवह्निमानित्येतादृशविशिष्टार्थबोधजनकत्वसंभवादुदाहरणावयवान्तरयोरित्यनुपपन्नमित्यपि निरस्तम् । द्रागेव । सुतरामेव । न संभूयैकार्थप्रतिपादकत्वमित्यनुपज्यते ।

प्रतिज्ञाहेत्वोरित्यत्रापि नकारं विहाय ताभ्यां पर्वतोधूमज्ञानज्ञाप्यवन्हिमानित्येतादृशविशिष्टज्ञानजननादिति भावः !

अथ प्रतिज्ञाजन्यबोधानन्तरं कुत इति साध्यज्ञापकाकांक्षायां तन्निवर्तकं हेतुवाक्यं प्रयुज्यते, तन्निवर्त्तकता च पक्षविशेषणतानापन्नसाध्यांशे हेतुज्ञानज्ञाप्यत्वबोधनेनापि निर्वहतीति पक्षांशे हेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवैशिष्ट्यावगाहिबोधस्याऽनुपयोगितया न तात्पर्यविषयत्वमिति चेन्न। पर्वते वन्हिबोधानन्तरं पर्वते यद्वन्हिज्ञापकं तत्रैवाऽऽकांक्षा जायते, तन्निवृत्तिश्च साध्ये धूमादिज्ञानजन्यपर्वतविशेष्यकज्ञानविषयत्वप्रतिपादनेनैव, धूमाद्वन्हिमन्महानसमित्यादिवाक्यस्य पर्वते वन्हिमत्वं कुत इत्याकांक्षानिवर्त्तकत्वाभावात्। पंचमीतस्तादृश-

---

उपेयतां । 'स्वीक्रियतां । धूमवान् धूमव्यापकवन्हिमानित्याकारक एक बोधः स्वीक्रियतामिति भावः । धूमवद्भेदादिसाध्यके इति । ह्रदो धूमवद्भिन्नो वन्हिमद्भेदादित्यादौ । तादृशान्वय्युदाहरणे वेति । यो यो न वन्हिमान् स न धूमवानित्यन्वय्युदाहरणे इत्यर्थः । तत्र । उदाहरणे । अन्योन्याभावबोधनाऽसंभवाच्चेति । अनुयोग्यविषयकनञर्थबोधस्याऽप्रसिद्धत्वादिति भावः । विकलतयेति । अबोधकत्वेनेत्यर्थः । उदाहरणाभासताप्रसंगाच्चेति । उदाहरणत्वं न स्यादिति भावः । जानातीत्यादौ त्वन्यत्राश्रयविकलबोधेऽपि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पर्वतविशेष्यकज्ञानविषयत्वभानं च तद्विशेषणतापन्नसाध्यांशे एव, उक्तवाक्यान्महानसादिविशेषणतयोपस्थिते तदप्रतीतेः, एकधर्मिविशेषणतापन्नेऽन्यविशेष्यकहेतुविशेषज्ञानाधीनज्ञानविषयत्वबोधकतायाः पंचम्या अव्युत्पन्नत्वादिति धूमाद्वन्हिमान्पर्वत इति विशिष्टवैशिष्ट्यबोधस्याऽऽवश्यकत्वात् ।

कथंचिदिति । निगमनेऽयंपदाननुषंगपक्षे वन्हिव्याप्यधूमवत्पर्वतादिरूपोपनयार्थे निगमनार्थधमज्ञानज्ञाप्यवन्हिमत्त्वाद्यन्वयबोधसंभवादिति भावः । अनुषंगपक्षे तु तादृशवन्ह्यादिमत्पक्षरूपनिगमनार्थमात्रबोधेनैवाऽऽकांक्षानिवृत्तेरुपनयार्थे विशिष्टपक्षे निगमनार्थीभूतविशिष्टपक्षबोधस्यानुपयुक्तस्य न तात्पर्यविषयतेति कथंचिदित्युक्तम् । इदं त्ववधेयम् । अननुषंगपक्षेपि उपनयार्थैकदेशेऽयंपदार्थे पक्षमात्रे निगमनार्थान्वयमात्रेणैव कृतकृत्यतया तत्समुदायार्थे विशिष्टपक्षे निगमनार्थविधेयकबोधेऽपि तात्पर्यमप्रामाणिकमिति ।

---

उदाहरणे तदसंभव इति पूर्वस्माद्भेद इति बोध्यम् । अत एव ज्ञानवानिति नोक्तम्; तत्र मत्वर्थाश्रयत्वभानेनोक्तानुपपत्त्यभावात् । एतेन । अर्थबोधकत्वसंभवे तत्परित्यागासंभवादित्याद्युक्तदूषणेन ।

ताभ्यां । प्रतिज्ञाहेतुभ्यां । स्वार्थोपस्थितिद्वारा इति शेषः । ननु वन्हेर्ज्ञापकं किं- वह्निः किं ज्ञानज्ञाप्य इति वाऽऽकांक्षा जायते । तथाच पक्षविशेषणतानापन्नसाध्ये हेतुज्ञानज्ञाप्यत्वस्यान्वयादेव तन्निवृत्तिसंभवात् पक्षविशेषणतापन्नसाध्ये तद्बोधोऽनुपयोगीत्याशंकते । अथेति । तत्रैव । पर्वतविशेष्यकवह्निप्रकारकज्ञानजनके एव । आकांक्षा जायते इति । आकांक्षा च किंचिद्ज्ञानजन्यपर्वतविशेष्यकज्ञानविषयो वह्निरित्याकारिका । साध्ये इति । धूमादिज्ञानजन्यं यत्पर्वतविशेष्यक"वह्निप्रकारकं"ज्ञानं तद्विषयत्वप्रतिपादनेनैवेत्यर्थः । विषयता च प्रकारतारूपा बोध्या । एवकारव्यवच्छेद्यमाह । धूमादिति । पर्वतेवन्हिमत्वं कुत इति । कुत इत्याकारकमेव प्रश्नवाक्यं प्रतिज्ञावाक्यैकवाक्यतयैव विशिष्टाकांक्षाबोधनात्, पर्वतेवन्हिमत्वं कुत इति तु विशिष्टाकांक्षाप्रतिपादनाय लिखितम्, अन्यथा एतस्य प्रश्नवाक्यत्वे तेनैवैकवाक्यतया धूमादित्यस्य विशिष्टार्थबोधकत्वसंभवे प्रतिज्ञयैकवाक्यताविरहादिति ध्येयम् । अथ धूमज्ञानजन्यपर्वतविशेष्यकज्ञानविषयत्वं पक्षविशेषणतानापन्नसाध्ये कुतो न भासते इत्याशंकां तद्धर्मिविशेषणतापन्ने एव साध्ये तद्विशेष्यकज्ञानविष-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



३८ एकवाक्यताव्यवहारस्तु विशिष्टैकार्थप्रतिपत्तिपरतामात्रेण। तादृशपरामर्शप्रयोजकत्वं च यदि तद्विषयतत्तत्पदार्थोपस्थापकतया तदा उदाहरणोपनययोरेव तत्पर्यवस्यति।

अथ तदानुकूल्यमात्रेण। तदा को वन्हिमान्, कुतो धूमवत्त्वादित्यादेरपि तथात्वमित्यादिकं समाहितम्। ४३

नन्वेवं प्रतिज्ञादीनां पंचानां कथमेकवाक्यताव्यवहार इत्यत आह। एकेति। विशिष्टेति। विशिष्टैकार्थप्रतीतीच्छाप्रयोज्यत्वमात्रेणेत्यर्थः। मात्रपदेन तादृशप्रतीतिजनकत्वव्यवच्छेदः। तादृशी च प्रतिपत्तिर्निगमनरूपचरमवाक्यार्थबुद्धिः, तदुदीच्यो वा मानसः परामर्शः। तत्परता च तामजनयतोऽप्युत्तरोत्तरवाक्यप्रयोजिकामाकांक्षामुत्थापयतः प्रतिज्ञादे-

---

यत्वभानमिति नियममङ्गीकृत्य निराकुरुते। पंचमीत इति। तादृशेति। धूमादिज्ञानजन्येत्यर्थः। अस्य च पर्वतविशेष्यकज्ञानेऽन्वयः। तद्विशेषणतापन्नेति। पर्वतविशेषणतापन्नेत्यर्थः। उपस्थिते इति साध्यांशे इत्यनुषज्यते। तदप्रतीतेः। धूमज्ञानजन्यज्ञानविषयत्वाऽप्रतीतेः। तथा च धूमादित्यत्र धूमपदस्य धूमज्ञानमर्थः। पंचम्याः समभिव्याहृतप्रतिज्ञाघटकपक्षपदार्थतावच्छेदकावच्छिन्नविशेष्यकज्ञानजन्यज्ञानविषयत्वमर्थः। तदेवाह। एकधर्मीति।

अन्वयबोधसंभवादिति। उपनयायोद्देश्यकनिगमनार्थविधेयकबोधसंभवादिति यावत्। अनुषङ्गपक्षेतु इति। निगमनेऽयंपदानुषङ्गपक्षेत्वित्यर्थः। तथाच अयंपदार्थशुद्धपर्वतत्वावच्छिन्ने एव धूमज्ञानज्ञाप्यवन्हिमतोऽभेदान्वयेनैवाऽऽकाङ्क्षानिवृत्तिरित्याह। तादृशेति। धूमज्ञानज्ञाप्येत्यर्थः। विशिष्टपक्षे। वन्हिव्याप्यधूमवदभिन्ने पर्वते। विशिष्टपक्षबोधस्य। धूमज्ञानज्ञाप्यवन्हिमदभिन्नपर्वताभेदबोधस्य।

तत्परताच। तादृशेच्छाप्रयोज्यता च। पदार्थोपस्थापकत्वरूपमिति। वाक्यांतरघटितन्यायेऽतिप्रसंगवारणाय तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वं विशेषणं देयम्, एवं चोदाहरणोपनययोरेव तत्पर्यवसानमिति बोध्यम्।

पर्यवसितोर्थ इति। अथ यादृशयादृशवाक्यानां परामर्शविषयपदार्थोपस्थापकत्वमिति निर्वचने सकलन्यायघटकप्रतिज्ञादिघटकपदानामपि परामर्शप्रयोजकतया तावद्वृत्तिसमुदायत्वस्य कस्मिन्नपि न्यायेऽ सत्त्वेनाऽ संभवः। उदाहरणोपनययोरतिव्याप्त्यसंगतिश्चेति चेन्न। यादृशयादृशेत्यस्य यादृशसमुदायत्वाश्रयप्रयोज्यस्मृतिविषयत्वं परामर्शविषयताव्यापकं तादृशसमुदायत्वाश्रयत्वमर्थः। एतेन वाक्यानां पदार्थोपस्थापकत्वाभावात्कथमतिव्याप्तिदानमितिनिरस्तम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रिहधूम इति वचसामानुमानिकवन्ह्यादिधीपरतावन्निर्णहत्येन, तत्प्रयोजकतयैष । ननु तावद्भिरवयवैः संभूयैकमहावाक्यार्थधीजननेपि परामर्शप्रयोजकीभूतस्वीयतत्तद्विशिष्टार्थधिजनकतायाः सर्वावयवेष्वेव सत्वेन निरुक्तलक्षणसमन्वयो नानुपपन्न इत्यतआह । परामर्शप्रयोजकत्वचेति । परामर्शप्रयोजकज्ञानजनकत्व चेत्यर्थः । तद्विषयेति । तत्तत्पदार्थोपस्थापकतयेति । अभेदे तृतीया । तथा च तदुपस्थापकत्वरूपमित्यर्थः । विवक्षितमितिशेषः । तथा च यादृशयादृशवाक्यैः परामर्शविषयसकलपदार्था उपस्थाप्यन्ते तावत्समुदायत्वं विवक्षितमिति पर्यवसितोर्थः । उदाहरणोपनययोरेवेति । उपनयस्य व्याप्त्यवोधकतामतामिप्रायेणोदाहरणान्तर्भावः । तत् । न्यायत्वम् । पर्यवस्यतीति । ताभ्यामेवपरामर्शविषयसकलपदार्थोपस्थापनादिति भावः ।

अथ यथा कथंचित्परामर्शानुकूलत्वं यादृशयादृशवाक्यानां तादृशतादृशवाक्यसमुदायत्वं विवक्षितमतोनोदाहरणोपनयमात्रेऽतिव्याप्तिरित्याशंकते । अथेति । तदानुकूल्यमात्रेणेति । पूर्ववदभेदेतृतीया । परामर्शप्रयोजकत्वमित्यनुषज्यते । इत्यादेः । इत्यादिसमुदायस्य । तथा-

विवक्षितमिति । तथा च प्रतिज्ञादिपञ्चवाक्यानामपि तादृशपरामर्शप्रयोजकतया तावद्वृत्तिसमुदायत्वस्योदाहरणोपनययोरसत्वान्न तादृशवाक्यद्वयेऽतिव्याप्तिरिभावः[1] ।

पूर्ववदिति । तत्तत्पदार्थोपस्थापकतयेति वदित्यर्थः । अनुषज्यते इति । तथा च परामर्शानुकूलत्वं परामर्शप्रयोजकत्वमिति भावः । तथात्वम् न्यायत्वम् ।

---

१ अथ यादृशयादृशवाक्यानामित्युक्तरीत्या न्यायान्तरवाक्यानामपि तादृशत्वात्तावद्वृत्तित्वस्य न्यायत्वेऽसत्वादसंभवः, वक्ष्यमाणातिव्याप्त्यसंगतिश्च । नचयादृशसमुदायत्वाश्रयप्रयोज्यस्मृतिविषयत्वं परामर्शविषयताव्यापकं तादृशसमुदायत्वाश्रयत्वमितिपूर्वनिरुक्तार्थे तात्पर्यं वक्तुं शक्यम् । अविशेषप्रसंगात्, उक्तातिव्याप्ते दुर्वारत्वाच्चेति चेन्न । यत्किंचित्परामर्शप्रयोजकता यादृशयादृशवाक्यानामिति विवक्षणीयम् । न्यायान्तरगतवाक्यानामतादृशत्वान्नासंभवः । न च को वन्हिमान कुत इत्यादिवाक्यानामपि तादृशतयाऽसंभवोदुर्वार इति वाच्यम् । एकप्रयुक्तत्वेन तादृशवाक्यस्य विशेषणीयत्वात् । न चाऽग्रिमदीधित्यसंगतिः-शंक्या । तादृशवाक्यपञ्चकस्यैकप्रयुक्तत्वेन तत्रैवातिव्याप्तेरेवाभिप्रेतत्वान्न वाक्यदशकेत्यस्य वक्तुं शक्यत्वात् । न च तथा सति पर्वतोवन्हिमान्, कुतः?धूमादित्यादेरित्यत्र पर्वतोवन्हिमान् इत्यस्य वैफल्यं शंक्यं लक्षणसमन्वयार्थं तदुक्तेः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



२५ अनुमितिचरमकारणलिंगपरामर्शप्रयोजकशाब्दज्ञानजनक शाब्दज्ञानजनकवाक्यत्वमवयवत्वम् । ७७

४१ अवयवत्वन्तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम् । ५७

त्वम् । स्यादितिशेषः । कोवन्हिमानित्यादिवाक्यानामपि जिज्ञासाज्ञापनद्वारा अवयवप्रयोक्तत्वेन यथाकथंचित्परामर्शानुकूलत्वसंभवादितिभावः । इत्यादीत्यादिपदात् व्युत्क्रमप्रयुक्तप्रतिज्ञादावतिव्याप्त्यादेःपरिग्रहः ।

मूलोक्तावयवलक्षणे शाब्दज्ञानस्याऽनुमितिचरमकारणलिंगपरामर्शप्रयोजकशाब्दज्ञानजनकत्वाभिधानं पंचवाक्यानामेकमहावाक्यार्थधीजनकत्वाभिमानेन प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थगोचरशाब्दधीविशेषाणां परिचयायैव, तेषां निवेशस्तु विशिष्य तत्तादर्थविषयकशाब्दबुद्धित्वेन न तु तादृशशाब्दधीजनकत्वेन, तथासत्येकैकावयवजन्यशाब्दबुद्धेरपि परामर्शप्रयोजकतया तज्जनकाऽवान्तरवाक्यार्थज्ञानजनकेऽवयवावयवेऽतिप्रसंगस्य दुर्वारत्वात् । न च साध्यविशिष्टपक्षादिविषयकशाब्दबुद्धित्वेन वोधपंचकस्य निवेशेऽननुगमः । जनकान्तस्य तत्तद्बोधजनकान्यतमत्वादिरूपानुगतधर्मावच्छिन्नपरत्वात् । नचैवं सति न्यायानन्तर्गते पर्वतोवन्हिमानित्यादिवाक्ये ऽतिव्याप्तिः । वाक्यपदस्य न्यायान्तर्गतत्वार्थकत्वादित्यभिप्रेत्य पर्यवसितं तल्लक्षणार्थमाह । न्यायेति ।

---

मूले । न्यायेऽतिव्याप्तिवारणाय द्वितीयशाब्दज्ञानजनकेति । शाब्दज्ञानस्येति । द्वितीयशाब्दज्ञानस्येत्यर्थः । अभिमानेनेति । तथा च प्रथमशाब्दज्ञानपदं न तावदर्थविषयकबोधपरं, प्रत्येकावयवार्थविषयकशाब्दबोधस्य तदजनकत्वात् । तेषां । तादृशपरामर्शप्रयोजकशाब्दज्ञानजनकानां । तथासति । तादृशशाब्दधीजनकत्वेन निवेशे सति । तज्जनकेति । एकैकावयवजन्यशाब्दबोधजनकेत्यर्थः । अननुगम इति । तथा च तादृशैकैकविषयकबोधजनकत्वस्य लक्षणत्वेऽवयवेऽव्याप्तिः । तादृशबोधपञ्चजनकत्वस्य लक्षणत्वेऽसंभवः स्यादिति भावः । जनकान्तस्य । द्वितीयजनकान्तस्य ।

---

न च विप्रतिपत्तिघटकपर्वतोवन्हिमानितिवाक्यस्य न्यायप्रयोक्तृप्रयुक्तत्वेन तादृशतद्घटितसमुदायवृत्तित्वस्य न्यायत्वेऽसंभवादसंभव इति वाच्यम् । आवृत्तौ सैव प्रतिज्ञेति मते विप्रतिपत्तिघटकवाक्यस्य पुनरनुसन्धानमात्रमेव न पुनः प्रतिज्ञावाक्योच्चारणमिति तस्य वाक्यान्तरत्वाभावादिति विभावनीयम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



(अधिकपाठः) यद्यप्युदासीने न्यायान्तर्गतत्वघटितप्रतिज्ञाद्यन्यतमत्वमेव नास्ति तथापि तदघटितप्रतिज्ञाद्युपादानाऽभिप्रायेणेदम् ।

अथ किमिदं न्यायान्तर्गतत्वं, न तावत्स्वाविषयकप्रतीत्यविषयन्यायकत्वम्, प्रतिज्ञाद्यविषयकप्रतीत्यापि हेत्वादिरूपन्यायैकदेशस्य विषयीकरणात्. तद्घटितसमुदायात्मके न्याये प्रतिज्ञाद्यविषयकप्रतीत्यविषयत्वस्य दुर्घटत्वात्, एकदेशवृत्तेर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानंगीकारात् । नापि न्यायविषयिताव्यापकविषयिताकत्वं, उच्चारणभेदेनैकानुपूर्व्यवच्छिन्नवाक्यानामपि भेदात्कस्याश्चिदपि प्रतिज्ञाव्यक्तेर्विषयिताया एकविधमपि न्यायमवगाहमानेषु सर्वेषु ज्ञानेषु वृत्त्यसंभवात् । मैवम् । स्वाविषयकप्रतीत्यविषयन्यायकत्वमेव तत् । न्यायत्वसामानाधिकरण्यमात्रेण तादृशप्रतीत्यविषयत्वं विवक्षणीयम् । एकैकप्रतिज्ञादिव्यक्त्यविषयकप्रतीत्या व्यक्त्यन्तरघटितन्यायस्य तन्न्यायैकदेशहेत्वादेश्चाऽवगाहनेऽपि न्यायत्वाधिकरणे तत्प्रतिज्ञाव्यक्तौ तत्प्रतिज्ञाव्यक्त्यविषयकप्रतीत्यविषयत्वसत्त्वेन तासां तथात्वमव्याहतमेव अथवा न्यायत्वाश्रयत्वमेव तथा । पर्याप्त्यविवक्षया एकदेशस्यापि तथात्वोपपत्तिः ।

---

स्वाविषयकेति ! स्वं-प्रतिज्ञादि (तत्तदवयवाः) तदविषयकप्रतीतिर्हि न्यायविषयकप्रतीतिर्न भवितुमर्हति किन्तूदासीनप्रतीतिः– तदविषयो यो न्याय स्तत्कत्वं प्रतिज्ञादौ इति समन्वयः । तद्घटितेति । हेतुघटितेत्यर्थः । एकदेशवृत्तेः । हेत्वादिवृत्तेः । स्वाविषयकप्रतीतिविषयत्वस्येति शेषः । विषयत्वमव्यासज्यवृत्तिधर्मः । समुदायत्वरूपं न्यायत्वम्, तच्च व्यासज्यवृत्ति । तथाचाऽसंभव इतिभावः । एकैकप्रतिज्ञादिव्यक्त्यविषयकप्रतीत्या तादृशप्रतिज्ञाव्यक्त्यन्तरघटितन्यायस्य विषयीकरणाच्चेत्यपि बोध्यम् । वृत्त्यसंभवादिति । तथाचाऽसंभवस्तदवस्थ एवेति भावः । स्वेति । स्वं न्यायान्तर्गतत्वेनाभिमतप्रतिज्ञादि । ननु यत्किंचिन्न्यायविषयिताव्यापकविषयिताकत्वं तत्, प्रतिज्ञादिविषयिताया यत्किंचिन्न्यायविषयिताव्यापकत्वमस्त्येवेति नोक्तदोष इति चेन्न । उदासीनप्रतिज्ञासमानाधिकरणत्वादिना न्यायविषयितायास्तद्व्याप्यत्वादुदासीनेऽतिप्रसंगस्य दुर्वारत्वादिति ध्येयम् । तासां । तत्प्रतिज्ञाव्यक्तीनां । तथात्वं । तादृशप्रतीत्यविषयत्वं । तथा न्यायान्तर्गतत्वम् । एकदेशस्यापि । प्रतिज्ञादेरपि । तथात्वोपपत्तिः । न्यायत्वाश्रयत्वोपपत्तिः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वस्तुतो न्यायत्वघटकस्य समुदायत्वांशस्याऽत्र निष्प्रयोजनकत्वेनाऽनिवेशादुचितानुपूर्वीकत्वमात्रं निवेशितं, तदेव च न्यायान्तर्गतत्वमेकदेशसाधारणम् । उचितानुपूर्वीकत्वं च प्रतिज्ञोत्तरहेत्वादिघटितवाक्यपंचकानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वम्, । विशिष्टधर्मावच्छिन्नप्रतियोगिताच्छेदकतायास्तद्घटकसमुदायपर्याप्ततया एकदेशस्यापि तदाश्रयत्वात्, प्रतिज्ञादेस्तद्वत्त्वमक्षतम् । उपनयविशेषोत्तरत्वाविशिष्टनिगमनत्वशरीरे च वैशिष्ट्यघटकतया निगमनस्यान्तर्भावात्तत्साधारण्यमक्षतमेवोक्तधर्मस्य ।

विशिष्टस्याऽवच्छेदकतास्थले एकमवच्छेदकमपरं च तद्विशेषणं तन्निष्ठावच्छेदकतावच्छेदकं न तु समुदायेऽवच्छेदकत्वं पर्याप्तमित्युपगमे च तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकविषयिताकत्वं विवक्षणीयम् । तादृशी च तादृशानुपूर्वीविशिष्टवैशिष्ट्यायवगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणता- तदवच्छेदकत्वं च हेत्वादिनिष्ठानन्तर्यप्रकारतापन्नप्रतिज्ञादिविषयितानामपि अव्याहतम् । विनिगमनाविरहादितरविषयितानिरूपितत्वेन-निश्चयविशिष्टत्वेन च कारणीभूतज्ञानविषयसकलनिरूपितविषयितानां कारणतावच्छेदकत्वात् ।
प्रतिज्ञोत्तरहेत्वादिविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितां-प्रतिज्ञोत्तरोहेतुरित्यादिज्ञानसाधारणकारणतां— तादृशानुपूर्व्यवच्छिन्नभिन्नवाक्यत्वाद्यवच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वाद्यवच्छिन्नकार्यतानिरूपितां तादृशवाक्यत्वादिप्रकारकज्ञानकारणतां चादायोदासीनेऽतिप्रसंगवारणाय कारणतायां तादृशधर्मव्याप्यत्वव्यापकत्वयोर्निवेशनम् ।

---

समुदायत्वांशस्येति । स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्तिभिन्नत्वविशिष्ट-प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकयत्किंचिद्धर्मपंचकव्यापकत्वविशिष्टसमुदायत्वांशस्येत्यर्थः । अत्र । न्यायत्वाश्रयत्वरूपन्यायान्तर्गतत्वघटके । मात्रपदेनप्रतिज्ञादिपंचकसमुदायत्वस्य "प्रतिज्ञात्वादिपर्याप्त्यवच्छेदकयत्किंचिद्धर्मव्यापकत्वविशिष्टसमुदायत्वपरस्य" व्यावृत्तिः । ननु स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत्समुदायत्वं तदन्यत्वरूपोचितानुपूर्वीकत्वमात्रोक्तावुदासीनेऽतिव्याप्तिरित्यतआह । उचितानुपूर्वीकत्वं चेति । आनुपूर्वीविशेषावच्छिन्नभेदेति । भेदश्च प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरत्वविशिष्टनिगमनत्वरूपानुपूर्वीमान्नेतिप्रतीतिसाक्षिको ग्राह्यः । निगमनत्वे उपनयोत्तरत्ववै०

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सामानाधिकरण्यसंबन्धेन । उक्तधर्मस्येति । संसर्गसाधारणप्रतियोगितावच्छेदकत्वं निविष्टमितिभावः ।

**विशिष्टस्येति ।** अवच्छेदकतावच्छेदकसाधारणाऽवच्छेदकत्वाऽस्वीकारेत्वाह **तादृशानुपूर्वीविशेषप्रकारकेति ।** प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरत्वविशिष्टनिगमनत्वरूपाऽऽनुपूर्वीविशेषप्रकारकेत्यर्थः । तथा च प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकविषयताश्रयत्वं तदर्थः । **बुद्धित्वावच्छिन्नेति ।** तादृशानुपूर्वीमद्वाक्यवद् गगनमिति बुद्धिनिष्ठेति यावत् । **तदवच्छेदकत्वंचेति ।** कारणतावच्छेदकत्वं चेत्यर्थः । ननु एतन्मते निगमनविषयिताया एव कारणतावच्छेदकत्वं उपनयादिविषयितानां च तदवच्छेदकत्वमिति कथं प्रतिज्ञादिनिष्ठत्वमुचितानुपूर्वीकत्वस्येत्यत आह । **विनिगमनाविरहादिति ।** प्रतिज्ञात्वावच्छिन्नविषयितानिरूपितेत्यादिक्रमेण निगमनत्वावच्छिन्नविषयिताया इव निगमनत्वावच्छिन्नविषयितानिरूपितेत्यारम्य प्रतिज्ञात्वावच्छिन्नविषयिताया एवं हेत्वादिविषयितायाः कारणतावच्छेदकत्वं बोध्यम् ।

अथ हेत्वादिविषयियितायांकारणतावच्छेदकत्वं दुर्घटं, तथाहि । हेतुप्रकारतांशे विशेषणीभूतप्रतिज्ञानिरूपितत्व उदाहरणविशेष्यतानिरूपितत्वोभयस्य कारणतावच्छेदकत्वस्वीकारे व्यासज्यवृत्तिकारणतावच्छेदकत्वापत्तिः अतः सामानाधिकरण्यसंबन्धेन प्रतिज्ञाप्रकारतानिरूपितत्वविशिष्टोदाहरणविशेष्यतानिरूपितहेतुप्रकारताशालिनिश्चयत्वेन कारणता वाच्या । तथा च कारणतावच्छेदककोटौ सामानाधिकरण्यांशस्याधिकस्य निवेशनमेव विनिगमकमिति चेन्न । प्रतिज्ञाप्रकारतानिरूपितहेतुप्रकारतानिरूपितोदाहरणप्रकारतानिरूपितेत्यादिक्रमेण कार्यकारणभावेऽपि हेतुप्रकारतांशे विशेषणीभूतप्रतिज्ञाप्रकारतानिरूपितत्व हेतुप्रकारतात्वोभयस्योक्तयुक्तया कारणतावच्छेदकत्वेन सामानाधिकरण्यसंबन्धेन प्रतिज्ञाप्रकारतानिरूपितत्वादिवैशिष्ट्यनिवेशस्याऽऽवश्यकत्वे उभयत्र सामानाधिकरण्यनिवेशे विनिगमकाभावादिति ।

कारणतायां निश्चयत्वसमनैयत्यं च निश्चयत्वव्याप्यत्वे सति व्यापकत्वम् । तत्र व्याप्यत्वनिवेशस्य फलमाह । **प्रतिज्ञोत्तरेति ।** प्रतिज्ञोत्तरहेतुमद्गगनमिति विशिष्टवैशिष्ट्यबुद्धीत्यर्थः । **प्रतिज्ञोत्तरोहेतुरित्यादीति ।** आदिना प्रतिज्ञोत्तरहेतूत्तरोदाहरणम् । एवं तादृशोदाहरणोत्तरोपनयः तादृशोपनयोत्तरनिगमनमिति परिग्रहः । **ज्ञानसाधारणेति ।** तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वव्यापि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कामिति यावत्। **कारणतामिति**। अस्य आदायेत्यनेनाऽन्वयः। **तथा च** व्याप्यत्वाऽनिवेशे तादृशानुपूर्वीविशेषप्रकारकनिश्चये प्रतिज्ञोत्तरहेतुविविशिष्ट-वैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणतासत्वात्, "तादृशानुपूर्वीवि-शेषप्रकारकनिश्चयेनाऽपि प्रतिज्ञोत्तरहेतुविशिष्टवैशिष्ट्यावगाहिबोधजननात्" अत-स्तादृशकारणतावच्छेदकविषयताश्रयत्वमादायोदासीनप्रतिज्ञाहेतुसमुदायेऽतिव्या-प्तिरतोव्याप्यत्वनिवेशः[1]। **निवेशे तु** तादृशकारणतायाः प्रतिज्ञोत्तरहेतुरिति-ज्ञानेऽपि सत्वात्तत्र तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वाऽसत्वान्न तादृशका-रणतायां तन्निश्चयत्वव्याप्यत्वमतस्तामादाय नातिव्याप्तिरिति भावः। तादृश-निश्चयत्वव्यापकत्वनिवेशस्य **प्रयोजनमाह**। **तादृशानुपूर्व्यवच्छिन्नभिन्नेति**। **बुद्धित्वावच्छिन्नेति**। तादृशानुपूर्व्यवच्छिन्नभिन्नवाक्य "प्रतिज्ञाहेतूदाहरणोप-नयनिगमन-पर्वतोवन्हिमानिति वाक्य" वद् गगनमितिबुद्धित्वावच्छिन्नेत्यर्थः। **तादृशवाक्यत्वादिप्रकारकेति**। तादृशानुपूर्व्यवच्छिन्नभिन्नंवाक्यं "प्रतिज्ञाहे-तूदाहरणोपनयनिगमन-पर्वतोवन्हिमानितिवाक्य" मित्याकारकेत्यर्थः। **उदासीने**। प्रतिज्ञादौ। तथा च **व्यापकत्वाऽनिवेशे**[तादृशानुपूर्वीप्रकारकनिश्चये तादृशानुपूर्व्यवच्छिन्नभिन्नवाक्यत्वावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नका-र्यतानिरूपितकारणतायाः सत्वात्, "विशिष्टबुद्धिंप्रति विशेषणतावच्छेदकप्र-कारकनिश्चयत्वेन कारणत्वात्"]तादृशानुपूर्व्यवच्छिन्नभिन्नं वाक्यमिति निश्चयनिष्ठकारणतायाः तादृशानुपूर्वीप्रकारकनिश्चयत्वव्याप्यत्वात् तादृश-कारणतावच्छेदकविषयताश्रयत्वस्योदासीनप्रतिज्ञादौ सत्वादतिव्याप्तिरतो-**व्यापकत्वनिवेशः**। निवेशेतु तादृशकारणतायां, तादृशानुपूर्वीप्रकारकनिश्चय-त्वव्यापकत्वविरहान्नातिव्याप्तिः। तादृशनिश्चयत्वावच्छिन्नकारणतानिवेशेऽ-**प्ययमेव** दोषो वोध्यः। भ्रमप्रमासाधारणनिरूप्यनिरूपकभावापन्नवियिताया एव कारणतावच्छेदकत्वेन तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वस्य तादृशनि-श्चयत्व**पर्याप्तावच्छेदकता**ककारणतायाः प्रवेशाऽसंभवादिति ध्येयम्[1]।

---

१. अत्र तादृशनिश्चयत्वव्याप्यत्वं न **तादृशनिश्चयत्वाभाववदवृत्तित्वरूपं**, स्वरूपसंबन्धात्मिकायाः कारणतायाः प्रतिव्यक्तिभेदेन भिन्नत्वे प्रतिज्ञोत्तरत्वविशिष्ट-हेतुवैशिष्ट्यावगाहिबुद्धि प्रति हेतुधर्मिकप्रतिज्ञोत्तरत्वप्रकारकनिश्चयस्य कारणत्वेपि निगमनं प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरमिति निश्चये वर्त्तते या कारणता तस्या स्ताहशनिश्चयत्वाभाववदवृत्तितया तदवच्छेदकत्वस्य प्रतिज्ञोत्तरत्वविषयतानिरूपितहेतुत्वावच्छिन्नविषयतात्वेन प्रतिज्ञोत्तरोहेतुरितिज्ञानीय-विषयतायां सत्वात्तादृशविषयतावत्वमादाय न्यायानन्तर्गतप्रतिज्ञोत्तरहेतावति-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्याप्तेः किन्तु तादृशनिश्चयत्वाभाववद्वृत्तिविषयित्वानवच्छिन्नत्वरूपं "तादृशानुपूर्वीप्रकारताशून्यज्ञानवृत्तिविषयित्वानवच्छिन्नत्वरूपं वा"। तथा च प्रतिज्ञोत्तरत्वविषयतानिरूपितहेतुत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना या तादृशविशिष्टानुपूर्वीप्रकारकनिश्चयवृत्तिकारणता तस्या अपि तादृशविशिष्टानुपूर्वीप्रकारताशून्यं यत्प्रतिज्ञोत्तरोहेतुरितिज्ञानं तद्वृत्तिविषयित्वावच्छिन्नत्वान्न तादृशकारणता लक्षणघटिका। एवं तादृशनिश्चयनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपं व्यापकत्वमपि स्वरूपसंबन्धात्मिकायाः कारणताया भिन्नत्वेऽप्रसिद्धम्, अतस्तादृशभेदप्रतियोगितावच्छेदकत्वं स्वावच्छेदकीभूतविषयित्वसंबन्धावच्छिन्नं ग्राह्यम्। तथा च तादृशानुपूर्वीप्रकारकैकज्ञानवृत्तिकारणताया अपि स्वावच्छेदकीभूतविषयित्वसंबन्धेन तादृशापरज्ञाने सत्वात्स्वावच्छेदकीभूतविषयित्वसंबन्धावच्छिन्न तादृशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकताया अभावस्तादृशकारणतायामक्षतमेव।

ननु यथा रक्तदण्डवानिति बुद्धिं प्रति दण्डत्वावच्छिन्नधर्मिकरक्तत्वप्रकारकनिश्चयत्वेन कारणता। तत्र दण्डत्वावच्छिन्नधर्मिकरक्तत्वप्रकारकनिश्चयत्वं च दण्डत्वाद्यवच्छिन्नधर्मिकरक्तत्वाभावाऽप्रकारकत्वे सति दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वप्रकारकज्ञानत्वरूप मिव — दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वाभावाप्रकारकत्वे सति रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यताकज्ञानत्वमपि। तथा च दण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वप्रकारत्वावच्छिन्ना या कारणता रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यत्वावच्छिन्ना या च कारणता तदुभयोः साक्षादवच्छेदकं दण्डत्वावच्छिन्नधर्मिकरक्तत्वाभावाभावाप्रकारकत्वम्। तथेहापि अव्यवहितोत्तरत्वसंबन्धावच्छिन्नप्रतिज्ञात्वावच्छिन्नविषयतानिरूपिता या तादृशसंबन्धावच्छिन्नहेतुत्वावच्छिन्नविषयता तन्निरूपिता या तादृशसंबन्धावच्छिन्नोदाहरणत्वावच्छिन्नविषयता तन्निरूपिता या तादृशसंबन्धावच्छिन्नोपनयत्वावच्छिन्नविषयता तन्निरूपिता या निगमनत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वमपि। निगमनत्वावच्छिन्नविशेष्यताकाऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नतादृशोपनयाभावाऽप्रकारकत्वे सति तादृशोपनयप्रकारतानिरूपितनिगमनत्वावच्छिन्नविशेष्यताकज्ञानत्वमिव—तादृशोपनयाभावाऽप्रकारकत्वे सति निगमनत्वावच्छिन्नविशेष्यतानिरूपिताऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नोपनयप्रकारताशालिज्ञानत्वमपि भवति एवं क्रमेण विनिगमनाविरहात्तादृशविषयतान्तःपातिसकलविषयत्वावच्छिन्ना या या कारणताः तासां सर्वासां एवाऽवच्छेदककीभूतं निगमनत्वावच्छिन्नविशेष्यकतादृशोपनयाभावाऽप्रकारकत्वं भवति तथा च विशेष्यांशं परित्यज्य निगमनत्वावच्छिन्नविशेष्यकतादृशोपनयोत्तरत्वाभावप्रकारकान्यत्वनिष्ठा या स्वरूपसंब-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्यावच्छिन्नाऽवच्छेदकता तन्निरूपिका या कारणता तदवच्छेदकीभूतविषयताव-त्त्वमेव न्यायान्तर्गतत्वमस्तु । तेनैव प्रतिज्ञोत्तरहेतुवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितहेतुविशेष्यकप्रतिज्ञोत्तरत्वप्रकारकनिश्चयत्वावच्छिन्नकारणताया व्युदासः संभवति तादृशकारणतावच्छेदककोटौ निगमनत्वावच्छिन्नविशेष्यकतादृशोपनयोत्तरत्वाभावप्रकारकान्यत्वस्याऽप्रवेशात् । तथा च व्याप्यत्वदलं विफलम् । एवं प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनभिन्नवाक्यवानिति बुद्धिं प्रति वाक्यत्वावच्छिन्नधर्मिकतादृशनिगमनभिन्नत्वप्रकारकनिश्चयत्वावच्छिन्नकारणतायां-निगमनत्वावच्छिन्नविशेष्यकतादृशोपनयोत्तरत्वाभावप्रकारकान्यत्वावच्छिन्नत्वस्याऽ-प्रवेशादेव तादृशकारणतावच्छेदकीभूतविषयतावत्त्वमादाय तादृशवाक्येतिव्याप्ति-व्युदाससंभवाद् व्यापकत्वदलमपि विफलम् । प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनवानिति बुद्धिं प्रति निगमनत्वावच्छिन्नविशेष्यकतादृशोपनयोत्तरत्वप्रकारकनिश्चयनिष्ठा विनिगमनाविरहेण या या कारणता सर्वासामेव तासां निगमनत्वावच्छिन्नविशेष्यकतादृशोपनयोत्तरत्वाभावप्रकारकान्यत्वस्याऽवच्छेदकतया न्यायान्तर्गतप्रतिज्ञादिषु सर्वेष्वेव तादृशाभावावच्छिन्नकारणतावच्छेदकीभूतविषयतावत्त्वान्नाऽव्याप्तिसंभावनेति चेन्न । प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरनिगमनवानिति विशिष्टवैशिष्ट्यबोधस्य इतरसकलकारणसत्त्वेऽपि, निगमनं तादृशोपनयोत्तरत्वप्रकारकं न वेति संशयः कदापि न जातः तत्र तादृशसंशयात्तादृशविशिष्टवैशिष्ट्यबोधोत्पत्तेरसंभवात् तादृशविशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति निगमनत्वावच्छिन्नविशेष्यकतादृशोपनयोत्तरत्वप्रकारकज्ञानत्वेनैव कारणता वक्तव्या । तथा च न्यायान्तर्गतप्रतिज्ञादिषु निगमनत्वावच्छिन्नविशेष्यकतादृशोपनयोत्तरत्वाभावप्रकारकत्वान्यत्वावच्छिन्नकारणतावच्छेदकीभूतविषयतावत्त्वविरहात्तादृशप्रतिज्ञादिष्वव्याप्तिरतः समनियतत्वं कारणतायां निवेशितम् ।

केचित्तु प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनभिन्नवाक्यवानिति बुद्धिं प्रति वाक्यत्वावच्छिन्नविशेष्यकतादृशनिगमनभिन्नत्वप्रकारकनिश्चयत्वावच्छिन्न या कारणता तदवच्छेदककोटावुपनयोत्तरत्वाभावप्रकारकान्यत्वस्याऽप्रवेशेऽपि तादृशनिगमनोत्तरवाक्यवानिति बुद्धिं प्रति वाक्यत्वावच्छिन्नविशेष्यकनिगमनोत्तरत्वप्रकारकनिश्चयत्वावच्छिन्नकारणतायां तादृशोपनयोत्तरत्वाभावप्रकारकत्वान्यत्वमवश्यं वक्तव्यम् । न च तादृशबोधो विशेषणतावच्छेदकांशे संशयात्मको भवतीति तथापि विशेषणतावच्छेदकांशे निश्चयत्वं निवेशितमिति वाच्यम् । तादृशबोधस्याऽभावप्रत्ययवत्तथाविधविशिष्टवैशिष्ट्यावगाहित्वनियमे भेदांशे संशयात्मकत्वाऽसंभवात्, प्रवेशेपि तादृशनिगमनोत्तरवाक्यवानिति बुद्धिं प्रति वाक्यत्वाव-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



च्छिन्नविशेष्यकताद्दशनिगमनत्वप्रकारकनिश्चयत्वावच्छिन्नकारणतायां ताद्दशोपनयोत्तरत्वाभावप्रकारकान्यत्वमवश्यं वक्तव्यम् । अन्यथा विशेष्ये विशेषणमिति रीत्या निगमनांशे उपनयोत्तरत्वप्रकारकसंशयात्मकवाक्यत्वावच्छिन्नधर्मिकताद्दशनिगमनोत्तरत्वप्रकारकज्ञानादपि ताद्दशनिगमनोत्तरवाक्यवानिति बुद्ध्यापत्तेः । तथा च ताद्दशोपनयोत्तरत्वाभावप्रकारकान्यत्वावच्छिन्नकारणतावच्छेदकत्वं ताद्दशनिगमनोत्तरोदासीनवाक्यविषयतायामप्यस्ति इत्युदासीनवाक्यवारणमशक्यमित्याहुः । तन्न मनोरमम् । एवमपि व्यापकत्वदलस्य व्यावृत्तिर्जाता न तु समनैयत्यघटक व्याप्यत्वदलस्य ।

एवं विशेषणांशे लाघवाद् विशिष्टवैशिष्ट्यावगाहिविशेषणतावच्छेदकप्रकारकनिश्चयस्यैव विशिष्टवैशिष्ट्यावगाहिबुद्धिहेतुत्वात्, विशेषणताधच्छेदकांशे संशयाकारकविशिष्टवैशिष्ट्यावगाहिबोधानुदयेन ताद्दशसंशयाकारकविशेषणतावच्छेदकप्रकारकज्ञानाद्विशिष्टवैशिष्ट्यावगाहिबुद्ध्युत्पत्त्यसंभवेन ताद्दशोपनयोत्तरत्वाभावाप्रकारकत्वस्य तदवच्छेदकतायामनिवेशादिति ध्येयम् ।

अथ ताद्दशानुपूर्वीविशेषप्रकारकज्ञानत्वसमनियतकार्यतावच्छेदकविषयताश्रयत्वनिवेशेनैवोपपत्तौ किं गुरुतरनिश्चयत्वसमनियतकारणताघटितनिवेशेनेति चेन्न । विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणतेत्येकं मतं, विशिष्टवैशिष्ट्यावगाह्यनुभवं प्रति ताद्दशनिश्चयस्य कारणत्वमित्यपरं, अपरं च विशिष्टवैशिष्ट्यावगाहित्वावच्छिन्नं प्रति ताद्दशनिश्चयस्य कारणत्वमिति मतत्रयसाधारणकिंचिद्धर्मसमनैयत्यं कार्यतायां न संभवतीति कारणतायां ताद्दशनिश्चयत्वसमनैयत्यं निवेशितम् । वस्तुतः ताद्दशानुपूर्वीप्रकारकज्ञानत्वस्योपलक्षितवैशिष्ट्यावगाहिज्ञानसाधारणतया तत्समनैयत्यं न कुत्रापि जन्यतायां संभवतीति "ताद्दशनिश्चयत्वसमनैयत्यं कारणतायां संभवतीति" ताद्दशनिश्चयत्वसमनैयत्यं कारणतायां निवेशितम् । सर्वांशे विशिष्टवैशिष्ट्यावगाहित्वं निवेश्योपलक्षितवैशिष्ट्यावगाहिज्ञानव्यावर्त्तने च प्रकृतापेक्षया गौरवमेव दूषणम् ।

अथ तथापि ताद्दशानुपूर्वीप्रकारकज्ञानत्वसमनियतकारणतानिवेशेऽपि विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपितविशेषणतावच्छेदकप्रकारकज्ञानत्वावच्छिन्नकारणतामादाय सर्वसामञ्जस्ये निश्चयत्वप्रवेशोऽव्यर्थः । न चाऽन्तरा सधर्मितावच्छेदककविशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयत्वेनैत्र कारणतया ताद्दशज्ञानत्वसमनियतकारणत्वाऽप्रसिद्धिरिति वाच्यम् । प्रतिज्ञादिविशिष्टनिगमनत्वरूपाऽनुपूर्वीमानित्याकारकाऽन्तरानिर्धर्मितावच्छेदककविशिष्टवैशि -

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ष्ट्यावगाहिज्ञानकारणताया एव तादृशज्ञानत्वसमनियततयाऽप्रसिद्धेरनवकाशादिति चेन्न । विशिष्टनिगमनत्वांशे निश्चयत्वाऽनिवेशेऽपि तादृशनिगमनत्वरूपानुपूर्वीविशेषणीभूतप्रतिज्ञाद्यंशे निश्चयत्वनिवेशार्थमेव निश्चयपदोपादानात्, अन्यथा विशेषणांशे संशयात्मकज्ञानसाधारणतादृशानुपूर्वीप्रकारकज्ञानत्वसमनियतकारणताया एवाऽप्रसिद्ध्यापत्तेः । वस्तुतो ज्ञानत्वसमनियतकारणतानिवेशेऽप्रामाण्यनिश्चयाभावनिवेशेन गौरवान्निश्चयत्वसमनियतनिवेश एव युक्त इति ध्येयम् ।

अत्रेदं चिन्त्यते । विशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नं प्रति न निश्चयत्वेन कारणत्वं अपि तु संशयसाधारण्याय ज्ञानत्वेनैव तथा, तत्कथमत्र निश्चयत्वं निवेशितम् ! न चाऽन्तरासधर्मितावच्छेदककविशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्ननिरूपितकारणतालाभाय तत् । तथाहि । तादृशबुद्धित्वावच्छिन्नं प्रति निश्चयत्वेनैव कारणत्वं न तु ज्ञानत्वेन दण्डोरक्तोनवेति संशयसत्वे रक्तदण्डवानिति निश्चयविरहात् । तथा च प्रतिज्ञादिविशिष्टनिगमनत्ववद्वाक्यत्ववानयमितिज्ञानमादाय लक्षणसमन्वय इति वाच्यम् । तादृशनिगमनत्वप्रकारकनिश्चयत्वस्य तादृशानुपूर्वीमद्वाक्यत्वात्, तादृशानुपूर्वीमद्वर्णवानित्यादिज्ञानसाधारणतया कस्या अपि कारणतायास्तादृशनिश्चयत्वसमनैयत्यविरहात् । यदि च वाक्यत्वधर्मितावच्छेदकक-तादृशनिश्चयत्वसमनियतकारणतामादाय लक्षणसमन्वयः तदा निश्चयत्वनिवेशनं विफलमिति विभावनीयम् ।

ननु तादृशविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयताश्रयत्वनिवेशेनैवोपपत्तौ किं व्याप्यत्वव्यापकत्वनिवेशेनेतिचेन्न । तादृशानुपूर्वीभिन्नवाक्यत्वविशिष्टवैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नजन्यतानिरूपित "तादृशानुपूर्व्यवच्छिन्नभिन्नवाक्यत्वप्रकारकज्ञानत्वावच्छिन्न" कारणतामादायोदासीनेऽतिप्रसंगात् । ननु अवच्छेदकतावच्छेदकसाधारणाऽवच्छेदकत्वास्वीकारे तादृशबुद्धित्वपर्याप्तावच्छेदकताकजन्यतानिरूपितजनकतानिवेशाऽसंभवेऽपि मुख्यविशेष्यतानिरूपिततादृशानुपूर्व्यवच्छिन्नप्रतियोगिताकत्वावच्छिन्नसांसर्गिकविषयतानिरूपितप्रकारताशालिबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतानिवेशादतिव्याप्तिविरहादितिचेन्न । एवंसति व्युत्क्रमप्रयुक्तप्रतिज्ञाकालीनतादृशानुपूर्वीविशिष्टवैशिष्ट्यावगाहिजन्यतानिरूपितजनकतावच्छेदकविषयताश्रयत्वस्य व्युत्क्रमप्रयुक्तप्रतिज्ञायां सत्वात्तत्रातिव्याप्तिरतस्तद्वारणाय जन्यतावच्छेदककोटौ न्यूनेतरवारकपर्याप्तिर्निवेशनीयतया पर्याप्तिनिवेशेऽतिगौरवादिति ध्येयम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न च तादृशानुपूर्वीविशेषावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्न-कार्यतानिरूपितकारणताया अपि न तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनैयत्यसंभवः, तादृशकारणतायाःप्रतिज्ञात्वादिना पदार्थान्तरावगाहितादृशानुपूर्वीप्रकारकज्ञानसमानाकारकज्ञानसाधारणत्वात्, तादृशज्ञानस्य वास्तवप्रतिज्ञाद्यविषयत्वेन तद्घटितानुपूर्वीप्रकारकत्वाभावादिति वाच्यम्। प्रतिज्ञात्वाद्यवच्छिन्नप्रकारतानिरूपितहेतुत्वाद्यवच्छिन्नप्रकारतेतिक्रमेण निगमनत्वावच्छिन्नविषयतापर्यन्तं निवेश्य तच्छालिनिश्चयत्वसमनैयत्यस्यैव विवक्षितत्वात्। तादृशनिश्चयत्वस्योक्तश्रयसाधारण्येनक्षतिविरहात्। न चैवमुदासीनप्रतिज्ञाद्यानन्तर्यं हेत्वाद्यंशेऽवगाहते यो भ्रमस्तन्निष्ठतादृशप्रतिज्ञाविषयिताया अपि निरुक्तकारणतावच्छेदकतयाऽतिप्रसंगोदुर्वारएवेति वाच्यम्। भ्रमाऽवृत्तिविषयिताया अपि निवेशनीयत्वादिति कृतं पल्लवितेन।

अवयवैकदेशस्य अवयवद्वयात्मकसमुदायस्य च वारणाय प्रतिज्ञाद्यन्यतमत्वमिति। अथ धूमादालोकवान्पर्वतोवन्हिमान्धूमादित्यादिन्यायान्तर्गतप्रतिज्ञैकदेशे धूमादितिभागेऽतिव्याप्तिः, तस्यापि हेतुप्रतिपाद्यो यादृशविशिष्टार्थस्तन्मात्रबोधकत्वेन हेतुलक्षणाक्रान्ततया प्रतिज्ञाद्यन्यमत्वाक्रान्तत्वात्।

---

शंकते। नचेति। समनैयत्यसंभव इति। वास्तवप्रतिज्ञादिघटिततादृशानुपूर्वीप्रकारकनिश्चयत्वव्याप्यत्वस्य तादृशकारणतायामसंभवात्। तदेवाऽह। तादृशकारणताया इति। विवक्षितत्वादिति। तथा चाऽव्यवहितोत्तरत्वसंबन्धावच्छिन्नप्रतिज्ञात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नतादृशसंबंधावच्छिन्नहेतुत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नतादृशसंबन्धावच्छिन्नोदाहरणत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नतादृशसंबन्धावच्छिन्नोपनयत्वावच्छिन्नप्रकारतानिरूपितनिगमनत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वसमनैयत्यस्य विवक्षणादिति भावः। तन्निष्ठेति। भ्रमनिष्ठेत्यर्थः। अतिप्रसंगोदुर्वार एवेति। उदासीनप्रतिज्ञायामित्यादिः। भ्रमाऽवृत्तिविषयिताया इति। न चोक्ताऽसंभवोदुर्वारः, तादृशविषयिताः भ्रमप्रमासाधारण्येन भ्रमाऽवृत्तित्वविरहादिति वाच्यम्। भ्रमान्यवृत्तित्वस्य तदर्थत्वात्। वारणायेति। तस्य न्यायांतर्गतत्वादितिभावः। तथापि स्थलविशेषे प्रतिज्ञैकदेशेऽतिव्याप्तिमाशंकते। अथेति। प्रतिज्ञाद्यन्यतमत्वमुपपादयति। तस्यापीति धूमादितिभागस्यापीत्यर्थः। तन्मात्रेति। मात्रपदेननिगमनव्युदासः। स्वार्थ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न च तद्घटकपंचम्याः प्रकृतसाध्यान्वितस्वार्थबोधकत्त्वाभावान्नवक्ष्यमाणहेतुलक्षणाक्रान्तत्वं तस्येति वाच्यम्। एवमपि धूमाद्वन्हिमतःसधर्मा पर्वतोवन्हिमानित्यादिप्रतिज्ञाघटकताद्दशभागेऽतिप्रसंगस्य दुर्वारत्वादिति चेन्न। प्रकृतपक्षतावच्छेदकावच्छिन्नविशेषणतापन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नान्वितस्वार्थबोधजनकत्वे सति प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयितावहिर्भूतविषयिताशून्यबोधजनकवाक्यत्वरूपहेतुत्वस्यैव निवेशनीयतयाऽनतिप्रसंगात्। निगमनघटकस्य तस्मादिति भागस्य वारणाय विशेष्यदलम्। तज्जन्यबोधे ताद्दशविशिष्टविषयितावहिर्भूतव्याप्त्यादिविषयितासत्वेन तद्वारणात्।

ननु प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञादिभिन्नभिन्नत्वरूपं, प्रतिज्ञाद्येकदेशसाधारणम् भेदस्याऽव्यासज्यवृत्तितया समुदायवृत्तित्वे एकदेशवृत्तिताया अपि दुर्वारत्वात्।

---

बोधकत्वाभावादिति। स्वं हेतुः। तस्य। धूमादितिभागस्य। एवमपि। साध्यान्वितस्वार्थबोधकत्वनिवेशेपि। ताद्दशभागे। धूमादितिभागे। प्रकृतेति। प्रतिज्ञैकदेशे हेत्वर्थबोधकभागेऽतिव्याप्तिवारणाय सत्यन्तम्। तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नबोधकपदसाकांक्ष प्रकृतसाध्यतावच्छेदकावच्छिन्नबोधकपदसाकांक्षपंचमीपदघटित-प्रकृतहेतुतावच्छेदकावच्छिन्नबोधकपदत्वेसतीत्यर्थः। तेन पक्षघटकधूमादित्यस्य पक्षविशेषणतापन्नवन्ह्यन्वितस्वार्थबोधकत्वेऽपि न क्षतिः। हेतुविशिष्टेति। वै० आधेयतासंबन्धेन। तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारत्वावच्छेद्या या साध्यतावच्छेदकावच्छिन्नविशेष्यतातदवच्छेद्यप्रकारताप्रयोजकत्वे सति प्रकृतिहेतुविशिष्टहेतुत्वविषताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानवच्छेदकविषयिताशून्यशाब्दनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वं हेतुत्वं फलितम्।

प्रतिज्ञाद्यन्यतमत्वनिवेशेऽपि प्रतिज्ञाद्येकदेशेऽतिव्याप्तिर्दुर्वारैवेत्याशंकते। नन्विति। अन्यतमत्वं च भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्वम्। प्रकृताभिप्रायेणाह। प्रतिज्ञादिभिन्नभिन्नत्वरूपमिति। प्रतिज्ञाभिन्नत्वे सति हेतुभिन्नत्वे सति उदाहरणभिन्नत्वे सति उपनयभिन्नत्वे सति निगमनभिन्नो यो यस्तद्भिन्नत्वरूपमित्यर्थः। प्रतिज्ञाद्येकदेशसाधारणमपीति। प्रतिज्ञादिभिन्नोयःतद्भिन्नत्वं यथा प्रतिज्ञायां तथा प्रतिज्ञैकदेशेपीति भावः। तत्र

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अथ प्रतिज्ञादिभिन्नभेदानुयोगितावच्छेदकरूपवत्वं तत्। तादृशं च रूपं प्रतिज्ञात्वादिकमेव, न तु तदेकदेशपर्याप्तपर्वत-पदत्वादिकम्, तदवच्छिन्ने व्यासज्यवृत्तिप्रतिज्ञात्वाद्यवच्छिन्नभेदसत्वा-दिति चेन्न। प्रतिज्ञाद्येकदेशे प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्वे तादृशभेदा-वच्छिन्नभेदस्य प्रतिज्ञात्वाद्यवच्छिन्नेऽपि सत्वाऽसंभवात्[1] प्रतिज्ञात्व-पर्याप्त्यधिकरणसमुदायस्यैकदेशानतिरिक्तवृत्तितात्, नहिव्यासज्यवृत्ति-धर्मावच्छिन्नानुयोगिताक एकदेशभेदः प्रामाणिकः घटपटौ न घट इति प्रतीतेरसिद्धेः।

प्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकं यद्यद्रूपं तदवच्छिन्नानुयोगि-ताकभेदप्रतियोगितावच्छेदकधर्मवत्वविवक्षणे च प्रतिज्ञाहेत्वादिसमुदायेऽ-तिव्याप्तिः, तादृशसमुदायत्वावच्छिन्ने प्रतिज्ञात्वाद्यवच्छिन्नभेदाऽ-सत्वात्, तादृशसमुदायत्वस्य निरुक्तरूपानन्तर्गतत्वेन तादृशसकलधर्मा-

---

हेतुमाह-भेदस्येति। अन्यतमत्वरूपभेदस्येत्यर्थः। अव्यासज्यवृत्तितयेति। व्यासज्यवृत्तित्वे तु अन्यतमत्वस्य प्रतिज्ञादावप्यवृत्तित्वप्रसंगादितिभावः। समुदा-यवृत्तित्वे। प्रतिज्ञावृत्तित्वे। एकदेशवृत्तितायाः। प्रतिज्ञैकदेशवृत्तितायाः। दुर्वारत्वादिति। तथा च प्रतिज्ञैकदेशेऽतिव्याप्तिरितिभावः। प्रतिज्ञादिभेदो यथाऽन्यत्र वर्त्तते तथा प्रतिज्ञैकदेशेऽपि, तथा च प्रतिज्ञादिभिन्नः प्रतिज्ञैकदे-शोपि तद्भेदस्य प्रतिज्ञैकदेशे विरहान्नातिव्याप्तिरित्याशयेन समाधत्ते अथेति। प्रतिज्ञादिभिन्नभेदेति। प्रतिज्ञादिभिन्नप्रतियोगिकभेदेत्यर्थः। तत्। प्रतिज्ञा-द्यन्यतमत्वम्। तदवच्छिन्ने। पर्वतपदत्वाद्यवच्छिन्ने। सत्वाऽसंभवादिति। तथा चाऽसंभव इतिभावः।

न च प्रतिज्ञात्वाद्यवच्छिन्नभेदस्य प्रतिज्ञैकदेशे सर्वत्र तत्तदेकदेशपर्याप्त-धर्मावच्छिन्ने सत्वेऽपि विरोधेन प्रतिज्ञात्वादेस्तदनुयोगितानवच्छेदकतया, प्रतिज्ञात्वाद्यवच्छिन्ने तदवच्छिन्नभेदावच्छिन्नभेदसत्वमविरुद्धमिति वाच्यम्। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकएकदेशभेदस्याऽप्रामाणिकत्वात्" इति पाठान्तरम्।

विवक्षणेचेति। प्रतिज्ञाद्यन्यतमत्वमित्यनेनेति शेषः। यद्यद्रूपपदेन "प्रतिज्ञाद्येकदेशस्य" पर्वतपदत्वादे र्धारणसंभवेन तदवच्छिन्नानुयोगिताकभेद-प्रतियोगितावच्छेदकधर्मवत्वस्य पर्वतपदादौ विरहेण प्रतिज्ञाद्येकदेशेऽतिव्याप्ति-विरहः। तादृशधर्मवत्वस्य प्रतिज्ञादौ सत्वाल्लक्षणसमन्वयः। तादृशसमुदायत्वावच्छिन्ने। प्रतिज्ञाहेतुसमुदायत्वावच्छिन्ने। प्रतिज्ञात्वा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



द्यवच्छिन्नभेदाऽसत्वादिति । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकएक-देशभेदाऽनंगीकारादिति भावः। **तादृशसमुदायत्वस्य।** प्रतिज्ञाहेतुसमुदा-यत्वस्य। **निरुक्तरूपानन्तर्गतत्वेन।** प्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकय-द्यद्रूपानन्तर्गतत्वेन। **तादृशधर्मविशेषणे।** प्रतिज्ञादिभेदपंचकानुयोगितावच्छे-दकं यद्यद्रूपं तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकधर्मविशेषणे। तथा च प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकयद्रूपमध्ये प्रतिज्ञा-हेतुसमुदायत्वस्यापि धारणसंभवेन तादृशसमुदायत्वावच्छिन्नप्रतियोगिताकभेदा-नुयोगितावच्छेदकत्वस्य तादृशसमुदायत्वे विरहान्नातिव्याप्तिरिति भावः[1]।

---

१ अथ प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितानवच्छेदकत्वस्य धर्म-विशेषणत्वेनैव प्रतिज्ञाहेतुसमुदायत्वस्य वारणादलंतत्तद्धर्मावच्छिन्नप्रतियोगिताक-भेदानुयोगितावच्छेदकत्वविशेषणेन। गुणत्व-सत्वादेःप्रतिज्ञात्वाद्यवच्छिन्नानुयोगिता-कभेदप्रतियोगितानवच्छेदकत्वेऽपि प्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकं यद्यद्रूपं प-त्वादिकं तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वविरहेण गुणत्व-सत्वादि-कमादायाऽतिव्याप्तेः प्रथमदलेनैव वारणसंभवादिति चेन्न। प्रतिज्ञात्वावच्छिन्ना-नुयोगिताको यः प्रतिज्ञाहेतुसमुदायत्वावच्छिन्नप्रतियोगिताको भेदस्तत्प्रतियोगिता-वच्छेदकत्वस्यैव प्रतिज्ञात्वेऽपि सत्वात्, प्रतिज्ञात्वे पि तादृशाऽनवच्छेदकत्वस्य दुर्घटतयाऽसंभवापत्तेः। तादृशभेदप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्व-निवेशे च अवच्छेदकतावच्छेदकसाधारणाऽवच्छेदकतापर्याप्त्यंगीकर्तृमते प्रतिज्ञाहेतु समुदायभेदप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वं न प्रतिज्ञाहेतुसमुदायत्वमात्रे किन्तु तादृशसमुदायत्वस्वान्तर्भावेणापीति तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिक-रणधर्मभेदः प्रतिज्ञाहेतुसमुदायत्वेऽक्षत एवेत्यतः प्रतिज्ञात्वात्वाद्यवच्छिन्नानुयोगिता-कभेदप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदानुयोगिता-वच्छेदकत्वं निवेशितम्। तथा च प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगिता-वच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकावच्छेदकताकप्रतियोगिता-कभेदानुयोगितावच्छेदकत्वस्य प्रतिज्ञाहेतुसमुदायत्वेऽसत्वान्नप्रतिज्ञाहेतुसमुदायत्वमा-दाय प्रतिज्ञाहेतुसमुदाये ऽतिव्याप्तिः।

अत्र भेदे प्रतिज्ञात्वावच्छिन्नानुयोगिताकत्वे सति हेतुत्वावच्छिन्नानुयोगिता-कत्वं एकत्र द्वयमितिरीत्या न विशेषणम्। तथासति अधिकरणभेदेनाऽभावभेदस्वी-कर्तृमते तादृशभेदाऽप्रसिद्याऽसंभवापत्तेः। किन्तु प्रतिज्ञात्वावच्छिन्नानुयोगिता-कभेदप्रतियोगितावच्छेदकं सत् हेतुत्वावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं सत् इत्यादिक्रमेण निगमनत्वावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं यत्तद्ध-र्मावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वं निवेशनीयं, प्रतिज्ञाहेतुसमुदाय-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एवं च प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं यद्यत्तदवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकं यद्यद्रूपं तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदको यो धर्मस्तद्वत्त्वंप्रतिज्ञाद्यन्यतमत्वंफलितम् । प्रतिज्ञाहेतुसमुदायवारणाय **सत्यन्तम्** । तदर्थश्च प्रतिज्ञात्वावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकताव्यापकत्वं–व्यापकताच स्वावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वसंबन्धेन ।

प्रतिज्ञाद्येकदेशेऽतिव्याप्तिवारणाय **विशेष्यदलम्** । एवं च प्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकं यत्पर्वतपदत्वादिकं तद्धर्मावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वस्य पर्वतपदत्वेऽसत्त्वान्न पर्वतपदत्वमादायैकदेशेऽतिव्याप्तिः । अत्र प्रतिज्ञादिभेदपंचकानुयोगितानवच्छेदकत्वस्य धर्मविशेषणत्वे पर्वतपदत्वादेर्वारणसंभवेऽपि प्रतिज्ञाघटकतावद्वर्णवृत्त्यन्यतमत्वस्य "प्रतिज्ञात्ववत्" प्रतिज्ञादिपंचकानुयोगितानवच्छेदकतया तादृशान्यतमत्वमादायैकदेशेऽतिव्याप्तिरतः प्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकं यद्यत्तनद्धर्मान्यत्वमुपेत्य तत्तद्धर्मावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वं धर्मे **निवेशितम्** । **तथा च** प्रतिज्ञादिपंचकानुयोगितावच्छेदकं यत्पर्वतपदत्वादिकं तदवच्छिन्नानुयोगिताकोन तादृशान्यतमत्वावच्छिन्नप्रतियोगिताको भेदः किन्तु प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेद एव तत्प्रतियोगितावच्छेदकत्वस्याऽन्यतमत्वे विरहेण नाऽन्यतमत्वमादायैकदेशेऽतिव्याप्तिः । तादृशधर्मवत्त्वं च **पर्याप्तिसंबन्धेन** । तेनैकदेशे प्रतिज्ञात्वादिसत्वेऽपि नातिव्याप्तिः । एकदेशेऽतिव्याप्तिवारणाय **यद्यदिति वीप्सा,** व्यापकत्वनिवेशसूचनाय ।

तथा च प्रतिज्ञात्वाद्यवच्छिन्नप्रतियोगिताकभेदपंचकानुयोगितावच्छेदकताव्यापकत्वं **तदर्थः** । व्यापकता च स्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वसंबन्धेन[1] ।

---

त्वावच्छिन्नभेदस्य प्रतिज्ञात्वादिरूपानुयोगितावच्छेदकभेदेन भिन्नत्वेऽपि प्रतिज्ञात्वावच्छिन्नानुयोगिताकप्रत्येकभेदप्रतियोगितावच्छेदकत्वस्य प्रतिज्ञाहेतुसमुदायत्वेप्यनपायात् ।

१ अथ प्रतिज्ञादिभेदपंचकान्यतमप्रतियोगितावच्छेदकधर्मवत्त्वं लघुलक्षणं कुतो न कृतं, प्रतिज्ञैकदेशत्वादेः प्रतिज्ञाहेतुसमुदायत्वादेश्च तादृशान्यतमभेदप्रतियोगितावच्छेदकत्वाभावादेकदेशे, प्रतिज्ञाहेतुसमुदाये चाऽतिप्रसंगानवकाशात् । एवं प्रतिज्ञात्वाद्यन्यतमत्वमेवावयवलक्षणं सम्यगिति चेन्न । प्रतिज्ञाद्यन्यतमत्वं दीधितिकृतः प्रतिज्ञाद्यंशे एवाऽन्यतमत्वबोधनात् तादृशपरिस्कारः परित्यक्त इति ध्येयम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



43 प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाऽघटितत्वं वा वक्तव्यम् । 65

वच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वात् । प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं यद्यत्तदवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वेनाऽपि तादृशधर्मविशेषणेऽतिगौरवमतो लघुलक्षणान्तरमाह ।

प्रतिज्ञाद्यघटकत्वे इति । अत्रापि न्यायान्तर्गतत्वेसतीत्यनुषज्यते । अतोन्यायबहिर्भूतवाक्यव्युदासः । प्रतिज्ञाद्येकदेशवारणाय प्रतिज्ञाद्य-

---

अनुगमस्तु प्रतिज्ञात्वादिविशिष्टधर्मवत्वम् । वै० स्वावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकताव्यापकत्व, स्वावच्छिन्नप्रतियोगिताकभेदपंचकानुयोगितावच्छेदकताव्यापकत्वोभयसंबन्धेन[1] । व्यापकताद्वयं पूर्ववत् । अथवा प्रतिज्ञादिभेदविशिष्टधर्मवत्वम् । वै० स्वनिरूपितप्रतियोगितावच्छेदकीभूतप्रतिज्ञात्वाद्यवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकताव्यापकाच्छेदकताकानुयोगिताकभेदप्रतियोगितावच्छेदकत्व — स्वनिरूपितप्रतियोगितावच्छेदकीभूतप्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकताव्यापकावच्छेदकताकभेदानुयोगितावच्छेदकत्वोभयसंबन्धेनेति ।

---

अथ तथापि न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यवृत्तिधर्मशून्यत्वरूपलघुलक्षणसंभवे गुरुतरलक्षणानुसरणमनुचितमितिचेन्न । पक्षे साध्यवैशिष्ट्यावगाहिजन्यतानिरूपितजनकतावच्छेदकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वरूपप्रतिज्ञात्वस्य लक्षणघटकत्वे प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तेः । स्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वघटितलक्षणकरणे लाघवानवकाशादिति ध्येयम् ।

अथ प्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकं यद्यद्रूपं तत्तद्रूपावच्छिन्नानुयोगिताको यो भेदः प्रतिज्ञात्वाद्यवच्छिन्नाननुयोगिताकः तत्प्रतियोगितावच्छेदकधर्मवत्वविवक्षयैव प्रतिज्ञाहेतुसमुदायधारणसंभवः । तथा हि प्रतिज्ञाहेतुसमुदायत्वावच्छिन्नभेदस्य प्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकीभूतपर्वतपदत्वावच्छिन्नानुयोगिताकत्वेपि प्रतिज्ञात्वाद्यवच्छिन्नाननुयोगिताकत्वविरहात् इति विशेष्यदलस्यैव सम्यक्त्वे सत्यन्तदलं व्यर्थमिति चेन्न । अधिकरणभेदेनाऽभावभेदाङ्गीकर्तृमते प्रतिज्ञाहेतुसमुदायत्वावच्छिन्नभेदस्य पर्वतपदत्वावच्छिन्नानुयोगिताकस्य प्रतिज्ञात्वाद्यवच्छिन्नाननुयोगिताकत्वात्तादृशभेदमादाय प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तितादवस्थ्यात् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



**घटकत्वनिवेशनम् तदर्थश्च प्रतिज्ञादिघटकतानवच्छेदकधर्मवत्वम्। तेन प्रतिज्ञादिघटकतदेशभेदस्य प्रतिज्ञात्वादिरूपव्यासज्यवृत्तिधर्मावच्छिन्नेऽनभ्युपगमेऽपि न क्षतिः। प्रतिज्ञादिघटकतावच्छेदकत्वं तु प्रतिज्ञात्वादिन्यूनवृत्तित्वम्,। तच्च प्रतिज्ञात्वाद्यवछिन्नभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वादिसमानाधिकरणत्वम्। तथात्वं च तदेकदेशवृत्ति-पर्वतपदत्वादेः, तदवच्छिन्ने प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्वान्न तु प्रतिज्ञात्वादेः।**

---

**अत्रापि**। लक्षणेऽपि। तथा च न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाऽघटितत्वं अवयवत्वं फलितम्। सत्यन्तनिवेशस्य फलमाह। **प्रतिज्ञाद्येकदेशवारणायेति**। प्रतिज्ञाद्येकदेशस्य पर्वतपदादेः न्यायाऽवयवत्ववारणायेत्यर्थः। तस्य न्यायान्तर्गतत्वादुभयघटकभागद्वयाऽघटितत्वाच्चेति भावः। तस्य प्रतिज्ञादिघटकत्वाद्वारणम्। ननु प्रतिज्ञाद्यघटकत्वं यदि प्रतिज्ञादिघटकभिन्नत्वं तदाऽसंभवः, प्रतिज्ञादिघटक "पर्वतपदादि" भेदस्य-प्रतिज्ञादावसत्वात्, व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिकएकदेशभेदस्याऽप्रामाणिकत्वादित्यत आह। **तदर्थश्चेति**। **तेन**। एतादृशार्थकरणेन **अनभ्युपगमेपीति**। व्यासज्यवृत्ति-धर्मावच्छिन्नानुयोगिताकैकदेशभेदस्याऽनभ्युपगमेपीत्यार्थः। **नक्षतिः**। नाऽसंभवः। प्रतिज्ञात्वादेःप्रतिज्ञादिघटकतानवच्छेदकत्वात्। **तच्च**। प्रतिज्ञात्वादिन्यूनवृत्तित्वंच। **तथात्वं च**। प्रतिज्ञात्वाद्यवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वादिसमानाधिकरणत्वं च। **तदेकदेशवृत्तीति**। प्रतिज्ञाद्येकदेशवृत्तीत्यर्थः। **तदवच्छिन्ने**। पर्वतपदत्वावच्छिन्ने। **प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्वादिति**। प्रतिज्ञात्वाद्यवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वस्य पर्वतपदत्वे सत्वादिति यावत्। प्रतिज्ञात्वसामानाधिकरण्यस्य च सत्वात् इत्यपि पूरणीयम्। **न तु प्रतिज्ञात्वादेरिति**। तथात्वमित्यनेनान्वयः। प्रतिज्ञात्वे प्रतिज्ञात्वसामानाधिकरण्यसत्वेऽपि प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वविरहादिति भावः। तथा च प्रतिज्ञात्वादेः प्रतिज्ञात्वन्यूनवृत्तित्ववारणाय सत्यन्तम्।

तथा च प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वसमानाधिकरणत्वं प्रतिज्ञात्वन्यूनवृत्तित्वम्। सत्यन्तानुपादाने प्रतिज्ञात्वस्य प्रतिज्ञात्वन्यूनवृत्तित्वापत्तिः, तस्य प्रतिज्ञात्वसमानाधिकरणत्वात्। विशेष्यदलप्रयोजनमाह। **हेतुत्वादेरिति**। **तत्संग्रहाय**। हेतुत्वसंग्रहाय।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हेतुत्वादेः प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वात्तत्संग्रहाय विशेष्यदलम्। न च मिलितभेदपंचकानुयोगितावच्छेदकभिन्नत्वनिवेशे हेतुत्वादेर्हेतुत्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वाविरहात्तादृशानुयोगितावच्छेदकभिन्नत्वमव्याहतमेवेतिविशेष्यदलमनर्थकमेवेतिवाच्यम्। धूमादालोकवान् पर्वतोवन्हिमानित्यादिप्रतिज्ञाघटकधूमादित्यादिभागसाधारणस्य हेतुत्वस्य निवेशे तत्रातिप्रसंगभयेन मिलितभेदपंचकानुयोगितावच्छेदकत्वस्यैकत्र निवेशाऽसंभवात्।

तत्साधारणहेतुत्वं तु हेतुप्रतिपाद्ययादृशविशिष्टार्थबोधजनकवाक्यत्वम्। तादृशभागवारणसंभवादिति। प्रतिज्ञाघटकधूमादितिभागवारणसंभवादित्यर्थः। तादृशभागे एतादृशहेतुत्वविरहेण हेतुत्वावच्छिन्नप्रतियोगिताक भेदानुयोगितावच्छेदकत्वस्यापि सत्वेन तादृशानुयोगितावच्छेदकभिन्नत्वविरहेण" हेतुत्वादेः प्रतिज्ञादिघटकतानवच्छेदकत्वसिद्धये। विशेष्यदलम्। न्यूनवृत्तित्वघटकप्रतिज्ञात्वसामानाधिकरण्यदलम्। ननु प्रतिज्ञादिभेदपंचकानुयोगितावच्छेदकत्वेसति प्रतिज्ञात्वादिसमानाधिकरणो यो धर्मस्तद्भिन्नधर्मवत्वं प्रतिज्ञाद्यघटकत्वम्। एवं च प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वसमानाधिकरणं यत्तद्भिन्नत्वे सति—हेतुत्वावच्छिन्नप्रतियोगिताध्यभेदानुयोगितावच्छेकत्वे सति हेतुत्वसमानाधिकरणं यत्तद्भिन्नत्वे सति—उदाहरणत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति उदाहरणत्वसमानाधिकरणं यत्तद्भिन्नत्वे सति- उपनयत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति उपनयत्वसमानाधिकरणं यत्तद्भिन्नत्वे सति-निगमनत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति निगमनत्वसमानाधिकरणं यत्तद्भिन्नोयः प्रतिज्ञात्वादिरूपोधर्मस्तद्वत्वं प्रतिज्ञाद्यघटकत्वं फलितम्। इदानीं सामानाधिकरण्यानुपादाने प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति हेतुत्वाच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति इति क्रमेण निगमनत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदको यो धर्मस्तद्भिन्नधर्मवत्वं प्रतिज्ञाद्यघटकत्वमितिविवक्षणेऽपि हेत्वादेः संग्रहेण विशेष्यदलं किमर्थमित्याशंकते। नचेति। तत्र। प्रतिज्ञाघटकधूमादितिभागे। अतिप्रसंगभयेनेति। हेतुत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वविरहेण। मिलितभेदपंचकानुयोगितावच्छेदकभिन्नत्वस्य तादृशभागे सत्वादिति भावः। तद्व्यावृत्तेति। प्रतिज्ञाघटकधूमादित्यादिभागव्यावृत्तेत्यर्थः। पूर्वोपदर्शितेति। प्रकृतपक्षतावच्छेदकावच्छिन्नविशेषणतापन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नान्वितस्वार्थबोधजनकत्वे सति हेतुविशिष्टहेतुत्वविषयिताबहिर्भूतविषयिताशून्यबोधजनकवाक्यत्वरूपेत्यर्थः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वस्तुतस्तु तद्व्यावृत्तपूर्वोपदर्शितहेतुत्वनिवेशेनैव तादृशभागवारणसंभवान्मिलितभेदपंचकानुयोगितावच्छेदकभिन्नत्वस्यैव निवेशनीयतया नोपादेयमेव विशेष्यदलम् ।

मिलितभेदपंचकानुयोगितावच्छेदकत्वस्य प्रतिज्ञादिघटकतावच्छेदकतानात्मकत्वे विशेष्यदले उभयाघटितत्वनिवेशेनैवोपपत्तौ तद्घटकभागद्वयाऽघटितत्वपर्यन्तनिवेशवैयर्थ्यात् । प्रतिज्ञादिघटकभागहेतुवृत्तिसमुदायत्वस्य प्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकत्वेन प्रतिज्ञाघटकतानवच्छेदकत्वदलेनैव वारणसंभवात् ।

मिलितभेदपञ्चकानुयोगितावच्छेदकत्वस्य प्रतिज्ञादिघटकतावच्छेदकत्वे तु प्रतिज्ञात्वपर्याप्त्यधिकरणहेत्वेकदेश - हेतुत्वपर्याप्त्यधिकरणप्रतिज्ञैकदेशवृत्तिसमुदायत्वस्य प्रतिज्ञात्वहेतुत्वावच्छिन्नभेदानुयोगितानवच्छेदकतयातत्समुदायत्वमादायाऽतिप्रसंगस्य वारणाय भागद्वयपर्यन्तनिवेश सार्थक्यात् ।

न च विभिन्नप्रतिज्ञादिव्यक्तिनिष्ठाबुद्धिविशेषविषयत्वरूपसमुदायत्वात्मकप्रतिज्ञात्वादिकं विभिन्नमेव, एकसाध्यहेतुकसकलप्रतिज्ञासमुदायत्वस्य प्रतिज्ञात्वे प्रत्येकं प्रतिज्ञादिव्यवहारस्यानुपपत्तेः । तथाचैवमेकप्रतिज्ञात्वव्यक्तेपरप्रतिज्ञात्वाद्यवच्छिन्नभेदानुयोगितावच्छेदकतया प्रतिज्ञादिघटकतावच्छेदकत्वंदुर्वारमेवेतिवाच्यम् । स्वसमाधिकरणप्रतिज्ञात्वाद्यवच्छिन्नभेदानां अनुगतरूपावच्छिन्नभेदानां वाऽनुयोगितावच्छे दकत्वस्यैवविवक्षणीयत्वात् । घटकतानवच्छेदकधर्मश्च व्यासज्यवृत्तित्वेन विशेषणीयः । तेन प्रतिज्ञादिघटकवर्णान्यतमत्वादिकमादाय न तदेकदेशा तिव्याप्तिः ।

---

प्रतिज्ञाद्यघटकत्वविरहान्नातिव्याप्तिः । एवं च वास्तविकहेतुत्वादौ मिलितभेदपंचकानुयोगितावच्छेदकभिन्नत्वसत्वात्तदाश्रयस्यावयवत्वोपपत्तेः सामानाधिकरण्यदलं व्यर्थमेवेत्याह । नोपादेयमेवेति । प्रतिज्ञादीति । प्रतिज्ञाहेत्वेकदेशसमुदायत्वस्य प्रतिज्ञैकदेशहेतुसमुदायत्वस्य वा क्रमेण हेतुत्वावच्छिन्नप्रतियोगितावच्छेदकत्वे सति हेतुत्वसमानाधिकरणतया प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति प्रतिज्ञात्वसमानाधिकरणतया च तद्वद्भेदाऽसत्वेनैव वारणादितिभावः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



केचित्तु प्रतिज्ञादिघटकतावच्छेदकत्वं स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञादिकत्वे सति प्रतिज्ञाद्यविषयकप्रतीतिविषयतावच्छेदकत्वम् ।

---

विशेष्यदलमिति । सामानाधिकरण्यदलमित्यर्थ । मिलितभेदपञ्चकानुयोगितावच्छेकत्वरूपविशेषणदलानुपादाने तु अग्रिमग्रन्थासंगतिरित्याह । विशेष्यदले इति ।

उभयघटकभागद्वयाघटितत्वदले । उपपत्त्या । निर्वाहे । एवकारव्यवच्छेद्यमाह । तद्घटकेति । उभयघटकेत्यर्थः । वैयर्थ्यादिति । निष्प्रयोजनकत्वादित्यर्थः । उभयघटकभागपर्यन्ताऽनिवेशेऽतिव्याप्तिरपिनास्तीत्याह । प्रतिज्ञाघटकभागेति । प्रतिज्ञात्वावच्छिन्नभेदानुयोगितावच्छेदकत्वेनेति । प्रतिज्ञाघटकतावच्छेदकत्वादिति भावः । एवं हेत्वेकदेशप्रतिज्ञावृत्तिसमुदायत्वस्य हेतुत्वावच्छिन्नभेदानुयोगितावच्छेदकत्वेन हेतुघटकतावच्छेदकत्वाद् हेतुघटकतानवच्छेदकत्वदलेन वारणसंभवादित्यपि बोध्यम् । एवमग्रेपि । हेत्वेकदेशप्रतिज्ञावृत्तिसमुदायत्वस्य प्रतिज्ञात्वावच्छिन्नभेदानुयोगितानवच्छेदकतया एवं प्रतिज्ञैकदेशहेतुवृत्तिसमुदायत्वस्य हेतुत्वावच्छिन्नभेदानुयोगितानवच्छेदकतया प्रतिज्ञाद्यघटकतानवच्छेदकत्वस्याव्याहततयाऽतिव्याप्तिवारणाय घटकभागनिवेशस्य प्रयोजनमाह मिलितेति विवक्षणीयत्वादिति । तथा च प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति हेतुत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितिवच्छेदकत्वे सति उदाहरणत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति उपनयत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वे सति निगमनत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकोयोधर्मः तद्भिन्नधर्मवत्वं प्रतिज्ञाद्यघटकत्वम् । नातिव्याप्तिरिति । अन्यतमत्वादेर्प्यासज्यवृत्तित्वाभावादिति भावः ।

केचित्त्विति । प्रतिज्ञादीति आदिना हेत्वादेः परिग्रहः । तथा च प्रतिज्ञाघटतावच्छेद्कत्वं स्वाश्रयाऽविषयकप्रतीत्यविषयप्रतिज्ञाकत्वे सतिप्रतिज्ञाऽविषयकप्रतीतिविषयतावच्छेदकत्वम् । स्वं पर्वतपदत्वादि । अत्रहेतुत्वादेः । प्रतिज्ञाघटकतावच्छेदकत्ववारणाय सत्यन्तम् । स्वपदेन प्रतिज्ञात्वस्याप्युपादातुं शक्यतया प्रतिज्ञात्वस्य तथात्ववारणाय विशेष्यदलम् । एवं स्वाश्रयाऽविषयकप्रतीत्यविषयहेतुकत्वे सति हेत्वविषयकप्रतीतिविषयतावच्छेदकत्वं हेतुघटकतावच्छेदकत्वं बोध्यम् । एवमुदाहरणादिघटकतावच्छेदकत्वं बोध्यम् । तथा च तत्तद्धर्मभेदकूटधर्मवत्वमेव प्रतिज्ञाद्यघटकत्वमुपसंहरिष्यति । अत्र सत्यन्तमनिवेश्यविशेष्यदलमात्रनिवेशेऽसंभवोवाच्यः, स च विशेष्यदलस्य प्रतिज्ञादिपंचविषय-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



**सत्यन्तमनिवेश्य प्रतिज्ञादिविषयकत्वाभावकूटवत्प्रतीतिविषयतावच्छेदकत्वनिवेशे धूमाद्वन्हिमतः सधर्मा पर्वतो वन्हिमान्धूमादित्यादिन्यायान्तर्गतप्रतिज्ञैकदेशधूमादितिभागेऽतिव्याप्तिः । तत्र प्रकृतहेतुतावच्छेदकावच्छिन्नविशिष्टहेतुत्वप्रतिपादकत्वरूपहेतुत्वसत्वेन तत्प्रतीतेर्हेतुविषयकत्वघटिताऽभावकूटवत्वाभावादतः प्रतिज्ञाऽविषयकप्रतीतिविषयतावच्छेदकत्वावच्छिन्नभेद-हेत्वविषयकप्रतीतिविषयतावच्छेदकत्वावच्छिन्नभेदकूटवद्धर्मवत्वमेव प्रतिज्ञाद्यघटकत्वमित्यनेन विवक्षणीयम् । तथा चाऽसंभववारणाय सत्यन्तमवच्छेदकविशेषणम् ।**

---

कत्वाभावकूटवत्प्रतीतिविषयतावच्छेदकत्वार्थकत्वे न संभवति, पर्वतपदत्वादेरेव प्रतिज्ञादिपंनविषयकत्वाभावकूटवत्प्रतीतिविषतावच्छेदकत्वेन तद्भिन्नत्वस्य प्रतिज्ञात्वादावक्षतत्वादित्यतस्तादृशार्थनिराकरणायाऽतिव्याप्तिमाह ।

**सत्यन्तमनिवेश्येति ।** स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञादिकत्वे सतीत्यन्तमनिवेश्येत्यर्थः । **तत्र-धूमादिति भागे । हेत्वविषयकत्वघटिताभावकूटवत्वभावादिति ।** तादृशाभावकूटवती या प्रतीतिस्तद्विषयतावच्छेदकभिन्नत्वसत्वादितिभावः । **अतः ।** अतिव्याप्तिवारणयेति यावत् । **विवक्षणीयमिति ।** तथा च प्रतिज्ञाघटकधूमादिति भागवृत्ति हेतुत्वे प्रतिज्ञाऽविषयकप्रतीतिर्विषयतावच्छेदकत्वविरहप्रयुक्ततादृशभेदकूटवत्वविरहेण नोक्तातिव्याप्तिः । **तथा च । विवक्षिते च । असंभवेति ।** प्रतिज्ञात्वादेर्हेत्वाद्यविषयकप्रतीतिविषयतावच्छेदकत्वादितिभावः । **अवच्छेदकविशेषणमिति ।** तथा च स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञाकत्वे सति प्रतिज्ञाऽविषयकप्रतीतिविषयकतावच्छेदकं यद्यत्तद्भेदकूटवत्वंसति इत्यादिक्रमेण भेदकूटवत्वं प्रतिज्ञाद्यघटकत्वं निर्वाच्यमिति भावः । **प्रतिज्ञाद्येकदेशेति ।** पर्वतपदेत्यर्थः । **तदेकदेशान्तरे ।** वन्हिमत्पदे । **तदाश्रयसमुदायस्य ।** वन्हिमत्पदघटितसमुदायस्य । **तादृशेति ।** स्वाश्रयाविषयकेत्यर्थः । **तत्तदेकदेशस्य ।** पर्वतपदस्य । **तत्तदेकदेशाविषयकेति ।** पर्वतपदाविषयकेत्यर्थः । **तत्तदेकदेशवृत्तिधर्मे ।** पर्वतपदत्वे । तत्तदेकदेशस्य प्रतिज्ञात्वाश्रयत्वं न प्रतिज्ञात्वपर्याप्त्यधिकरणत्वमित्याह प्रतिज्ञादिपदस्येति ।

स्वाश्रयाविषयकप्रतीत्यविषयप्रतिज्ञादिकत्वस्यैव प्रतिज्ञादिघटकतावच्छेदकत्वेऽसंभवमाह । **सत्यन्तस्थस्वपदेनेति । प्रतिज्ञात्वादेरपीति ।** आदिना हेतुत्वादेः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रतिज्ञाद्येकदेशाविषयकप्रतीतिविषयत्वस्य प्रतिज्ञात्वाश्रयतदेकदेशान्तरे सत्वेन तदाश्रयसमुदायस्य तादृशप्रतीत्यविषयत्वाऽसंभवेऽपि प्रतिज्ञात्वाद्याश्रयतत्तदेकदेशस्य तत्तदेकदेशाविषयकप्रतीत्यविषयतयैव तत्तदेकदेशवृत्तिधर्मे सत्यन्तनिर्वाहः। प्रतिज्ञादिपदस्य पर्याप्त्यतिरिक्तस्वरूपसंबन्धेनप्रतिज्ञात्वाद्याश्रयपरत्वात्।

सत्यन्तस्थस्वपदेन प्रतिज्ञात्वादेरप्युपादातुं शक्यतयाऽसंभव इति विशेष्यदलम्। तच्च प्रतिज्ञाद्येकदेशमात्रवृत्तिपर्वतपदत्वादावेव, तदाश्रयमात्रविषयकप्रतीतेस्तत्समुदायरूपप्रतिज्ञाद्यविषयकत्वस्याऽव्याहतत्वात्। न तु प्रतिज्ञात्वादेः, एकदेशमात्रविषयकप्रतीतिविषयतायामतिप्रसक्तस्य तस्याऽवच्छेदकत्वाऽसंभवात्। नचैकदेशमात्रविषयिकाया अपिप्रतीतेः प्रतिज्ञात्वाश्रयाऽविषयकत्वासंभवेन तदाश्रयसमुदायाऽविषयकत्वविवक्षणे एकैकप्रतिज्ञादिविषयिकाया अपि प्रतीतेः प्रतिज्ञात्वा-

---

परिग्रहः। अपिना पर्वतपदत्वादेः समुच्चयः। उपादातुं शक्यतयेति। ग्रहीतुं शक्यतयेत्यर्थः। तथा च प्रतिज्ञात्वामपि प्रतिज्ञादिघटकतावच्छेदकतयेति यावत्। असंभव इति। प्रतिज्ञाद्यघटकत्वविरहादिति भावः। तच्चेति। विशेष्यदलं चेत्यर्थः। प्रतिज्ञाद्यविषयकप्रतीतिविषयतावच्छेदकत्वं चेति यावत्। पर्वतपदत्वादावेवेति उपपादयति। तदाश्रयमात्रविषयकप्रतीतेरिति। पर्वतपदत्वाश्रयमात्रविषयकप्रतीतेरित्यर्थः। मात्रपदेन वन्हिमत्पदव्यावृत्तिः पर्वत इत्याकारकप्रतीतेरिति यावत्। तत्समुदायरूपेति। पर्वतोवन्हिमानितिसमुदायरूपेत्यर्थः। अव्याहतत्वात्। सत्वात्। तथा च पर्वतपदत्वादौ प्रतिज्ञाद्यविषयकप्रतीतिविषयतावच्छेदकत्वस्य सत्वादिति भावः। एवकारेण प्रतिज्ञात्वस्य व्यवच्छेदः-तदेवाह। नत्विति। प्रतिज्ञा त्वादेरिति। प्रतिज्ञाद्यविषयकप्रतीतिविषयतावच्छेदकत्वमिति शेषः। तत्र हेतुमाह। एकदेशमात्रविषयकप्रतीतिविषयतायां। पर्वतइत्यादिप्रतीतिविषयतायां। तस्य। प्रतिज्ञात्वस्य। प्रतिज्ञाद्यविषयकेत्यनेन सामान्यतः। प्रतिज्ञात्वाश्रयाविषयकत्वं विवक्षणीयं, प्रतिज्ञात्वाश्रयसमुदायाविषयकत्वं वा। आद्ये नचेति तथा च पर्वतपदत्वादावपि प्रतिज्ञाद्यविषयकप्रतीतिविषतावच्छेदकत्वं दुर्घटमिति भावः। द्वितीयेत्वाह। तदाश्रयेति। प्रतिज्ञात्वाश्रयेत्यर्थः। प्रतिज्ञादिपर्याप्तप्रतिज्ञात्वादिकं तादृशप्रतीतिविषयतावच्छेदकमेवेति। तथा चा संभवस्तदवस्थएवेति भावः। स्वाश्रयाविषयकेति तथा च स्वविशिष्टप्रतिज्ञात्वविशिष्टत्वम्। स्ववै० स्वाश्रयाविषयकप्रतीत्यविषयत्वसं। प्रतिज्ञात्ववै० स्वाश्रयवर्णसमुदायाविषयकप्रतीतिविषयतावच्छेद

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



श्रयाऽपरव्यक्त्यविषयकत्वेन तदाश्रयसमुदायाविषयकतया एकैकप्रतिज्ञादिव्यक्तिपर्याप्तप्रतिज्ञात्वादिकं तादृशप्रतीतिविषयतावच्छेदकमेव तदनतिप्रसक्तत्वादिति वाच्यम् । स्वाश्रयाविषयकप्रतीत्यविषयता यादृशप्रतिज्ञात्वाद्याश्रये तादृशप्रतिज्ञात्वाद्याश्रयवर्णसमुदायाऽविषयकप्रतीतिविषयतावच्छेदकत्वविवक्षया प्रतिज्ञादिविषयकसकलप्रत्ययानामेव तादृशसमुदायविषयकत्वेनाऽदोषात् ।

अवच्छेदकत्वं चेहानतिरिक्तवृत्तित्वमेव- न तु स्वरूपसंबन्धविशेषः । तेन प्रतिज्ञात्वादिना तदेकदेशमात्रविषयकज्ञानविषयतायां प्रतिज्ञात्वादेस्तथाविधावच्छेदकत्वसत्वेऽपि न क्षतिः । तथाविधयत्किंचिद्ज्ञानीयविषयतात्वावच्छिन्नाऽनतिरिक्तवृत्तित्वमिह विवक्षणीयम् । तेन प्रतिज्ञादिघटकसकलवर्णेष्वेव प्रतिज्ञाद्यविषयकप्रतीतिविषयत्वसत्वेन तादृशविषयतासामान्यशून्याऽप्रसिद्धावपि स्वव्यापकतादृशविषयतात्वावच्छिन्नकत्वस्य प्रतिज्ञात्वादिसाधारणत्वेऽपि न क्षतिरितिवदन्ति । तदसत् । एतदपेक्षयोक्तप्रतिज्ञाद्यन्यतमत्वस्यैव लघुत्वात् । तत्राऽनिर्भरस्य निर्बीजतापातात् । एतेन प्रतिज्ञादिघटकतावच्छेदकत्वं स्वसमानाधिकरणस्वानधिकरणवृत्तिप्रतिज्ञात्वादिकत्वमित्यपि हेयम् । स्वत्वाननुगमेन तादृशं स्वं य द्यद्विशिष्य तावतामनन्तभेदानां निवेशनीयतया महागौरवात् ।

प्रतिज्ञाहेत्वादिसमुदायवारणायोभयेत्यादि । उभयघटकभागद्वयाऽवृत्तिधर्मवत्त्वार्थकम् । तथा च प्रतिज्ञादिघटकज्ञानवच्छेदकत्वे सति उभयघटकभागद्वयावृत्तिर्योधर्मस्तद्वत्वं दलद्वयार्थः । प्रतिज्ञाद्येकैकघटकभागद्वयस्यापि यत्किंचिदुभयघटकत्वादसंभव इत्यतः प्रतिज्ञाहेतुचतुष्टयस्य विशिष्योभयपदार्थतामाह । उभयंचेति । इति विशिष्यवक्तव्य-

कसं० । नक्षतिः नाव्याप्तिः तथाविधेति । प्रतिज्ञाद्यविषयकेत्यर्थः । इह प्रतिज्ञाद्यविषयकप्रतीतिविषयतावच्छेदकत्वमित्यत्र । अप्रसिद्धावपीति । प्रतिज्ञाघटकवर्णेषु प्रतीज्ञाद्यविषयकप्रतीतिविषयत्वोपपादनेन तद्भिन्नेषु तत्सत्वेन च जगन्मात्रस्य तथात्वात् । एतेन । उक्तप्रतिज्ञाद्यन्यतमत्वस्य लघुत्वेन । स्वं पर्वतपदत्वादि । असंभववारणाय स्वानधिकरणेति । महागौरवादिति । अत्रोभयघटकभागद्वयाघटितत्वमित्यत्र घटकभागांशवैयर्थ्यमनुक्त्वा केवलं गौरवप्रतिपादनमसंगतं तथाहि अग्रे प्रतिज्ञाहेत्वाद्येकदेशघटितसमुदायेऽतिव्याप्तिवारणार्थं घटकभागनिवेशः, परन्तु एतादृशप्रतिज्ञाघटकतावच्छेदकत्वस्य तादृशसमुदायत्वे सत्वात्तत्रातिव्याप्तिर्न संभवति, इति उभयाघटितत्वनिवेशनमेव सम्यगितितु विभावनीयम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



57 उभयं च प्रतिज्ञाहेतू-हेतूदाहरणे-उदाहरणोपनयौ-उपनयनिगमने इति विशिष्य वक्तव्यमिति ।66

मित्यग्रिमेणाऽन्वयः । इति । इतिरीत्या । प्रतिज्ञाहेत्वाद्योरपि प्रतिज्ञाहेतूभयत्वादिना न घटकत्वांशे विशेषणता, तादृशोभयघटकभागाप्रसिद्धेः; किन्तु प्रतिज्ञात्वहेतुत्वादिना, तथा च प्रतिज्ञाघटको यो भागः- यश्च हेतुघटकस्तदुभयाघटितत्वमिति क्रमेणाऽघटितत्वचतुष्टयं निवेशनीयम् । प्रतिज्ञाहेत्वाद्येकदेशघटितसमुदायस्य वारणाय घटकभागनिवेशनम् । प्रतिज्ञादिघटकत्वं चैकदेशसाधारणं प्रतिज्ञात्वाद्याश्रयत्वम् , तथा च प्रतिज्ञात्वाश्रयहेतुत्वाश्रयोभयावृत्तित्वादिरूपविशेषणचतुष्टयं धर्मविशेषणं पर्यवसितम् ।

न चैवं धूमाद्वन्हिमतः सधर्मा पर्वतो वन्हिमान् धूमादित्यादौ न्यायघटकप्रतिज्ञायामव्याप्तिः, तस्या हेतुलक्षणाक्रान्तभागघटितत्वात् । तद्व्यावृत्तस्य पूर्वोपदर्शितस्य हेतुत्वस्य निवेशेऽपि निगमनेऽयंपदानुषंगपक्षे तत्र, उपनये चाऽव्याप्तिर्दुर्वारैव, तस्योपनयघटकेनाऽयंपदेन, उपनयस्य च तद्घटकेन तेन घटितत्वादिति वाच्यम् । अनुषंगपक्षे उपनयघटकभागनिगमनघटकभागद्वयाघटितत्वशरीरे

---

प्रतिज्ञाहेत्वादिसमुदायेति । आदिना हेतूदाहरणसमुदाय- उदाहरणोपनयसमुदाय-उपनयनिगमनसमुदायानां परिग्रहः । अनुपदं वक्ष्यति विशिष्य वक्तव्यमिति । विशिष्य कथनस्य प्रयोजनमाह । प्रतिज्ञादिघटकैकघटकभागद्वयस्यापीति । पर्वतः वन्हिमानिति भागद्वयस्यापीत्यर्थः । यत्किंचिदुभयेति । पर्वतः वन्हिमानित्युभयेत्यर्थः । असंभव इति । तदघटितत्वस्य प्रतिज्ञायामसत्वादिति भावः । एवं हेत्वादावपि । ननु प्रतिज्ञाहेत्वाद्येकदेशसमुदायस्य हेतुत्वपर्याप्त्याश्रयत्वाभावात् घटकभागनिवेशो व्यर्थ इत्यत आह । प्रतिज्ञादिघटकत्वं चेति । एकदेशसाधारणमिति । पर्याप्त्यतिरिक्तसंबन्धेनेत्यर्थः ।

एवं । उभयघटकभागद्वयाऽघटितत्वनिवेशे । तस्याः । धूमाद्वन्हिमतः- सधर्मा पर्वतोवन्हिमानिति प्रतिज्ञायाः । हेतुलक्षणाक्रान्तेति । हेतुविशिष्टहेतुत्वविषयकबोधजनकत्वरूपलक्षणाक्रान्तेत्यर्थः । भागेति । धूमादिति भागेत्यर्थः । तद्व्यावृत्तस्येति । प्रतिज्ञाघटकधूमादिति भागावृत्तेरित्यर्थः । पूर्वोपदर्शितस्येति । पक्षविशेषणतापन्नसाध्यान्वितस्वार्थबोधजनकत्वे सति हेतुविशिष्टहेतुत्वविषयतावहिर्भूतविषयताशून्यबोधजनकवाक्यत्वरूपस्येत्यर्थः । तत्र । निगमने । तस्य । निगमनस्य । तद्घटकेन । निगमनघटकेन ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



65 प्रतिज्ञादिप्रतिपाद्यवत्तद्विशिष्टार्थविषयकज्ञानपंचकान्यतमज्ञानजनकवाक्यत्वमिति केचित् । 79

उपनयाघटकत्वेन निगमनघटकस्य, निगमनाघटकत्वेन चोपनयघटकस्य भागस्य, विशेष्यवाचकपदातिरिक्तत्वेन वा भागद्वयस्य विशेषणीयत्वात् । अयं तस्मादित्यादिभागस्य च सत्यन्तेनैव वारणात् । स्वानाश्रयान्तरितभागद्वयवृत्त्यन्यत्वेन च धर्मो विशेषणीयः । तेन हेत्वाद्यंशपरित्यागेन प्रतिज्ञोदाहरणसमुदाये न्यायान्तर्गते नातिप्रसंगः । वस्तुतस्तु प्रतिज्ञाहेतूइत्यादौ हेत्वादिपदं प्रतिज्ञाद्यतिरिक्तपरम्, तथाचोदाहरणादेः प्रतिज्ञाद्यतिरिक्तत्वान्न दोषः । प्रतिज्ञाद्यतिरिक्तघटकत्वं च प्रतिज्ञाद्येकदेशव्यावृत्तं प्रतिज्ञात्वाद्यनाश्रयत्वमेव पर्यवसितमिति दिक् ।

मूलस्थं शाब्दज्ञानजनकशाब्दज्ञानान्तं अन्यतमत्वेनाऽनुगतरूपेणावयवप्रतिपाद्यतत्तद्विशिष्टार्थविषयकशाब्दबोधपरम्, अतो नाऽननुगमः । तादृशशाब्दबोधजनकानां वाक्यानां अन्यतमत्वेनाऽनुगमे व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकान्योन्याभावानभ्युपगमे पूर्वोपदर्शितानुपपत्तिप्रसंगात्, शाब्दबोधानामन्यतमत्वेनोपात्तुं युक्तत्वादित्यभिप्रायेण मूलोक्तावयवलक्षणमन्यथाव्याचक्षाणानां केषांचिन्मतमाह–प्रतिज्ञादिप्रतिपाद्येति । विशिष्य निवेश्यानां विशिष्टार्थविशेषाणां साध्यविशिष्टपक्षादीनां परिचायकमात्रमेतत् । न तु प्रतिज्ञादिप्रतिपाद्यत्वेन तेषां निवेशः, विशिष्टार्थविशेषमनन्तर्भाव्य प्रतिज्ञात्वादीनां दुर्वचतया तेषां

---

तेन । अयंपदेन । विशेषणीयत्वादिति । तथा च उपनयाऽघटको यो निगमनघटकोभागः, यश्च निगमनाघटक उपनयघटकोभागस्तदुभयावृत्तिधर्मवत्वस्य विवक्षणादित्यर्थः । स्वानाश्रयेति । स्वं–प्रतिज्ञोदाहरणवृत्तिसमुदायत्वम् । स्वानाश्रयाऽन्तरितत्वं च स्वानाश्रयप्रागभावध्वंसाधिकरणवृत्तित्वम् । नातिप्रसंग इति । स्वं–प्रतिज्ञोदाहरणसमुदायत्वं । तदनाश्रयेण हेतुनाऽन्तरितं यत्प्रतिज्ञोदाहरणात्मकभागद्वयं तद्वृत्तित्वात्तादृशसमुदायत्वस्येति भावः । अत्र चोपनयाऽघटकं सन्निगमनघटकं यत्, यच्च निगमनाऽघटकं सदुपनयघटकमित्यत्रोपनयघटकमित्यस्यवैयर्थ्यम्, उपनयाघटकं निगमनघटकंयत् यच्च निगमनाऽघटकमित्यस्यैव सम्यक्त्वात् । एवं स्वानाश्रयान्तरितेत्याद्यर्थविवेचने चातिगौरवमतआह वस्तुतस्त्विति । दिगिति । तथा च प्रतिज्ञात्वाद्याश्रयो यः यश्चप्रतिज्ञात्वाद्यनाश्रयस्तदुभयवृत्तिभिन्नत्वमर्थः ।

दीधितिकृता जनकत्वान्तस्य परिचायकतया प्रतिज्ञाजन्यबोधान् विशिष्य निवेश्य वाक्यानामेव "अनुगमकेन" अन्यतमत्वेन निवेशः कृतः । ये तु

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विशिष्य निवेशनस्यावश्यकत्वेन तत्तद्विशिष्टार्थबोधजनकवाक्यप्रतिपाद्यत्वेन तत्तद्विशिष्टार्थनिवेशस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात्। एतत्सूचनायैव तत्तादित्युक्तम्।

न चाऽत्र नानावयवजन्यसमूहालंबनबोधं प्रतिज्ञाहेत्वादिजन्यविशिष्टार्थबोधं चादाय तज्जनकसमुदायेऽतिव्याप्तिः, तत्तद्विशिष्टार्थबोधनिष्ठतत्तदेकदेशबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकताश्रये अवयवैकदेशे चाऽतिव्याप्तिः' । तत्ताद्विशिष्टार्थविषयकशाब्दबुद्धित्वावच्छिन्नजन्यता अन्यतमत्वेनोपादाय तत्तन्निरूपितजनकतावच्छेदकधर्मपर्याप्त्यधिकरणताया निवेशनीयत्वात् । तादृशधर्मः पर्वतोवन्हिमानित्यादिवाक्यत्वमेव, वाक्यत्वस्य व्यासज्यवृत्तित्वान्नैकदेशाऽतिव्याप्तिः । तादृशशाब्दबुद्धित्वावच्छिन्नत्वं च तादृशशाब्दबुद्धित्वपर्याप्तावच्छेदकताकत्वं । अतः प्रतिज्ञाहेतुसमुदायादेः साध्यविशिष्टपक्षावगाहिशाब्दत्वघटितधर्मावच्छिन्नजनकत्वेऽपि नातिप्रसंगः। वाक्यज्ञानस्य जनकतामते तु तादृशजनकतायां विषयितासंबन्धेन यादृशधर्मावच्छिन्नं-यादृशधर्मावच्छिन्नविषयकत्वं वाऽवच्छेदकं तादृशधर्मपर्याप्त्याश्रयत्वं विवक्षणीयमिति नाऽसंभवः। तादृशोपि धर्मः पर्वतोवन्हिमानित्यादिवाक्यत्वमेव ।

---

बोधानामेवाऽन्यतमत्वेन निवेशं वदन्ति तन्मतमवतारयति। मूलस्थेति। दीधितिकृन्मतं खण्डयति । तादृशेति साध्यवत्पक्षविषयकेत्यर्थः। पूर्वोपदर्शितानुपपत्तिप्रसंगादिति । असंभवप्रसंगादित्यर्थः प्रतिज्ञादिभिन्नत्वस्य पर्वतपदे सत्वेन तद्भिन्नत्वस्य प्रतिज्ञायामसत्वादिति भावः। एतत्। प्रतिज्ञाप्रतिपाद्येतिविशेषणम्। तेषां । साध्यविशिष्टपक्षादीनां । तद्विशिष्टार्थेति। साध्यविशिष्टपक्षविषयकेत्यर्थः । वाक्यप्रतिपाद्यत्वेनेति। वाक्यजन्यबोधविषयत्वेनेत्यर्थः । तत्तद्विशिष्टार्थनिवेशस्येति । साध्यविशिष्टपक्षादिनिवेशस्येत्यर्थः।

नचेति। अस्याऽतिव्याप्तिद्वयेन सहाऽन्वयः। अतिव्याप्तिरिति। तादृशसमुदायजन्यबोधस्यापि तादृशान्यतममध्ये प्रवेशात्। अथ केवलप्रतिज्ञाद्यर्थविषयकज्ञानव्यक्तीस्तत्वेनोपादाय तादृशज्ञानपंचकान्यतमजनकत्वनिवेशान्नैष दोष इत्यतो विभिन्नानुपूर्वीकप्रतिज्ञादिज्ञानजन्यज्ञानानामेकोपादानेऽन्यानुपूर्वीकज्ञाने तदजनकतयाऽव्याप्तिः, सकलोपादाने तु अन्यतमशरीरे गौरवमिति दोषस्य स्फुटतयोपेक्ष्य स्थलान्तरे दोषमाह। अवयवैकदेशे चेति। अन्यतमत्वेनोपादायेति । अत्रेदंबोध्यम् । तादृशबोधपंचकान्यतमबोधनिष्ठजन्यतानिरूपितजकतावच्छेदकीभूतयत्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वघट -

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कीभूतयत्किंचिद्ज्ञाने स्वानवच्छेदकीभूतविषयिताविशिष्टताद्दशजनकताशून्यत्वनिवेशेन प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिवारणेऽपि धूमादालोकवान्पर्वतोवह्निमान् धूमादित्यत्र प्रतिज्ञार्थविषयकबोधनिष्ठपर्वतधर्मिकधूमज्ञानज्ञाप्याऽलोकप्रकारकबुद्धित्वावच्छिन्नजन्यतामादाय धूमादालोकवान्पर्वत इति भागेऽतिव्याप्तिः, एवं वह्निव्याप्यधूमवानयमित्युपनयजन्यबोधनिष्ठजन्यतानिरूपिजनकतामादाय धूमवांश्चायमिति वाक्येऽतिव्याप्तिरतस्तादृशबोधेऽन्यतमत्वं विहाय तत्तद्विशिष्टार्थविषयकबुद्धित्वावच्छिन्नजन्यताऽन्यतमत्वेन निवेशनीयेति ध्येयम्। **निवेशनीयत्वादिति**। तथा च प्रतिज्ञैकदेशविषयकशाब्दबुद्धित्वावच्छिन्नजन्यतां— उपनयार्थैकदेशविषयकशाब्दबुद्धित्वावच्छिन्नजन्यतां चादाय न तत्तदेकदेशेऽतिव्याप्तिः। **अतः**। जन्यतायां तादृशावच्छेदकताकत्वनिवेशात्। **नातिप्रसंग इति**। पर्वतधर्मिकधूमज्ञानज्ञाप्यवह्निप्रकारकशाब्दबोधनिष्ठजन्यतायाः साध्यविशिष्टपक्षावगाहिशाब्दत्वपर्याप्तावच्छेदकताकत्वाभावादिति भावः। ननु वाक्यज्ञानस्य जनकतामते प्रतिज्ञादिविषयकज्ञानत्वमेव जनकतावच्छेदकं, तत्पर्याप्त्यधिकरणत्वस्य वाक्येऽसत्वादसंभव इत्यतआह। **वाक्यज्ञानस्येति**। **जनकतायामिति**। तत्तद्विशिष्टार्थविषयकशाब्दबुद्धित्वपर्याप्तावच्छेदकताकाऽन्यतमजन्यतानिरूपितजनकतायामित्यर्थः।

तथा च तत्तद्विशिष्टार्थविषयकशाब्दबुद्धित्वपर्याप्तावच्छेदकताका या जन्यताऽन्यतमजन्यता तत्तन्निरूपितजनकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मपर्याप्त्यधिकरणत्वमवयवत्वं फलितम्[1]।

---

१. अथ पर्वतधर्मिकवह्निप्रकारकशाब्दत्वमात्रं न पर्वतो वह्निमानित्यानुपूर्वीज्ञानस्य जन्यतावच्छेकं पर्वतोदहनवानित्यानुपूर्वीज्ञानजन्यतादृशशाब्दबोधसाधारणत्वात्। "तथा च परस्परजन्ये व्यभिचारः" किन्तु पर्वतोवह्निमानित्यानुपूर्वीज्ञानाव्यवहितोत्तरपर्वतधर्मिकवह्निप्रकारकशाब्दत्वमेव। तथा च पर्वतधर्मिकवह्निप्रकारकशाब्दत्वपर्याप्तावच्छेदकताकजन्यतानिरूपितजनकत्वं न पर्वतोवह्निमानिति ज्ञानस्यापीति कथं प्रतिज्ञादौ लक्षणसमन्वयः। न च तादृशशाब्दबुद्धित्वपर्याप्तावच्छेदकताकजन्यता इत्यनेन प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयतावहिर्भूतविषयत्वानवच्छिन्नत्वं विवक्षणीयम्। तादृशविषयतावहिर्भूतत्वं च तादृशविषयित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वम्, । भेदप्रतियोगितावच्छेदकता च साक्षात्परंपरासाधारणी ग्राह्या। एवं च पर्वतोवह्निमान्धूमादित्यादिवाक्यज्ञाननिरूपिता या जन्यता तस्यास्तादृशविषयतावहिर्भूतधूमज्ञानज्ञाप्यत्वविषयत्वावच्छिन्नतया न तादृशजन्यतामादाय प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिः। पर्वतोवह्निमानिति प्रतिज्ञा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अथाऽऽकांक्षादिमत्पदकदंबत्वरूपवाक्यत्वमेव व्यासज्यवृत्ति,-तदवच्छिन्नविषयकज्ञानत्वेन च न शाब्दबुद्धिजनकत्वं, समूहत्वज्ञानस्याऽनुपयुक्तत्वात् । किन्त्वानुपूर्वीविशेषात्मकाकांक्षावच्छिन्नविषयकज्ञानत्वेनैव तथात्वं, आनुपूर्वीविशेषाश्चैकवर्णनिष्ठापरवर्णानन्तर्यरूपो न व्यासज्यवृत्तिरिति एकदेशेऽतिप्रसंगो दुर्वारः। न च तादृशजनकतावच्छेदकीभूतविषयितानिरूपकवर्णसमुदायत्वमेव विवक्षणीयमतो नातिप्रसंग इति वाच्यम् । तत्तप्रतिज्ञादिव्यक्तिभिन्नप्रतिज्ञादिघटकवर्णानामपि तादृशसमुदायघटकतया क्वचिदपि अवयवव्यक्तौ तादृशसमुदायत्वापर्याप्तेः प्रत्ये-

---

पदकदंबत्वरूपेति । पदसमूहत्वरूपेत्यर्थः । तथात्वं । जनकत्वम् । एकदेशे । एकैकवर्णे । अवयवव्यवहारानुपपत्तिरिति । अव्याप्तिरित्यर्थः । तादृशबोधजनकतेति । तत्तद्विशिष्टार्थबुद्धित्वावच्छिन्नजन्यतान्यतमजन्यतानिरूपितजनकतेत्यर्थः । यत्किंचित्त्वनिवेशेन प्रत्येकमवयवव्यवहारोपपत्तिः । न च तादृशबोधजनकताश्रययत्किंचिद्ज्ञानीयेत्येवोच्यतां किमव-

---

जन्यतावच्छेदककोटौ पर्वतोवन्हिमानित्यानुपूर्वीज्ञानस्याऽ व्यवहितोत्तरत्वसंबन्धेनाऽवच्छेदकत्वेऽपि तादृशजन्यतायां पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवन्हित्वावच्छिन्नविषयतावहिर्भूतविषयत्वानवच्छिन्नत्वमस्त्येवेति प्रतिज्ञादिरूपावयवे लक्षणसमन्वय इति वाच्यम् । परस्परजन्ये व्यभिचारवारणाय पर्वतोवन्हिमान्धूमादित्याकारकाकांक्षाज्ञानस्याऽव्यवहितोत्तरत्वसंबन्धेन तादृशानुपूर्वीज्ञानजन्यतावच्छेदकत्वे तज्जन्यतावच्छेदककोटौ पर्वतधर्मिकधूमज्ञानज्ञाप्यवन्हिप्रकारताया:प्रवेशो व्यर्थं इति प्रतिज्ञाहेत्वन्तभागविषयकज्ञाननिष्ठजनकतानिरूपितजन्यतायाः विषयत्वानवच्छिन्नतया प्रकृतपक्षे प्रकृतसाध्यविषयतावहिर्भूतविषयत्वानच्छिन्नत्वमक्षतमेवेति प्रतिज्ञाहेत्वन्तवारणमशक्यमेवेति चेन्न । स्वावच्छिन्नाऽसमवधानप्रयुक्तप्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिज्ञानोपधायकत्वाभाववत् प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिज्ञानत्वकत्वावच्छिन्नत्वेन जनकतां निवेश्य तादृशान्यतमत्वेन जनकतानिवेशे तात्पर्यात् । एवं च पर्वतत्वावच्छिन्नविशेष्यकवन्हिप्रकारकयोग्यताज्ञाने यः प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहिशाब्दबोधरूपफलोपधायकत्वसामान्याभावः तत्र पर्वतोवन्हिमानित्यानुपूर्वीज्ञानत्वावच्छिन्नाभाव एव प्रयोजकः, न तु पर्वतोवन्हिमान्धूमादित्यानुपूर्वीज्ञानाभावः इति स्वपदेन पर्वतोवन्हिमान्धूमादित्यानुपूर्वीज्ञानत्वं न धर्तुं शक्यते इति तदवच्छिन्नजनकतामादाय प्रतिज्ञाहेतुसमुदाये नातिव्याप्तिः । एवं प्रकारेणैव हेत्वाद्यानुपूर्वीज्ञानत्वावच्छिन्नजनकतापि निवेशनीया । एतादृशलाभार्थमेव तत्तद्बुद्धित्वपर्याप्तावच्छेदकताकत्वं जन्यतायां निवेशितम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कमवयवव्यवहारानुपपत्तेः । मैवम् । तादृशबोधजनकतावच्छेदकीभूत यत्किंचिद्ज्ञानीयविषयितानिरूपकवर्णसमुदायत्वस्य विवक्षणीयत्वात् । तादृशं च ज्ञानं तथाविधजनकताद्वयशून्यत्वेन विवक्षणीयम्, तेन प्रतिज्ञाहेत्वादिसमुदाये नातिव्याप्तिः । न चैवं हेत्वर्थप्रतिपादकभागघटित-प्रतिज्ञाविशेषेऽव्याप्तिः तद्विषयकज्ञाने हेत्वर्थबोधकतानियमादिति वाच्यम् । व्याप्यव्यापकभावानापन्नजनकताद्वयशून्यताया निवेशनीयत्वात् ।

---

च्छेदकीभूतपदोपादानेनेति वाच्यम् । तादृशान्यतमबोधस्वरूपयोग्यावयव-संग्रहाय तदुपादानात् । नन्वेवमपि पर्वतोवन्हिमानिति प्रतिज्ञाविषयकधूमादिति हेतुविषयकसमूहालंवनशब्दज्ञानमादाय प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिरत आह । तादृशं च ज्ञानमिति । जनकतावच्छेदकविषयिताश्रययत्किञ्चिद्ज्ञानमित्यर्थः । तथाविधजनकतेति । तत्तद्विशिष्टार्थविषयकबुद्धित्वावच्छिन्नजन्यताऽन्यतमजन्य-तानिरूपितजनकतेत्यर्थः । तेन तथाविधजनकताद्वयशून्यत्वनिवेशेन । नाति-व्याप्तिरिति । प्रतिज्ञाहेतूभयविषयकज्ञानस्य तथाविधजनकताद्वयशून्यत्वविरहा-दिति भावः । तथा च तथाविधजनकताविशिष्टतादृशजनकताशून्यत्वं तादृशज्ञाने विवक्षणीयमित्यर्थः । वै० स्वाभाववद्वृत्तित्व-स्वसामानाधिकरण्योभयसंबन्धेन । एवं । तथाविधजनकताद्वयशून्यत्वनिवेशेपि । प्रतिज्ञाविशेषे । धूमाद्वन्हिमतः सधर्मा पर्वतोवन्हिमानित्यत्र । तद्विषयकज्ञाने । प्रतिज्ञाविषयकज्ञाने । नियमा-दिति । तथाविधजनकताद्वयसत्वादितियावत् । जनकतायां व्याप्यव्यापकभावा-नापन्नत्वं निवेश्य समाधत्ते । व्याप्येति । तथा च तथाविधजनकताविशिष्टं यत् तदन्यत्वं ज्ञाने निवेशनीयमित्यर्थः । जनकतावै० स्वाश्रयत्व-स्वविशिष्ट-तथाविधजनकताश्रयत्वोभयसंबन्धेन । स्ववै० स्वव्यभिचारित्व-स्वाव्यापकत्वो-भयसंबन्धेन । स्वं—जनकता । तथाच प्रतिज्ञाहेतुविषयकसमूहालंवनज्ञाने

---

१. न च प्रतिज्ञादिप्रत्येकमात्रविषयकज्ञानमादाय प्रतिज्ञाहेतुसमुदायेऽतिव्याप्ति वारणाय तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वेन तादृशसमुदायत्वविशेषणात् प्रतिज्ञाहेतुसमुदायत्वादेः प्रतिज्ञामात्रसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकतया तमा-दायाऽतिव्याप्तिशंका न संगच्छते इति वाच्यम् । प्रतिज्ञाघटकहेतुमात्रवृत्तिसमुदायत्व-निष्ठन्यूनवृत्तितानिरूपकत्वेन प्रतिज्ञाविशेषेऽव्याप्तिचारणाय यत्किचिद्ज्ञानीयतादृश-विषयताश्रयवर्णसमुदायत्वरूपप्रतिज्ञालक्षणे वस्तुगत्या तद्ज्ञानं यत्किञ्चित्वेन निवेश्य तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वस्य निवेश्यतया तस्य प्रतिज्ञाहेत्वादि-समुदाये सत्वात् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वस्तुतस्तु स्वानवच्छेदकविषयिताविशिष्टतादृशजनकतानाश्रयत्वं ज्ञाने विशेषणम् । स्वं-जनकता ।

प्रतिज्ञाहेतूभयादिविषयकज्ञानं च प्रतिज्ञार्थजनकतानवच्छेदकीभूत-हेत्वादिविषयिताविशिष्टतादृशजनकताश्रयः, एवं धूमादालोकवान्पर्वतो वन्हिमान्धूमादित्यादिप्रतिज्ञामात्रविषयकज्ञानं च न तादृशविशिष्ट जनकताश्रयः, तन्निष्ठहेत्वर्थबोधजनकतावच्छेदकविषयिताया अपि विशिष्टप्रतिज्ञार्थबोधजनकतायां अवच्छेदकत्वात् ।

---

निरुक्तोभयसंबन्धेन प्रतिज्ञाजनकताविशिष्टहेतुजनकतायाः सत्वान्न निरुक्तोभयसंबन्धेन तथाविधजनकतावदन्यत्वम् । धूमाद्वन्हिमतःसधर्मा-पर्वतोवन्हिमानिति ज्ञाने तथाविधप्रतिज्ञाजनकतायाः सत्वेऽपि हेतुजनकतायां तद्व्यभिचारित्वसत्वेऽपि तदव्यापकत्वविरहान्निरुक्तोभयसंबन्धेन तथाविधजन-कताविशिष्टान्यत्वमक्षतमेव ।

यद्यपि पर्वतोवन्हिमानिति प्रतिज्ञाविषयकज्ञानेऽपि विनिगमनाविरहेण प्रतिज्ञा-ज्ञानीयविषयतासमसंख्याकजनकतानां सत्वात् ,तथाविधजनकतायां व्याप्यव्यापक-भावानापन्नत्वाऽनिवेशेऽसंभव एव संभवति, तथापि निरुक्तसंबन्धघटक-जनकतावैशिष्ट्यस्य स्वव्यभिचारित्वसंबन्धेन स्वाऽव्यापकत्वसंबन्धेन वा निवेशेनैवाऽसंभववारणसंभवादुभयसंबन्धेन जनकतावैशिष्ट्यनिवेशप्रयोजनं धूमाद्वन्हिमतः सधर्मा पर्वतो वन्हिमानित्यादावव्याप्तिवारणमेव । स्वाश्रयत्व स्वनिरूपितजन्यतावच्छेदकधर्मावच्छिन्नजन्यतानिरूपितजनकताभिन्नजनकता – वत्व एतदुभयसंबन्धेन तथाविधजनकताविशिष्टान्यत्वोक्तावपिअसंभव-वारणसंभवात् । तथा च पर्वतधर्मिकवन्हिप्रकारकशाब्दत्वावच्छिन्नजन्यता-निरूपिता या पर्वतोवन्हिमानित्यानुपूर्वीज्ञाननिष्ठा जनकता तस्यास्तद्ज्ञानीय-विषयताभेदेन भेदेपि तासां सर्वासां पर्वतधर्मिकवन्हिप्रकारकशाब्द-त्वरूपैकधर्मावच्छिन्नकार्यतानिरूपितत्वात् । स्वाश्रयत्वसंबन्धेन एतज्जनकता-वैशिष्ट्यं पर्वतोवन्हिमानिति ज्ञाने ऽस्ति तज्जनकतानिरुपितजन्यतावच्छेदकधर्मा-वच्छिन्नजन्यतानिरूपितजनकतावत्वविरहान्निरुक्तोभयसंबन्धेन न तादृशजनकताव-त्वमिति ध्येयम् । निवेशनीयत्वादिति । गौरवेण पर्याप्तावच्छेदकताकत्वनिवेशा-संभवादिति तत्वम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



**वस्तुतस्त्विति** । वै० सामानाधिकरण्यसंबन्धेन । **तादृशजनकतेति** । तत्तद्विशिष्टार्थबुद्धित्वावच्छिन्नजन्यतान्यतमजन्यतानिरूपितजनकतेत्यर्थः । तथा च स्वा[1]नवच्छेदकविषयिताविशिष्टतादृशजनकताशून्ययत्किंचिद्ज्ञानीयतत्तद्विशिष्टार्थबोधजन्यतान्यतमजन्यतानिरूपितस्वावच्छेदकविषयितानिरूपकवर्णसमुदायत्वमिति समुदितार्थः । सर्वत्र स्वपदेनैकैव जनकतोपादेया । प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिं वारयति । **प्रतिज्ञाहेतूभयादिविषयकज्ञानं चेति** । तथा च स्वं—केवलप्रतिज्ञाज्ञाननिष्ठजनकता तदनवच्छेदिका हेतुज्ञानविषयिता-तत्समानधिकरणा या प्रतिज्ञाज्ञानजनकता तच्छून्यं ज्ञानं प्रतिज्ञामात्रविषयकं ज्ञानं "न तु प्रतिज्ञाहेतुसमुदायविषयकं ज्ञानं" तस्य तच्छून्यत्वविरहात् । तदीय प्रतिज्ञार्थबोधजन्यतानिरूपितजनकतावच्छेदकविषयितानिरूपकवर्णसमुदायत्वस्य - प्रतिज्ञाहेतुसमुदाये विरहान्नातिव्याप्तिः । प्रतिज्ञाविशेषेऽव्याप्तिं वारयति । **एवमिति** । तत्र प्रतिज्ञाघटकहेत्वर्थबोधजनकतावच्छेदकविषयितायाः प्रतिज्ञार्थबोधजनकतानवच्छेदकत्वविरहान्नाव्याप्तिरिति भावः । **अनुगमस्तु** विषयिताविशिष्टजनकतानाश्रयत्वम् । वै० स्वानवच्छिन्नत्व स्वसामानाधिकरण्योभयसंबन्धेन ।

---

१. अथ पर्वतोवन्हिमान्धूमादित्यत्र प्रतिज्ञाहेतुविषयकज्ञाने प्रतिज्ञाज्ञानत्वावच्छिन्नजनकतावच्छेदकीभूतहेतुविषयिताविशिष्टप्रतिज्ञाज्ञानत्वावच्छिन्नजनकतायाः— हेतुज्ञानत्वावच्छिन्नजनकतानवच्छेदकीभूतप्रतिज्ञाविषयिताविशिष्टहेतुज्ञानत्वावच्छिन्नजनकतायाश्च सत्वात् प्रतिज्ञाहेतुविषयकज्ञानमादाय प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिवारणेऽपि धूमादालोकवान्पर्वतोवन्हिमानित्यत्रप्रतिज्ञायामव्याप्तिः, तादृशप्रतिज्ञाज्ञाने-हेतुविषयकज्ञानत्वावच्छिन्नजनकतानवच्छेदकीभूता या पर्वतोवन्हिमानिति"भागविषयकज्ञानवृत्ति"विषयिता तद्विशिष्टहेतुविषयकज्ञानत्वावच्छिन्नजनकतायाः सत्वात् । न च यादृशजनकतामादायाऽवयवे लक्षणं नेयम्, तादृशजनकतावच्छेदकीभूतविषयिताविशिष्टतथाविधजनकताशून्यत्वमेव ज्ञाने विवक्षणीयम् । तथा च धूमादालोकवान्पर्वतोवन्हिमानिति प्रतिज्ञायां यादृशप्रतिज्ञाजनकतामादाय लक्षणं नेयं तादृशजनकतानवच्छेदकीभूतविषयिताविशिष्टतादृशान्यतमजन्यतानिरूपितजनकताशून्यत्वस्य तादृशप्रतिज्ञाज्ञाने सत्वात् तादृशजनकतामादाय तादृशप्रतिज्ञायां लक्षणसमन्वय इति वाच्यम् । एवं यज्जनकतामादाय लक्षणं नेयं तज्जनकतानवच्छेदकीभूतविषयिताशून्यत्वस्य ज्ञानविशेषणत्वेनैव प्रतिज्ञाहेतुवारणसंभवात्स्वानवच्छेदकीभूतविषयिताविशिष्टतथाविधजनकतापर्यन्तानुधावनस्य वैयर्थ्यापत्तेरितिचेद्, एतत्कल्पे उदाहरणेऽव्याप्तेर्वक्ष्यमाणत्वात् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एतेन ऽव्याप्यव्यापकभावानापन्नतथाविधजनकताद्वयशून्यत्वप्रवेशे धूमादालोकवान्पर्वतोवन्हिमान्धूमादित्यादिसमुदायेऽतिव्याप्तिः। तादृशसमुदायविषयकज्ञाननिष्ठप्रतिज्ञार्थबोधकत्वहेत्वर्थबोधजनकतयोर्व्याप्यव्यापकभावात्, व्याप्यव्यापकभावानापन्नतथाविधजनकताद्वयशून्यत्वादिति निरस्तम्।

तादृशवाक्यविषयकज्ञानीयप्रतिज्ञाघटकहेतुसमानाकारकवाक्यविषयिताया विशिष्टप्रतिज्ञार्थबोधजनकतावच्छेदत्वेऽपि प्रतिज्ञावाक्यविषयितानन्तःपातिन्या हेतुविषयितायास्तादृशजनकतानवच्छेदकत्वात्। यदि चोदासीनपदार्थविषयितानियतविषयिताकाऽवयवव्यक्तिः प्रमाणिकी तदा स्वानवच्छेदकविषयिता तथाविधजनकतावच्छेदकत्वेन विशेषणीया। तादृशावयवव्यक्तिविषयकज्ञानेऽवयवान्तरविषयितानैयत्यस्य प्रामाणिकत्वे त्वगतिरेवेति ध्येयम्। समानाकारकप्रतिज्ञाद्वयात्मकसमुदायस्याऽवयवत्वपर्याप्त्याश्रयत्वमिष्टमेव, तस्याऽतथात्वे तद्वारणप्रकारोपि चिन्तनीयः। न्यायान्तर्गतत्वस्यापि निवेशनीयतया नोदासीनवाक्यसाधारण्यमिति बोध्यम्।

---

एतेन। वस्तुतस्तु इति कल्पादरेण। व्याप्यव्यापकभावानापन्नेति। स्वव्यभिचारीत्यर्थः। तथा च स्वाभाववद्वृत्तित्व-स्वसमानाधिकरणाभावप्रतियोगित्व-स्वसामानाधिकरण्य एतत्त्रितयसंबन्धेन तादृशजनकताविशिष्टजनकताशून्यत्वं पर्यवसितार्थः। तथाविधेति। तत्तद्विशिष्टार्थबुद्धित्वावच्छिन्नजन्यताऽन्यतमजन्यतानिरूपितेत्यर्थः। यादृशप्रतिज्ञादिज्ञानमुदासीनपदार्थविषयकमेव जायते तादृशप्रतिज्ञादिव्यक्तौ अव्याप्तिमाशंकते। यदिचेति। समाधत्ते तदेत्यादि। एवं च स्वानवच्छेदिका या तत्तद्विशिष्टार्थबोधजनकतावच्छेदकविषयिता तद्विशिष्टतादृशजनकताशून्यत्वं ज्ञानविशेषणमित्यर्थः। असमानाकारकप्रतिज्ञाद्वये जन्यताभेदमते दोषाऽप्रसक्तेः समानेति। एकप्रतिज्ञा प्रतिज्ञाद्वयं नेति प्रत्ययसंभवेपि नावयव इति प्रत्ययाऽसंभवात्। तस्याऽतथात्वे। प्रतिज्ञाद्वयस्याऽवयवत्वास्वीकारे। चिन्तनीयइति। प्रतिज्ञाद्वयस्याऽलक्ष्यतापक्षे तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वं देयमिति चिन्तावीजम्।

ननु एतेनैव प्रतिज्ञाहेतुसमुदायातिव्याप्तिवारणे स्वानवच्छेदकेत्यादेर्वैयर्थ्यप्रसंगइतिचेद्—एतत्कल्प इष्टत्वात्।

अत्र च। लक्षणे च। ननु यत्किञ्चित्वं एकमात्रवृत्तिधर्मः तथा च स्वाधिकरणैकमात्रवृत्तित्वसंबन्धेन ज्ञानत्वविशिष्टविषयिताया निवेशान्नदोष इत्यत आह। एवमिति। दोषद्वयं जन्यतानिवेशपक्षे। भागे। धमादालोकवान्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अत्र च यत्किंचित्त्वनिवेशादननुगमोदुर्वारः। एवं प्रतिज्ञादिघटक-हेत्वर्थप्रतिपादकभागेऽतिव्याप्तिः। एवमुदाहरणस्य वाक्यद्वयात्मकस्य संग्रहाय तत्प्रतिपाद्यसाध्यविशिष्टधर्मिविषयकशाब्दत्वावच्छिन्नजन्यता तथाविधहेतुविशिष्टविषयकशाब्दत्वावच्छिन्नजन्यता वा ऽन्यतमजन्यता-गर्भे निवेशनीया, तथा च तद्घटकप्रत्येकवाक्येऽतिव्याप्तिः। एतादृशार्थद्वय-विषयकबुद्धित्वं च न समुदायस्यापि जन्यतावच्छेदकमिति तदवच्छिन्नै-कजन्यतानिवेशाऽसंभवात्। न च जनकता एवाऽन्यतमत्वेन निवेशनीयाः, तच्छरीरे चोदाहरणप्रतिपाद्यतत्तद्विशिष्टार्थबुद्धित्वावच्छिन्ननिरूपितजन-कताद्वयं द्वित्वेन निवेशनीयम्। अत एकैकजनकताश्रय-प्रत्येकभागविषयकज्ञानमादाय न प्रत्येकभागेऽतिव्याप्तिरिति वाच्यम्।

---

पर्वतोवन्हिमानिति प्रतिज्ञाघटकधूमादित्येकदेशे न तु पर्वतोवन्हिमानिति प्रतिज्ञा-घटकपर्वतपदे तन्मात्रज्ञानस्य तथाविधजनकतानाश्रयत्वादत उक्तं हेत्वर्थेति। नन्वत्र साध्यवत्पक्षविषयिताद्यन्यतमनिष्ठप्रयोज्यतानिरूपितप्रयोजकतावच्छेदक-यत्किञ्चिद्विषयिताकवर्णसमुदायत्वं वाच्यं, तत्र च प्रकृतपक्ष-विशेषणतापन्नप्रकृतसाध्यान्वितहेतुविशिष्टहेतुत्वविषयितानिवेशान्न प्रतिज्ञाघ-टकहेत्वर्थबोधकभागेतिव्याप्तिः। हेतुविषयतायां व्याप्त्या-दिविषयित्वानिरूपितत्वं देयम्, तेन निगमनघटकतस्मात्पदे नातिव्या-प्तिरित्यतआह। एवमिति। वाक्यद्वयात्मकस्य। वाक्यचतुष्टयात्मकस्य। तत्प्रतिपाद्येति उदाहरणप्रतिपाद्येत्यर्थः। तथाविधेति। उदाहरणप्रतिपा-द्येत्यर्थः। तथा च। तादृशजन्यताऽन्यतमगर्भे जन्यताद्वयस्यैव प्रवेशे च। तद्घट-कवाक्ये। उदाहरणघटकवाक्यद्वये, यो यो धूमवान् स स वन्हिमानिति वाक्यद्वये इतियावत्। इदमुपलक्षणम्। महानसं धूमवत्, महानसान्यद्धूमवत्, महानसं वन्हिमत्, महानसान्यद्वन्हिमच्चेति वाक्ययतुष्टयेऽपि बोध्या। अतिव्याप्तिरिति। तादृशजन्यताऽन्यतमजन्यतानिरूपितजनकतावच्छेदकय-त्किंचिद्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वस्य तत्र तत्र सत्वादिति भावः। ननु उदाहरणसमुदायनिरूपितैकजन्यतामादाय तादृशजन्यतानिरू-पितजनकतावच्छेदकविषयताश्रयवर्णत्वव्यापकसमुदायत्वस्य उदाहरणसमुदाये एव सत्वान्नोदाहरणघटकप्रत्येकवाक्येऽ तिव्याप्तिरित्यत आह। तादृशेति। उदाहरणप्रतिपाद्येत्यर्थः। तदवच्छिन्नेति। तादृशार्थद्वयविषयकबुद्धित्वा-वच्छिन्नेत्यर्थः। आशंकते। नचेति। जनकता एवेति। एवकारेण

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उभयभिन्नत्वस्य प्रत्येकमुभयस्मिन्सत्वात्, उभयभिन्न-भिन्नत्वस्योभयत्राऽसंभवादन्यमत्वेनोभयोपादानाऽसंभवात् । व्यासज्य-वृत्तिधर्मावच्छिन्नानुयोगिताकभेदोपगमे तु तादृशान्यतमत्वाश्रयप्रत्येक-जनकतामादायाऽतिप्रसंगस्य दुर्वारत्वात् । पूर्वकल्पे तु प्रतिज्ञाद्यघटक-त्वविशेषणेनैव नातिप्रसंगावकाशः, यो यो धूमवानिति प्रत्येकवाक्यस्य वाक्यद्वयात्मकोदाहरणघटकत्वात् । न च वाक्यद्वयपर्याप्तमुदाहरण त्वं दुर्वचम् । स्वघटकयत्पदोपस्थाप्यधर्मिणि हेतुमत्वबोधकं यत्, यच्च-तदनन्तरप्रयुक्तस्वघटकतत्पदोपस्थाप्यतादृशधर्मिणि साध्यवत्ताबोधकं-वाक्यं तदुभयत्वस्यैव तथात्वात् । अत्रापि प्रतिज्ञाद्यघटकत्वं निवेशनीय-मितिचेत्तर्हि गुरुशरीरस्य तादृशविषयितानिरूपकवर्णसमुदायत्वस्य निवेशापेक्षया निरुक्तोभयघटकभागद्वयाघटितत्वनिवेशनमेवोचितमि-त्यरुचिबीजमवधेयम् ।

---

जन्यताव्यवच्छेदः । द्वित्वेन निवेशनीयमिति । उदाहरणघटकवाक्यचतुष्टय-विषयकप्रत्येकज्ञानचतुष्टयनिष्ठजनकतामादाय तन्निष्ठचतुष्टयावच्छिन्नभेदस्यैवान्य-तमकुक्षौ निवेशात्तादृशजनकताचतुष्टयावच्छेदकविषयितानिरूपकवर्णत्वव्यापकस-मुदायत्वस्य संपूर्णे एव सत्वान्नैकदेशेऽतिव्याप्तिरिति भावः । यद्यपि द्वित्वेन निवे-शेपि वाक्यचतुष्टयसमुदायत्वस्य संग्रहः । तथापि तथानिवेशे तस्य वाक्यद्वयवृत्ति-समुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वमिति चतुष्टयानुधावनम् । अतः । जनकता-द्वयस्य द्वित्वेन निवेशात् । उभयत्राऽसंभवादिति । व्यासज्यवृत्तिधर्मावच्छि-न्नानुयोगिताकएकदेशभेदानंगीकारादिति भावः । दुर्वारत्वादिति । अन्यतम-त्वस्याऽव्यासज्यवृत्तितया पर्याप्तिविवक्षायाः असंभवात् । ननु दीधितिकृन्मतेपि उभयघटकभागद्वयाऽघटितत्वस्य एकदेश-साधारणतयाऽतिव्याप्तिर्दुर्वारेत्यत आह । पूर्वकल्पे त्विति । ननु उदाहरणत्वस्य दुर्वचतया कथं तदवच्छिन्नभेदानुयोगितावच्छेद-कत्वमित्याशयेन शंकते । नचेति वाक्यद्वयेति । यो यो धूमवान् सस वन्हिमान् इतिवाक्यद्वयेत्यर्थः । दुर्वचमिति । इतरावयवानन्वितस्वार्थबोधकत्वं नोदाहरणत्वं आत्माश्रयात् । अतो व्याप्यत्वाभिमतवन्हिनिष्ठव्यापकत्वाभितसंबन्धबोधकत्वमु-दाहरणत्वमिति मूलोक्तलक्षणं परिष्करोति । स्वघटकेति स्वं वाक्यं । हेतुमत्व-बोधकं यदिति । वाक्यमित्युत्तरेणान्वयि । तच्च यो यो धूमवानित्याकारकं । साध्यवत्तावोधकं वाक्यमिति । तच्च स स वन्हिमानित्याकारकं । तथा च तदुभयस्यैव । तदुभयवाक्यत्वस्यैव । तथात्वात् उदाहरणत्वात् । तथा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



**ननु न्यायजन्यज्ञानस्यापि उपनयार्थंव्याप्यवत्पक्षावगाहितया परामर्शरूपत्वात्परामर्शजनकवाक्यत्वमेव न्यायत्वं कुतो नोच्यते, एवं तादृशवाक्यघटकवाक्यत्वमेवाऽवयवत्वमस्तु किमुक्तगुरुतरन्यायतदवयव-लक्षणानुसरणेनेति प्रतिज्ञादिपंचकस्य विशिष्टैकार्थप्रतिपादकत्वाभि-मानिनां आशंकां मूलकृन्निराकरोति । अतएवेति । तादृशलक्षणमुपेक्ष्य-यथोक्तलक्षणानुसरणादेवेत्यर्थः । परामर्शस्य । परामर्शमात्रस्य । परा-मर्शजनकस्य । परामर्शजनकमात्रस्य । मात्रपदात्पूर्वोपदर्शितन्याय-तदवयवलक्षणघटकशाब्दबोधविशेषौ क्रमेण व्यवच्छेद्यौ ।**

---

च स्वघटकयत्पदोपस्थाप्यतावच्छेदकदृष्टान्ततावच्छेदकधर्मावच्छिन्नविशेष्यता-निरूपितप्रकृतहेतुप्रकारताशालिशाब्दबोधजनकतावच्छेदकत्व,तथाविधधर्मावच्छि-न्नभेदावच्छिन्नविशेष्यतानिरूपितप्रकृतहेतुप्रकारताशालिशाब्दजनकतावच्छे-दकत्वोभयवत्प्रकारताश्रयानुपूर्वीघटकवर्णत्वव्यापकतदाश्रयाधिकरणकालध्वंसोत्प-त्यधिकरणक्षणध्वंसोत्पत्यधिकरणक्षणोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तिवृत्ति स्वघट-कतत्पदोपस्थाप्यतावच्छेदकदृष्टान्ततावच्छेदकधर्मतदवच्छिन्नभेदावच्छिन्नविशे-ष्यतानिरूपितप्रकृतसाध्यप्रकारताद्वयशालिशाब्दबोधजनकतावच्छेदकप्रकारताश्रया-नुपूर्वीघटकवर्णत्वव्यापकं समुदायत्वमित्यर्थः । **स्वं**--आनुपूर्वी । महान-सत्वचत्वरादिना भाने तु तादृशभेदानुयोगितावच्छेदकावच्छिन्नविशेष्यता-निवेश्या । यद्यपि प्रकृतहेतुविशिष्टतत्तदन्यप्रकृतसाध्यविशिष्टतत्तदन्यधर्मिवि-षयकसमूहालंबनबोधीययावत्कारणतावच्छेदकयत्किञ्चिद्विषयताश्रयवर्णत्वव्यापक समुदायत्वमुपाध्यायानामुदाहरणत्वं सम्भवति--तथापि ससवन्हिमान्योयोधूमवा-निति वाक्यस्य वारणाय स्वाश्रयीभूतसाध्यविशिष्टबोधकवाक्याव्यवहितोत्तरत्वशून्य हेतुविशिष्टबोधकवाक्यवृत्ति यत्समुदायत्वं तद्भिन्नत्वनिवेशे गौरवात्तन्नोक्तमिति-संक्षेपः ।

ननु उदाहरणैकदेशवारणाय मयापि प्रतिज्ञाद्यघटकत्वं निवेश्यत इत्यतआह । अत्रापीति ।

**न्यायजन्यज्ञानस्यापि** । महावाक्यार्थबोधस्यापि । **परामर्शरूपत्वादिति** । परामर्शजनकत्वादिति यावत् । तेनोपनयजन्यबोधस्य परामर्शरूपत्वविरहेपि न क्षतिः । **परामर्शजनकेति** । परामर्शजनकशाब्दबोधजनकेत्यर्थः । जनकत्वं च विनिगमकाभावात्सर्वेषां वाक्यानामेव, एवं तादृशवाक्यघटकत्वं च प्रत्येकवाक्या-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



43 अत एव वन्हिव्याप्यधूमवानयमितिवाक्ये तदवयवे च न न्यायतदवयवलक्षणाऽतिव्याप्तिः । तेन परामर्शस्य तदवयवेन च परामर्शजनकस्य जननात् ।

यत्तु संक्षेपतः परामर्शप्रयोजकवाक्यत्वेन विशेषाभावात्सोपि न्याय एवेति ।

समुदायवाक्यस्येव प्रत्येकवाक्यस्यापि न्यायत्वमिष्टमेव, परामर्शप्रयोजकवाक्ये एव न्यायत्वव्यवहारात् तत्त्वस्य समुदायवत्प्रत्येकवाक्येऽपि सत्वात् । एवं च परामर्शप्रयोजकवाक्यत्वमेव न्यायत्वमिति केचित्—तन्मतमुपन्यस्यति । यत्त्विति । संक्षेपतः । लाघवतः । सोपि न्याय एवेत्यनेनाऽन्वयः । परामर्शप्रयोजकेति । वन्हिव्याप्यधूमवानयमितिवाक्यस्यापीत्यादिः । विशेषेति । वाक्यपंचात्मकसमुदायादित्यादिः । यादृशवाक्यप्रयोगो नार्थान्तरादिनिबन्धननिग्रहप्रयोजकः तदेव न्यायव्यवहारविषय इति नियमाभिप्रायेण दूषयति । तन्नेति । कथायां । विचारसमये । आकांक्षाक्रमेणैवाऽभिधानं, निग्रहाप्रयोजकमिति शेषः । इति । अतः । तदभिधाने निग्रहादित्यग्रिमेणाऽन्वयः । विशिष्टवैशिष्ट्ये । पक्षस्य व्याप्तिविशिष्टहेतुमत्वे । आकांक्षा । जिज्ञासा । नास्तीति । विप्रतिपत्तितः साध्यतदभावसंशयतस्तदेकतरकोटिजिज्ञासा प्रथममुदेति । ततः प्रतिज्ञावाक्यात्तन्निश्चये तद्धेतौ–तत्प्रतीतौ च तद्गमकतौपयिकव्याप्तौ । तदनन्तरमेव च पक्षस्य तादृशहेतुमत्वे इति भावः ।

---

नामिति न्याये तदवयवे च लक्षणसमन्वयः । आशंकामिति । प्रतिज्ञादिपंचवाक्यजन्यमहावाक्यार्थबोधस्योपनयार्थविषयकत्वेन परामर्शरूपतया न्यायादौ क्रमेण लक्षणसमन्वय इत्याशंकामित्यर्थः । मूलकृन्निराकरोतीति । तस्मिन्निराकृते स्वीयलक्षणद्वयस्याऽतिव्याप्तिं निराकरोतीत्यर्थः । तथा च मूलस्थाऽतिव्याप्तिपदस्य परामर्शप्रयोजकवाक्यत्वस्य न्यायत्वमते वन्हिव्याप्यधूमवानयमिति वाक्येऽतिव्याप्तिः, एवं तादृशवाक्यघटकत्वस्याऽवयवलक्षणत्वमते तदेकदेशेऽतिव्याप्तिरित्यर्थः । स्वमतेऽतिव्याप्तिशंकैव नास्तीत्याह । मूले । तेनेति । वन्हिव्याप्यधूमवानयमितिवाक्येनेत्यर्थः । परामर्शमात्रस्येति । तथा च मूले परामर्शपदं सावधारणं बोध्यम् । परामर्शपदं परामर्शप्रयोजकशाब्दज्ञानपरम् । शाब्दबो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तन्न । कथायामाकांक्षादिक्रमेणैवाऽभिधानमिति प्रथमं विशिष्टवैशिष्ट्ये आकांक्षा नास्तीति तदभिधाने निग्रहादिति वक्ष्यते । अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्तिः । आकांक्षाविरहस्तुल्य एव ।

अन्ये तु पंचावयववाक्याद्विजातीयमेव शाब्दज्ञानमुत्पद्यते इति तद्बीजनकवाक्यत्वमेव न्यायत्वम् । एवं प्रतिज्ञाद्यवयवादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्बीजनकशब्दत्वमेव तत्तल्लक्षणमिति ।

तदभिधाने । विशिष्टवैशिष्ट्यप्रतिपादकवाक्योच्चारणे । अत्रापि प्रथममित्यनुषज्यते । अन्यथा । लाघवमात्रमादृत्य तस्य लक्ष्यतोपगमे । परामर्शजनकतयेति । लाघवाद्वाक्यत्वमप्यनन्तर्भाव्य परामर्शप्रयोजकत्वमात्रस्य लक्षणत्वौचित्यादितिभावः । ननु मध्यस्थाऽऽकांक्षा यतो निवर्त्तते स एव न्यायः । सा च शाब्दत्वप्रकारिका विषयसिद्धिनिर्वाहकशब्दादेव निवर्त्तते न तु प्रमाणान्तरादिति न चक्षुरादेर्न्यायत्वमित्यतआह । आकांक्षेति । आकांक्षानिवृत्तिविरहइत्यर्थः । तुल्य एवेति । व्याप्यवत्तावोधकवाक्यस्य प्रथमं प्रयोगेऽपि साध्यसंदेहाद्यधीनानां मध्यस्थाऽऽकांक्षानामनिवृत्तिरितिभावः ।

---

धविशेषौ । प्रयोजकान्तपरिचेयाविति शेषः । तथा च यथोक्तलक्षणासत्वलाभः । तत्त्वस्य । प्रयोजकवाक्यत्वस्य । तथा च व्यवहर्तव्यतावच्छेदकसत्तानिवन्धनो-व्यवहारोभ्युपेय इति भावः । न्याय एव । न्याय व्यवहारविषय एव, सोपीत्यस्योपनयोपीत्यर्थः, अतःपरामर्शनीयं पूरयति । वन्हीति । सद्धेताविति । जिज्ञासोदेतीत्यनुवर्तते । एवमग्रेपि । उपनयप्रयोगानुपपत्तिं निरस्यति । अत्रापीति । ननु आकांक्षाविरह इति मूलाऽसंगतिः, चाक्षुषादेर्वन्हिव्याप्यवत्तावोधकवाक्यस्येव जिज्ञासिताविषयकत्वादित्यतस्तन्मूलमवरचयति । नन्विति ।

ननु विजातीयवोधजनकत्वमेव न्यायत्वम्, विजातीयवोधजनकत्वमेव च प्रतिज्ञात्वादिकम् । एतादृशवैजात्यस्य परामर्शादावकल्पनान्नोपनयेऽतिव्याप्तिरित्यन्येषां मतमुपन्यस्यति । मूलेअन्येत्विति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तन्न। ज्ञानविशेषजनकत्वं तत्तद्ज्ञानविशेषजनकत्वं च न्याये प्रतिज्ञादौचाऽनतिप्रसक्तमनुगतरूपमन्तरेणदुर्निरूपमिति।

तत्स्वीकारे तस्यैव लक्षणत्वादन्यथा जातिसंकरप्रसंगः।

इति चिन्तामणौ अवयवलक्षणम् समाप्तम् 83

65 तस्यैवेति। तथा च तादृशजातौ साधकाभाव इति भावः। बाधकमप्याह। अन्यथेति। न्यायजन्यज्ञाने पंचावयवजन्यत्वात्पंच, द्वित्रादिजन्ये द्वित्राद्या, एकैकजन्ये चैकैका जातय इति जातिसंकर इत्यर्थः। तत्र तत्र भिन्नभिन्नजातिकल्पने च सुतरां मानाभाव इति भावः। 80

दुर्निरूपम्। असंभवि। जनकताया अवच्छेदकनियतत्वात्तज्ज्ञानस्यावच्छेदकज्ञानाधीनत्वादितिभावः।

लक्षणान्तरसंभवस्य लक्षणान्तराऽदोषतया तस्यैव लक्षणत्वादिति मूलमसंगतमतोदीधितिकृद्भावं व्याचष्टे। तथाचेति। तादृशानुगतरूपस्वीकारे चेत्यर्थः। साधकाभाव इति। तादृशधर्मस्यैव न्यायादिपदप्रवृत्तिनिमित्तत्वसंभवेन तत्प्रवृत्तिनिमित्ततया ज्ञाननिष्ठजातिविशेषसिद्ध्यसंभवात् युक्त्यन्तरस्य चाऽसत्वादिति भावः। बाधकमित्यस्य प्रतिज्ञादिजन्यतावच्छेदकजातावित्यादिः। तेन वक्ष्यमाणसंकरस्य न्यायजन्यतावच्छेदकजातावसंभवेन न क्षतिः। अन्यथेति मूलस्य प्रतिज्ञादिजन्यतावच्छेदकजातिस्वीकारे संकीर्णजातिस्वीकारप्रसंग इत्यर्थकत्वमभिप्रेत्य संकरं विवृणोति। न्यायेति। न्यायजन्यं च ज्ञानं विशिष्टैकार्थविषयकं तावद्वाक्यार्थविषयकसमूहालंबनरूपं वेत्यन्यदेतत्। पंचेति। जातय इत्यग्रिमेणाऽन्वयः। तथा च तत्रैव प्रतिज्ञाजन्यतावच्छेदकपंचजातीनां समावेश इति भावः। अन्यत्रापि सामानाधिकरण्यमाह। द्वित्रादीति। मिथोव्यभिचारितामाह। एकैकेति। नन्वेकैकजन्यनानाऽवयवजन्यबोधगततत्तदवयवजन्यतावच्छेदकजातीनां नानात्वोपगमान्न संकरावकाश इत्यतआह। तत्र तत्रेति।

---

तद्बीजनकेति। विजातीयशाब्दधीनिरूपितकारणतायां विषयितासंबन्धेनाऽवच्छेदकं यद्वाक्यं तत्त्वमित्यर्थः। एवमग्रेपि। वन्हिव्याप्यधूमवानयमित्येतावन्मात्रजन्यज्ञाने च न तद्वैजात्यमिति नातिप्रसंगः। तथा च विजातीयशाब्दबोधजनकत्वं न्यायपदशक्यतावच्छेदकं- एवं पर्वतोवन्हिमानिति वाक्यनिष्ठं यद्विजातीयशाब्दबोधजनकत्वं तदेव प्रतिज्ञापदशक्यतावच्छेदकमित्याशयः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



७१ केचित्तु यदि चानुगतकारणमन्तरेणापि तादृशजातिमत्त्वसंभवस्तदा-कदाचित्प्रतिज्ञाजन्येऽपि हेत्वादिजन्यवृत्तिर्हेत्वादिजन्ये प्रतिज्ञादिजन्यवृत्तिर्जातिः स्यादिति संकर एवेत्यर्थः। एवं सर्वेषां सर्वजातीयत्वमेकजातीयत्वं वा स्यादित्यपि द्रष्टव्यमित्याहुः। ४३

सुतरां मानाभावइति। प्रतिज्ञाहेत्वादिनानावयवजन्यबोधनिष्ठप्रतिज्ञा-जन्यतावच्छेदकजातेर्हेत्वादिजन्यतावच्छेदकतया हेत्वादावपि प्रतिज्ञा-लक्षणाऽतिव्याप्त्या तादृशजातिघटितलक्षणकरणाऽसंभवेन तादृशजातौ लक्षणानुरोधरूपयुक्त्यनवकाशात्। एकैकावयवजन्यबोधवृत्तिजातीरुपादाय स्वरूपयोग्यताघटितलक्षणस्य निर्दोषत्वेपि उभयादिजन्यबोधे-तत्तज्जात्यभावनिर्वाहकप्रतिबध्यप्रतिबन्धकभावकल्पने महागौरवात्। तत्त-ज्जात्यवच्छिन्नजनकतावच्छेदकत्वेनाऽभिमतानां गुरुशरीराणामपि यथो-क्तधर्माणां प्रतिज्ञादिपदप्रवृत्तिनिमित्तौचित्येन तत्तज्जातिकल्पने प्रवृत्ति-निमित्तलाघवरूपाया युक्तेरप्यनवकाशादिति भावः। अननुगमेन तत्तज्जा-तिघटितलक्षणाऽसंभवाल्लक्षणाऽनुपपत्तिरूपयुक्तेः सुदूरपराहतत्वादिति भाववर्णनमनुपादेयम्। एकैकजन्यबोधवृत्तिजातिमादायैव स्वरूपयो-ग्यताघटितलक्षणसंभवात्।

अन्यथेत्यादिमूलमन्यथा व्याचक्षाणानां मतमाह। केचित्त्विति। तदेत्यन्तमन्यथेत्यस्यार्थः। कदाचिदिति। हेत्वादिजन्ये इत्यत्राप्यनुषज्यते।

---

अत्र प्रतिज्ञादिपदप्रतिपाद्यानां पर्वतोवन्हिमानित्यादिवाक्यानां तत्तद्व्यक्ति-त्वेन कारणत्वे चालिनीयन्यायेन व्यभिचारात्, अनुगताऽनतिप्रसक्तरूपस्य च दुर्लभतया विजातीयशाब्दबोधजनकत्वस्याऽसंभाविततया वैजात्यस्याप्यसिद्धेः, तद्घटितलक्षणस्याऽसंभव इत्याशयेन दूषयति। मूले। ज्ञानविशेषेति। अनतिप्रसक्तम्। उदासीनवाक्यव्यावृत्तम्। अनुगतम्। सकलन्यायसाधार-णम्। अवच्छेदकनियतत्वादिति। तथा च किंचिद्धर्मावच्छिन्नकारणतानिरू-पितकार्यतावच्छेदकतयैव वैजात्यसिद्धेर्वक्तव्यतया कारणतावच्छेदकत्वस्य दुर्नि-रूपत्वे वैजात्यसिद्धेरसंभवेन लक्षणमसंभवग्रस्तमिति भावः। ननु पर्वतोवन्हिमा-निति वाक्यनिष्ठानुपूर्वीमत्वस्यैवाऽनुगताननतिप्रसक्तस्य सत्वेन तेन रूपेण विजा-तीयशाब्दं प्रति जनकतासंभवात्तथाविधजनकत्वं न्यायादिपदशक्यतावच्छेदकं भविष्यतीत्यत आह। मूले-तत्स्वीकारे इति। तस्यैव तादृशानुपूर्वीमत्वस्यैव। एकारेण वैजात्यघटितस्य व्यवच्छेदः। लक्षणान्तरेति। उभयोरपि लक्षणत्व-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तेन परस्परव्यभिचारितालाभः। स्यादिति। वर्त्तेत इत्यर्थः। नियामकाभावादिति भावः। ननु नियमेन सर्वत्रैव प्रतिज्ञादिजन्यबोधे हेत्वादिजन्यवृत्तिजातिमत्वसंभवेन परस्परव्यभिचारिताया दुर्घटत्वान्न संकरावकाश इत्यतोबाधकान्तरं पूरयति। सर्वेषामिति। सर्वत्र सर्वजातिसत्वे जातीनां समनैयत्याद् भेद एव दुर्लभ इति सर्वजातीयत्वप्रसंगोऽसंगत इत्यत आह। एकेति। इत्थं च विजातीयशाब्दबोधजनकत्वघटितं प्रतिज्ञालक्षणमसंभवदुक्तिकमेवेतिभावः। अत्र चाऽनुगतकारणाऽभावेऽपि अननुगतकारणघटितसामग्रीणां जातिविशेषनियामकत्वं न संभवतीति नोक्तरीत्या जातिसंकराद्यवकाशः। अन्यथाऽनुमितित्वादिजातेरपि अनियमेन प्रत्यक्षादिसाधारण्यापत्तेः। तत्रापि वन्हिव्याप्यवत्तापरामर्शादीनामननुगतत्वात्। अनुगतस्य कस्यचित्कारणस्य संभवेऽपि तस्याऽतिप्रसक्तत्वात्तादृशस्य प्रकृतेऽपि संभवाच्च। न च व्यभिचारेणतादृशजात्यवच्छिन्नशाब्दबोधं प्रति अनुगतस्य कारणत्वाऽसंभवात्तादृशजातीनां कारणनियम्यत्वं न संभवतीत्येकस्यान्यजातीयताप्रसंगो-

---

सम्भवादिति भावः। तादृशधर्मस्यैवेति। तादृशानुपूर्वीमत्वस्यैवेत्यर्थः। न्यायादीति। लाघवादित्यादिः। तत्प्रवृत्ति इति। न्यायादिप्रवृत्तीत्यर्थः। ज्ञाननिष्ठेति। शाब्दबोधनिष्ठेत्यर्थः। एवं च विजातीयबोधजनकत्वस्य तथात्वं नोपगम्यते इति तद्घटकतया वैजात्यसिद्धयोसंभव इति भावः। ननु प्रतिज्ञादौ विजातीयबोधजनकत्वाऽनुपूर्वीरूपधर्मयोरुभयोरपि विनिगमनाविरहेण शक्यतावच्छेदकताया आवश्यकत्तया वैजात्यसिद्धिर्दुर्वारैवेत्याशंक्य तत्स्वीकारे बाधकमाह। मूले—अन्यथेति। ननु वैजात्यस्य नानात्वस्वीकारान्न संकरावकाश इतिचेन्न। तथासति प्रतिज्ञाहेतूभयजन्यबोधे प्रतिज्ञाजन्यतावच्छेदकवैजात्यस्वीकारापत्तेः। अन्यथा प्रतिबन्धकताकल्पनारूपमहागौरवापातात्। तथा च तदवच्छिन्नबोधजनकत्वस्य हेतावतिप्रसक्तेः। एतद्भयेन गुरुभूतमपि प्रतिबन्धकत्वमुपगम्य तत्र वैजात्यानुपगमे तत्प्रतिज्ञायामव्याप्तिः। न च तादृशबोधे तादृशवैजात्यानुपगमेपि न क्षतिः, विजातीयबोधजनकत्वरूपलक्षणे जनकत्वं न फलोपधानं अपि तु स्वरूपयोग्यतेति केवलप्रतिज्ञाव्यक्त्यन्तरजन्यबोधं प्रति तत्तत्प्रतिज्ञाव्यक्तेः फलोपहितत्वाभावेपि स्वरूपयोग्यतासद्भावेन लक्षणसमन्वयादिति वाच्यम्। स्वरूपयोग्यता हि तादृशवैजात्यावच्छिन्नबोधजनकतावच्छेदकधर्मवत्वम्, एवं च कारणतावच्छेदकत्वेनाऽभिमतस्य धर्मस्यैव लाघवेन लक्षणत्वस्य प्रतिज्ञापदशक्यतावच्छेदकत्वस्य च संभवादुक्तवैजात्यावच्छिन्नबोधजनकतावच्छेदकधर्मवत्वस्य गुरुतया



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दुर्वार इति वाच्यम् । अनुमितौ परामर्शस्येव प्रकृते ऽनुगतकारणस्य कार्यतावच्छेदकसंकोचेन व्यभिचारवारणसंभवादित्यस्वरसबीजम-वधेयम् ।

न चानुगतनियामकाभावस्याकिञ्चित्करत्वे,ऽ "नुगताऽनतिप्रसक्त-रूपमन्तरेण दुर्निरूपमिति" मूलाऽसंगतिरिति वाच्यम् । स्वमतेऽनुगत-नियामकाभावे न निर्भरः । अपि तु न्यायजन्यबोधादौ संकररूपबाधक-एवेति वक्तुं शक्यतया तादृशबाधकस्य विचाराऽसहत्वेपि क्षत्यभावात् । इदं पुनरिहावधेयम् । प्रतिज्ञाद्यवयववाक्यादित्यादिमूलं न जाति विशेषघटितप्रतिज्ञादिलक्षणाभिप्रायकम् । तथासति तादृशप्रतिज्ञादि-लक्षणस्याऽत्रैव निराकृतत्वेन प्रतिज्ञादिग्रन्थे प्रतिज्ञाजन्यं विजातीयं ज्ञानमित्यादिना जातिघटितप्रतिज्ञालक्षणमाशंक्यानेनैव दोषेण तन्निराक-रणस्य पौनरुक्त्यापत्तेः, किं तु अवयवसामान्यलक्षणपरम् । प्रत्येकमित्य-स्याऽवयवान्तराऽसहकारेणेत्यर्थः । तेन न्यायजन्यबोधतो वाक्यैकवाक्य-ताधीनप्रतिज्ञाहेत्वादिजन्यबोधतश्च वैलक्षण्यलाभेन तदात्मकसमुदायेऽति-व्याप्तिशंकानिरासः । विजातीयत्वं च प्रतिज्ञाद्येकदेशजन्यबोधावृत्ति-जातिमत्वम् । एतेनावयवैकदेशेऽतिव्याप्तिशंकानिरासः । मूले तज्जनक-शब्दत्वं तल्लक्षणमिति पाठः । तल्लक्षणमित्यस्यान्वयवलक्षणमित्यर्थः । एवंचाऽन्यथेत्यादिमूलस्य प्रतिज्ञाहेत्वादिजन्यतावच्छेदकजातीनां परस्प-रसंकरपरत्व न घटतेइति । यदि लक्षणानुरोधमात्रेण जाति-स्वीकारस्तदा तत्साध्यपक्षहेतुकन्यायादिलक्षणानुरोधेनापि विभिन्नसा-ध्यादिकन्यायजन्यबोधेषु विभिन्नानां प्रतिज्ञाद्येकदेशजन्यबोधावृ-त्तिजातीनां स्वीकरणीयतया तासां च तथाविधद्वित्रादिन्यायजन्यबोधे समावेशेन संकीर्णजातेस्वीकारप्रसंग इति तादृशमूलार्थः ।

---

लक्षणत्वस्य शक्यतावच्छेदकत्वस्य वाऽसंभवात्तद्घटकतया वैजात्यसिद्धेरभावा-न्न वैजात्यस्य नानात्वस्वीकारः समुचित इति भावः । कारणतावच्छेदकस्य दुर्नि-रूपत्वेपि जातिसिद्धिस्वीकारे बाधकमाह । अन्यथेति । एतदेव दीधितिकृता के-चित्तु इत्यादिना वक्ष्यते । युक्त्यन्तरस्येति । प्रवृत्तिनिमित्तानुपपत्तिभिन्न-युक्तेः । मानाभावरूपयुक्त्यभाव इत्याह । प्रतिज्ञेति ।

अन्यथा व्याचक्षाणानामिति । पूर्वं तु प्रतिज्ञाजन्यतावच्छेदकजाति-स्वीकारे संकीर्णजातिस्वीकारप्रसंग इति अन्यथेति मूलस्यार्थो वर्णितः । इदानीं नियामकाभावेपि जातिस्वीकारे इति तदर्थो बोध्यः । अन्यथा ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



71 तत्र प्रतिज्ञा न साध्यनिर्देशः साध्यपदेऽतिव्याप्तेः ।

80 साध्यनिर्देशः प्रतिज्ञेति सूत्रम् । साध्यो विधेयधर्मविशिष्टोधर्मी । 84

यदि च संकररूपबाधकभयेन जातिकल्पनाऽसंभवाज्जातिघटितन्यायलक्षणाऽसंभवादन्यथैव तत्पक्षसाध्यहेतुकन्यायादयो निर्वचनीया इत्युच्यते तदा व्याप्त्यादिपदवन्न्यायादिपदस्यापि नानार्थत्वे क्षतिविरहात्सर्वसाधारणन्यायत्वादिनिर्वचनानुरोधेन जातिस्वीकारोप्यनुचित इतिभावः ।

दीधितिकारस्तु तत्तद्धीजनकवाक्यत्वं तत्तल्लक्षणमितिमूलपाठाभिप्रायेण प्रतिज्ञाहेत्वादिजन्यतावच्छेदकजातीनां न्यायजन्यबोधादौ संकरपरतया जातिसंकरप्रसंग इति मूलं व्याख्यातवान् । तादृशपाठे तद्ग्रन्थस्यावयवसामान्यलक्षणपरत्वानुपपत्तेः ।

एवं च सति अगत्याऽभिन्नप्रस्तावे जातिघटितप्रतिज्ञालक्षणं विस्मृत्य प्रतिज्ञाग्रन्थे पुनस्तदाशंकेति यथाकथंचिदग्रिमग्रन्थावतारोबोध्यः ।

इतिगादाधर्यामवयवलक्षणम् ।

साध्यपदमनुमितिविधेयवाचकमित्यभिप्रायेण मणिकारदूषितं सूत्रकारीयप्रतिज्ञालक्षणं साध्यपदस्य प्रकृतानुमितिविधेयविशिष्टार्थपरतां

---

सामग्या अनियामकत्वे । तत्रापि । अनुमितावपि । तस्य । कारणस्य । तादृशस्य । अतिप्रसक्तकारणस्य । कार्यतावच्छेदसंकोचेनेति । कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वादिनिवेशेनेत्यर्थः ।

सामग्या नियामकत्वे शंकते । नचेति । अकिञ्चित्करत्वे । अनियामकत्वे । सामग्र्या नियामकत्वे इति यावन्त् । तादृशेति । अनुगतनियामकाभावरूपेत्यर्थः । प्रतिज्ञाद्यवयववाक्यादित्यादीति । प्रतिज्ञाद्यवयववाक्यादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति मलवाक्यादित्यर्थः । तेन । अवयवाऽसहकारेणेत्यर्थकरणेन । तदात्मकसमुदाये । न्याये—प्रतिज्ञाहेतुसमुदाये च । एतेन एकदेशजन्यबोधावृत्तित्वकथनेन ।

एवं च सति । विशेषलक्षणपरत्वे । विस्मृत्येति । विजातीयबोधजनकत्वमितिलक्षणं विस्मृत्येत्यर्थः । प्रतिज्ञाग्रन्थे प्रतिज्ञाजन्यं विजातीयं ज्ञानमित्यग्रिमग्रन्थे । पुनस्तदाशंकेति । जातिघटितलक्षणाशंकेत्यर्थः ।

इति विलासिन्यामवयवलक्षणम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



83 तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे साध्यतावच्छेदकवन्हित्वविशिष्ट-वैशिष्ट्यज्ञानजनको न्यायावयव इति पर्यवसितार्थः । 85

स्वीकृत्य परिष्कर्तुमारभते । सामान्यतो विधेयत्वस्य धर्मित्वस्य च केवला-न्वयितयाऽवयवान्तरे विधेयविशिष्टधर्मिबोधकत्वमतिप्रसक्तम् । एवं प्रतिज्ञासमानाकारन्यायबहिर्भूतवाक्येपीत्यतः साध्यपदस्य तद्विशेषप-रत्वं निर्देशपदस्य च बोधजनकन्यायावयवरूपवाक्यविशेषपरत्वमनुसृत्य पर्यवसितार्थमाह । तथा चेति । पक्षतावच्छेदकसाध्यतावच्छेदकयो-र्न तत्त्वेन निवेशः, अपितु विशिष्यैवेति सूचनाय पर्वतत्वादीति वन्हि-त्वादीति च । तादृशविशिष्टवैशिष्ट्यावगाहिशाब्दत्वावच्छिन्नजनकय-त्किंचिद्ज्ञानीयवर्णसमुदायत्वमिह विवक्षणीयम्, अतो हेत्वर्थादिविषयक-प्रतिज्ञार्थबोधजनकताया हेत्ववयवादिमात्रविषयकबोधसाधारण्येपि न हेत्ववयवादावतिव्याप्तिः । न्यायान्तर्गतत्वमुपेक्ष्य न्यायावयवत्वप्रवे-शात्प्रतिज्ञार्थबोधजनकप्रतिज्ञाहेत्वादिविषयकज्ञानमादाय प्रतिज्ञाहेत्वादि-समुदाये नातिव्याप्तिः ।

---

मूले तत्र । निरूपणे । विषयत्वं सप्तम्यर्थः तथा च निरूपणविषयीभूता प्रतिज्ञेत्यर्थः । साध्यं निर्दिश्यते अनेनेति व्युत्पत्या साध्यप्रतिपादकशब्द इत्यर्थः । **साध्यपदेऽतिव्याप्तेरिति** । तस्यापि साध्यप्रति-पादकत्वादिति भावः । **अवयवान्तरे** । धूमादिहेत्ववयवादौ । **अतिप्रसक्तमिति** तस्यापि हेतुत्वोद्देश्यकाधेयतासम्बन्धेन हेतुविधेयकबोधजनकत्वात् । **तद्विशे-षपरत्वं** । साध्यवत्पक्षपरत्वम् । तस्य च बोधेऽन्वयः । तथा च साध्यवत्पक्ष-विषयकबोधजनकत्वे सति न्यायावयवत्वमिति निष्कर्षः । **न तत्वेनेति** । न पक्षतावच्छेदकसाध्यतावच्छेदकत्वेनेत्यर्थः । तथासति पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिबोधजनकत्वं लक्षणार्थः, तच्च हेत्वादौ अवयवान्तरेऽतिव्याप्तम्, पक्षतावच्छेदकत्वादेः केवलान्वयित्वात् अतो विशिष्यैव तयोर्निवेश इति भावः । **विवक्षणीयमिति** । तथा च न्यायावयवत्वे सति पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशा-लिशाब्दत्वावच्छिन्नजन्यतानिरूपितजनतावद्यत्किंचिद्ज्ञानीयविषयताश्रयवर्णसमु-दायत्वं विवक्षणीयमित्यर्थः । **अतः** । तादृशशाब्दत्वावच्छिन्नजन्यतानिवेशात् । नन्वेवमेकदेशार्थविषयकबुद्धित्वावच्छिन्नजन्यतावारणेन एकदेशवारणसंभ-वान्न्यायान्तर्गतत्वमेव निवेश्यतामित्यत आह **न्यायान्तर्गत्वमुपेक्ष्येति** । **नाति-व्याप्तिरिति** प्रतिज्ञाहेतुसमुदायस्य न्यायान्तर्गतत्वेपि न्यायाऽवयवत्वाभावादिति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



८५ उदाहरणाच्च पक्षतावच्छेदकविशिष्टे न साध्यवैशिष्ट्यज्ञानम् । ८९

पक्षतावच्छेदकविशिष्टत्वनिवेशप्रयोजनमाह । यद्यपि उदाहरणाच्चेति । साध्यतावच्छेदकविशिष्टवैशिष्ट्यमात्रनिवेशे उपनयनिगमनयोरप्यतिव्याप्तिः । तथापि यत्किंचिद्धर्मविशिष्टे शुद्धसाध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानजनकत्वनिवेशने न तत्रातिप्रसंगः । उपनयजन्यबोधे उपनयार्थव्याप्तिशरीरघटकसाध्यस्य धर्मितावच्छेदकाप्रवेशात् । निगमनजन्यबोधे च साध्यांशे हेतुज्ञानज्ञाप्यत्वस्याधिकस्य भानात् । अन्यथा पक्षतावच्छेदकान्तर्भावेपि अनुषंगपक्षेऽनिस्तारादित्युदाहरणमात्रानुसरणम् । तदप्युदाहरणजन्यबोधे व्यापकत्वं न विधेयतावच्छेदकघटकतया भासते इतिप्राचीनमतमनुसृत्य ।

---

भावः । न च न्यायान्तर्गतत्वे सति तादृशशाब्दबोधत्वावच्छिन्नजन्यतानिरूपितजनकताच्छेदकत्वस्य यत्किंचिद्ज्ञानीयविषयतायां निवेशेनैव प्रतिज्ञाहेत्वादिविषयकसमूहालंबनबोधमादाय तादृशसमुदायेऽतिव्याप्तिवारणसंभवे न्यायावयवत्वनिवेशे गौरवमिति वाच्यम् । तादृशसमुदायत्वस्यापि तादृशजनकतावच्छेदकविषयताश्रयप्रतिज्ञाघटकवर्णसमुदायवृत्तित्वेनोक्तातिव्याप्तितादवस्थ्यात्, तद्वारणाय तादृशवर्णत्वसमनियतसमुदायत्वनिवेशे तु लाघवानवकाशादिति ध्येयम् । पर्वतो वन्हिमानित्याद्येकैकप्रतिज्ञाया अपि न तादृशजनकज्ञानविषयवर्णत्वव्यापकसमुदायत्ववत्वं, तादृशवर्णत्वस्य तज्जातीयप्रतिज्ञान्तरेपि सत्वात्प्रत्येकं प्रतिज्ञाव्यवहारोऽनुपपन्नोऽतो यत्किंचित्त्वनिवेशः ।

अत्रेदंबोध्यम् तादृशविशिष्टवैशिष्ट्यावगाहिशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतयत्किंचिद्ज्ञानीयविषयितानिरूपकवर्णत्वव्यापकसमुदायत्वं प्रतिज्ञात्वम् । अन्यथा प्रतिज्ञैकदेशवृत्तिसमुदायत्वस्यापि तादृशयत्किंचिद्ज्ञानीयविषयितानिरूपकवर्णत्वसमानाधिकरणतया तादृशसमुदायत्वमादाय प्रतिज्ञैकदेशेऽतिव्याप्तेः, न्यायावयवत्वशरीरे प्रतिज्ञाद्यघटकत्वविशेषणं प्रक्षिप्य एकदेशाऽतिव्याप्तिवारणे गौरवात्, अतएवोत्तरग्रन्थे एतल्लक्षणे एव न्यायावयवत्वशरीरेप्रतिज्ञाद्यघटकत्वं न निविष्टं किन्तूभयघटकभागद्वयाऽघटितत्वमात्रमेवेति वक्ष्यति । अत्र कल्पे तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वं न निवेशनीयम् अधिकदेशवृत्तिसमुदायत्वस्यापि उभयघटकभागद्वयाऽघटितत्वरूपन्यायावयवत्वनिवेशेनैव वारणात् अत्र उभयघटकभागद्वयाघटितत्वन्तु प्रतिज्ञाहेतुएतदुभयघटकभागद्वयाऽघटितत्वमेव, अन्यस्य निवेशे प्रयोजनाभावात् । तदपि प्रतिज्ञाघटकप्रतिज्ञान्यघटकएतदुभयाऽवृत्ति-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



धर्मवत्त्वम्, अधिकदेशवृत्तिसमुदायत्वस्य प्रतिज्ञाघटकप्रतिज्ञान्यघटकएतदुभयवृत्तित्वादिति। **उदाहरणाच्चेतीति** उदाहरणस्थयत्तत्पदेन महानसत्वमहानसान्यत्वेन पक्षस्यापि बोधनात्पक्षतावच्छेदकांशनिवेशस्यापि व्यावृत्तिर्बोध्या **मात्रस्यैव निवेशे इति** । मात्रपदेन पक्षतावच्छेदकविशिष्टे ति समुदायस्यैव व्यवच्छेदः। **उपनयनिगमनयोरप्यतिव्याप्तिरिति**। तयोरपि साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधजनकत्वादिति भावः। **तथापीति**। तथा च यत्किंचिद्धर्मविशिष्टे शुद्धसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिबोधजनको न्यायावयवः प्रतिज्ञेति फलितम्। यत्किंचिद्धर्मविशिष्टे इति कथनादुपनये नातिव्याप्तिसंभव इत्याह। **उपनयजन्यबोधे इति**। **धर्मितावच्छेदकाऽप्रवेशादिति**। हेतुव्यापकसाध्यसामानाधिकरण्यमित्यत्र साध्याधिकरणत्वेन साध्येनैव वाऽधिकरणस्य भानात्। ननु उपनयेऽतिव्याप्तिः शुद्धसाध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधजनकत्वमात्रनिवेशादेव वारणीया, उपनयघटकसाध्यांशेऽपि व्यापकत्वस्याऽधिकस्य भानात् किं **यत्किंचिद्धर्मविशिष्टे** इत्यनेन। न च साध्यवदन्यावृत्तित्वरूपव्याप्तिविशिष्टहेतुमत्ताबोधकोपनयेऽतिव्याप्ति; तादृशोपनयजन्यबोधे साध्यतावच्छेदकनिष्ठनिरवच्छिन्नावच्छेदताकप्रकारताकत्वसत्त्वादतो यत्किंचिद्धर्मविशिष्टे इत्युक्तमिति वाच्यम्। उदाहरणवाक्याद्यादृशव्याप्तिभानं तादृशव्याप्तिविशिष्टस्यैव पक्षसत्वाऽऽकांक्षया उपनयप्रयोगात्, अन्वय्युदाहरणतो व्यतिरेक्युदाहरणतश्च साध्यवदन्यावृत्तित्वरूपव्याप्तेरनवगमात्। "तादृशव्याप्तेः वन्हिमानेव धूमवानितिवाक्यताऽवगमात्" तद्विशिष्टहेतुमत्ताबोधकोपनयवाक्याऽसंभवादिति चेन्न। शुद्धसाध्यतावच्छेदकावच्छिन्नप्रकारकबोधजनकत्वनिवेशे पर्वतो वन्हिमान्धूमादित्यत्र योयो न वन्हिमान् सस न धूमवानितिव्यतिरेक्युदाहरणघटितन्यायान्तर्गतवन्हिमद्भेदव्यापकीभूतभेदप्रतियोगितावच्छेदकधूमवानित्युपनये शुद्धसाध्यतावच्छेदकावच्छिन्नप्रकारकबोधजनकेऽतिव्याप्तिवारणाय यत्किंचिद्धर्मविशिष्टे इत्युक्तमिति ध्येयम्।

शुद्धत्वनिवेशान्निगमने नातिव्याप्तिः। अतिव्याप्त्यभावे हेतुमाह। **निगमनजन्यबोधेचेति**। **अधिकस्यभानादिति**। तथा च साध्यांशेऽन्याप्रकारकत्वरूपशुद्धत्वविरहेण शुद्धसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिबोधजनकत्वस्य निगमने विरहादिति भावः। अथैवं उपनये व्यापकताविशिष्टवन्हेर्भानाच्छुद्धसाध्यतावच्छेदकविशिष्टदलेनैव वारणात् यत्किंचिद्धर्मविशिष्टे इत्यस्य वैयर्थ्यं दुर्वारमेवेति चेन्न। शुद्धत्वं साध्यांशेऽन्याऽप्रकारकत्वमेवव्यापकसामानाधिकरण्यरूपव्याप्तिभाने साध्यतावच्छेदके व्यापकतावच्छेदकत्वं भासते

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



निगमनेऽयंपदाननुषंगपक्षे तु शुद्धसाध्यतावच्छेदकविशिष्टत्वं न निविष्टं, विशेषणान्तरावच्छिन्नवन्ह्यादिसाध्यकन्यायान्तर्गतप्रतिज्ञायां-शुद्धवन्हित्वावच्छिन्नसाध्यकप्रतिज्ञालक्षणाऽतिव्याप्तेः प्रकृतन्यायान्तर्गतत्वाभावेनैव वारणादित्यभिप्रायकमिदं, अतो व्यापकत्वस्याधिकस्योदाहरणजन्यबोधे भानेऽपि न क्षतिरिति केचित्। तन्मते निगमनोपेक्षाबीजं चिन्तनीयम्। यत्तत्पदस्योदाहरणस्थस्य न पक्षतावच्छेदकावच्छिन्नपरत्वम् अपि तु पक्षान्यसाध्यवत्साधारणरूपावच्छिन्नपरत्वमेव। पक्षतावच्छेदकावच्छिन्ने हेतुमत्त्वस्य ततो लाभे उपनयानुत्थानात्, तदवच्छिन्ने साध्यवत्वस्य च प्रतिज्ञात एव लाभेनाऽनाकांक्षितत्वाच्चेति पक्षतावच्छेदकप्रवेशो नोदाहरणाऽतिप्रसंगः।

---

ततो व्यापकतावच्छेदकत्वविशिष्टसाध्यतावच्छेदकविशिष्टवन्हेर्भानम्, न तु व्यापकताविशिष्टवन्हेरिति। तथा च शुद्धसाध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधजनकत्वस्यापनये सत्वादतिव्याप्तिवारणाय **यत्किंचिद्धर्मविशिष्टे** इत्युक्तम्। न च तथासति "व्यापकत्वं न विधेयतावच्छेदकघटकतया भासते इत्युत्तरग्रन्थाऽसंगतिः, तत्र विधेयतावच्छेदकघटकतया भानेऽपि न क्षतिः, साध्यतावच्छेदके एव व्यापकतावच्छेदकत्वावगाहितया तदीयसाध्यप्रकारतायां-साध्यतावच्छेदकातिरिक्तानवच्छिन्नत्वस्याऽक्षतत्वादिति वाच्यम्। तत्र व्यापकत्वं न विधेयतावच्छेदकतया साध्यांशे भासते इत्येव तदर्थत्वादिति ध्येयम्।

**अन्यथा।** निगमनजन्यबोधे धूमज्ञानव्याप्यत्वस्याऽधिकस्याऽभाने। **उदाहरणमात्रानुसरणमिति।** उदाहरणमात्रमादाय दूषणमित्यर्थः। **तदपि।** उदाहरणमात्रानुसरणमपि। **प्राचीनमतमनुसृत्येति।** अन्यथा। शुद्धत्वनिवेशेनैव वारणादितिभावः।

पक्षतावच्छेकावच्छिन्नेत्यस्याऽनिवेशे यत्किंचिद्धर्मावच्छिन्ने साध्यतावच्छेदकावच्छिन्नसाध्यावगाहित्वनिवेशे शुद्धत्वाऽनिवेशेऽपि निगमनेऽननुषङ्गपक्षे नातिव्याप्तिः, अत उदाहरणमात्रानुसरणमिति वदतां मतमाह। **अननुषङ्गपक्षेत्विति।** **न निविष्टमिति।** शुद्धत्वं न निविष्टमिति यावत्। **यत्किंचिद्धर्मावच्छिन्ने** इत्यनेनैवोपनयनिगमनयोर्वारणात्। शुद्धत्वाऽनिवेशे पर्वतःसुन्दरवन्हिमानिति वाक्येतिव्याप्तिमाशंक्य निराकरोति। **विशेषणान्तरावच्छिन्नेति** सुन्दरत्वावच्छिन्नेत्यर्थः **प्रकृतन्यायान्तर्गतत्वाभावेनैवेति।** एतन्मते तादृशशाब्दत्वावच्छिन्नजनकयत्किंचिद्ज्ञाने तादृशजनकताद्वयशून्यत्वं निवेशनीयम्, अन्यथा प्रतिज्ञाहेतुसमुदायादौ तादृशशाब्दबोधजनकयत्किंचिद्ज्ञानविषयवर्णसमु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अत्र च यत्किंचिद्धर्मावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहिशाब्दबुद्धित्वावच्छिन्नजनकत्वमुदाहरणैकदेशे स वन्हिमानित्यादिवाक्ये एव न तु तस्य न्यायावयवत्वं तच्च समुदाये एव न तत्र तादृशजनकत्वमिति विशिष्टपक्षतावच्छेदकानन्तर्भावेऽपि नोदाहरणेऽतिप्रसंग इति नाशंकनीयम् । जनकत्वस्य जनकयत्किंचिद्ज्ञानविषयवर्णसमुदायत्वरूपस्य विवक्षितत्वात्, उदाहरणसमुदायविषयकज्ञानविषयत्वमादाय उदाहरणसमुदायेऽतिप्रसक्तेः । एवमेतल्लक्षणप्रविष्टन्यायावयवत्वशरीरे प्रतिज्ञाहेत्वादिसमुदाये । ऽतिप्रसंगवारणायोभयघटकभागद्वयाऽघटित्वमेव निवेशनीयम्, न तु प्रतिज्ञाद्यघटकत्वमपि, प्रयोजनविरहात् ।

---

दायत्व, न्यायावयवत्वयोःसत्वेनाऽतिव्याप्तेः, पूर्वमतेतु न्यायावयवत्वाभावादेवनातिव्याप्तिरित्यवधेयम् । अतः । शुद्धत्वाऽनिवेशात् । नक्षतिःनातिव्याप्त्य संगतिः । केचिदित्यनेनसूचितमस्वरसं कथयति । तन्मते । अननुषंगपक्षे । अयंभावः । अननुषङ्गपक्षे केवलनिगमनान्न शाब्दबोधः, निर्धर्मितावच्छेदकशाब्दबोधानंगीकारात् । किन्तूपनयार्थेन सममेवेति निगमनेप्यतिव्याप्तिसंभवादुदाहरणमात्रानुसरणमसंगतमेव स्यादिति । श्री परमगुरुचरणास्तु अत्र पर्वतः सुन्दरवन्हिमान्धूमादित्यत्र योयो धूमवान् स सवन्हिमानित्यादि पञ्चवाक्यान्तर्गतप्रथमवाक्ये उदाहरणे चाऽतिव्याप्तिवारणार्थं शुद्धत्वादिकं निविष्टं । तत्र न्यायान्तर्गतप्रविष्टप्रतिज्ञाशरीरे पक्षतावच्छेदकविशिष्टे शुद्धसाध्यतावच्छेदकावच्छिन्नप्रकारकबोधजनकत्वनिवेशेनैव पूर्वोक्तपञ्चवाक्यान्तर्गतसुन्दरवन्हिमानिति प्रथमवाक्ये उदाहरणे चातिव्याप्तिवारणसंभवात्पक्षतावच्छेदकवैशिष्ट्येत्यादिकमफलमित्यस्वरसः केचिदित्युक्त्या सूचित इति पाठयामासुः । पक्षतावच्छेदकावच्छिन्नत्वनिवेशेऽप्युदाहरणे कथमतिव्याप्तिवारणमित्यत आह । यत्तत्पदस्येति । ततः । उदाहरणवाक्यात् । उपनयानुत्थानादिति । व्याप्यःपक्षेनवेत्याकांक्षाविरहादिति भावः । तदवच्छिन्ने । पक्षतावच्छेदकावच्छिन्ने । अनाकांक्षितत्वाच्चेति । को वन्हिमानित्याकांक्षाया असंभवादिति भावः । शब्दस्य जनकतामते पक्षतावच्छेदकप्रवेशवैयर्थ्यशंकते । अत्रचेति । तच्चयं न्यायावयवत्वं च एवकारेण एकदेशव्यावृत्तिः । तत्र समुदाये । नोदाहरणाऽतिप्रसंगइति । न च जनकतायाः प्रत्येकपर्यवसिततया तादृशजनकताश्रयवर्णत्वव्यापकसमुदायत्वं विवक्षणीयम, तथा चोदाहरणाऽतिव्याप्तिर्दुर्वारैव, स्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वस्य निवेशेन तद्वारणे तु उभयघटभागद्वयाऽघटितत्वस्य वैयर्थ्यापाता-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



85 उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति तयोर्व्युदासः ।91

उदाहरणैकदेशे तादृशवाक्येऽतिप्रसंगस्य लघुतरप्रकृतपक्षतावच्छेदकवैशिष्ट्यनिवेशेनैव वारयितुमुचितत्वात् । यद्यप्येवं नीलपर्वतोवन्हिमानित्यादि प्रतिज्ञैकदेशे पर्वतोवन्हिमानित्यादिभागेऽपि व्यावृत्तिः संभवति, तथापि सकलप्रतिज्ञैकदेशे न तथेति विशेषोपादाने प्रयासाधिक्येनोदाहरणानुधावनमिति ध्येयम् ।

साध्यतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशप्रयोजनमाह । उपनयाच्चेति । साध्यवैशिष्ट्यमात्रनिवेशेपि पर्वतो द्रव्यवान् धूमादित्यादि-

---

दितिवाच्यम् । उभयघटकेत्यादिविशेषणस्य त्याज्यत्वात् । अत एव सिद्धान्ते तन्निवेशयिष्यतीति । एतन्मते यत्किंचित्त्वं न निवेशनीयम् । ज्ञायमान शब्दस्य हेतुतयाऽ संभवानवकाशादिति ध्येयम् ।

ज्ञायमानशब्दहेतुतायाः अप्रामाणिकतेत्यभिप्रायेण समाधत्ते । **जनकत्वस्येति** । विवक्षितत्वादिति उदाहरणैकदेशेऽप्यतिव्याप्तिं दर्शयति । **एवमिति** । तथाच यत्किंचिद्धर्मावच्छिन्ने साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किंचिद्ज्ञानीयविषयितानिरूपकवर्णत्वव्यापकसमुदायत्वस्य विवक्षितत्वादित्यर्थः । **अतिप्रसक्तेरिति** । तद्वारणाय पक्षतावच्छेदकावच्छिन्नत्वनिवेश आवश्यक इति शेषः । ननु स वन्हिमानिति भागे प्रतिज्ञाद्यघटकत्वनिवेशेनाऽप्यतिव्याप्तिवारणासंभवात्पक्षतावच्छेदकनिवेशोऽव्यर्थइत्यतआह । **नन्विति** । एवं च गुरुतरप्रतिज्ञाद्यघटकत्वनिवेशोऽन्याय्य इति भावः ।

अथ न्यायान्तर्गतत्वे सति उभयघटकभागद्वयाऽघटितत्वरूपस्यैव न्यायावयवत्वस्य निवेशे रमाधवः पूज्यः सदाशिवो वन्द्य इति प्रतिज्ञैकदेशे माधवः पूज्यः, शिवोवन्द्यः इति भागेऽतिव्याप्तिः । न च तल्लक्ष्यमेवेति वाच्यम् । तस्य लक्ष्यत्वे तत्राऽवयवलक्षणलक्ष्यताया आवश्यकतयाऽवयवलक्षणाऽव्याप्तिः, रमाधवः पूज्य इत्यादिसमुदायत्वावच्छिन्नभेदस्य माधवः पूज्य इति भागे सत्वेन स्वस्मिन् स्वभेदाऽसत्वेन प्रतिज्ञाद्यन्यतमत्वरूपाऽवयत्वाभावात् । प्रतिज्ञाद्यघटकत्वघटिताऽवयवत्वाभावाच्च । तस्माद् यादृशानुपूर्वीविशिष्टवाक्ये न्यायावयवत्वव्यवहारस्तादृशन्यायावयवविशेष एव प्रतिज्ञेति वक्तव्यम् । एवं च रमाधवः पूज्य इति वाक्ये एव न्यायावयवत्वव्यवहारेण तस्यैव प्रतिज्ञात्वं न तु तदेकदेशस्येति तदेकदेशस्य प्रतिज्ञालक्ष-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्यायान्तर्गतोपनये तत्स्थलीयप्रतिज्ञालक्षणाऽतिव्याप्तिरिति साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वनिवेश इत्यवधेयम्

यथाश्रुतसत्यन्तार्थस्योदासीनवाक्यसाधारण्यमक्षतमेव, न्यायान्तर्गतवाक्यजन्यस्यैव तदनन्तर्गततादृशवाक्यजन्यस्यापि शाब्दबोधस्योपनायकज्ञानादिविधया परामर्शप्रयोजकत्वादतस्तदर्थमाह । प्रकृतन्यायावयवत्वेति । वन्हिव्याप्यधूमसाध्यकानुमितेरपि कदाचिदुद्देश्यतया

---

णाऽलक्ष्यतयाऽतिव्याप्तेः । न चाऽत्र प्रतिज्ञाद्यघटकत्वनिवेशान्नातिव्याप्तिरिति वाच्यम् । "न तु प्रतिज्ञाद्यघटकत्वमपी"ति सन्दर्भविरोधापत्तेः, स वन्हिमानितिभागस्य तत एव वारणे पक्षतावच्छेदकानुसरणवैयर्थ्यापत्तेश्चेतिचेन्न । ईदृशैकदेशेऽतिव्याप्तिवारणाय प्रतिज्ञामात्राऽघटकत्वमेव निवेश्यं नतूदाहरणाऽघटकत्वमपि, प्रयोजनाभावात् । नन्वेवं स वन्हिमानिति भागेऽतिव्याप्तिरित्यत आह । उदाहरणैकदेशे इति । ननु यदि प्रतिज्ञाद्यघटकत्वं न निवेश्यते तदा नीलपर्वतो वन्हिमानित्यादिस्थलीयप्रतिज्ञालक्षणस्य पर्वतोवन्हिमानिति तदेकदेशेऽतिव्याप्तिः । न च प्रतिज्ञामात्राऽघटकत्वमुक्तमेवेति वाच्यम् । यत्र भागद्वतोः समानार्थकतया पक्षतावच्छेदकानिवेशेऽपि नातिव्याप्तिर्वारयितुं शक्यते तत्रत्यप्रतिज्ञाविशेषे एव तदुपादानं न सर्वत्रेत्याशयेन शंकते । यद्यपीति । एवं । प्रतिज्ञाद्यघटकत्वनिवेशे । नन्वनुषङ्गपक्षे निगमनैकदेशेऽयं वन्हिमानिति भागेऽतिव्याप्तिः, अतः सर्वत्रैव प्रतिज्ञाद्यघटकत्वनिवेशनमावश्यकमिति चेन्न । पक्षविशेष्यकसाध्यप्रकारकबोधेऽयं वन्हिमानित्यानुपूर्वीप्रकारकज्ञानस्यैव हेतुतया निगमने तादृशानुपूर्व्या एवाऽभावेन नातिव्याप्तिरितिध्येयम् । व्यावृत्तिःसंभवतीति । पक्षतावच्छेदकविशिष्टेत्यस्येत्यादिः । विशेषोपादाने । प्रतिज्ञाविशेषोपादाने ।

न्यायान्तर्गतोपनये । द्रव्यव्याप्यधूमवानितिवाक्ये । अतिव्याप्तिरिति । द्रव्यव्याप्यधूमस्यापि द्रव्यत्वेन साध्यत्वादिति भावः ।

वक्ष्यमाणातिप्रसंगवारणाऽसंभवादिति । वन्हिसाध्यकोपनयेऽतिप्रसंगादित्यर्थः ।

प्रकृतन्यायावयवत्वे सति प्रकृतानुमित्यन्यूनाऽनतिरिक्तविषयक शाब्दबोधजनकवाक्यत्वं प्रतिज्ञात्वं पर्यवसितम् प्रतिज्ञाव्यवहारविषयतावारणायेति । पक्षविशेषाऽनियन्त्रितसामान्यतः प्रतिज्ञाव्यवहारविषयतावारणायेत्यर्थः । तथा च वन्हिसाध्यकोपनयस्य वन्हिव्याप्यसाध्यकप्रतिज्ञाभिन्नतया सामान्यतोपि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



४३ किन्तूद्देश्यानुमितिहेतुलिंगपरामर्शप्रयोजकवाक्यार्थज्ञान-जनकत्वे सति उद्देश्यानुमित्यन्यूनाऽनतिरिक्तविषयकशाब्दज्ञान-जनकवाक्यत्वम् । ।5।

४१ किन्त्वित्यादि । प्रकृतन्यायबहिर्भूतवाक्यवारणाय सत्यन्तम्, प्रकृतन्यायावयवत्वपर्यवसितम् । उद्देश्येति । प्रकृतेत्यर्थः ।

वन्हिसाध्यकोपनयस्य वन्हिव्याप्यधूमसाध्यकाऽनुमित्यन्यूनाऽनतिरिक्तविषयकशाब्दबोजनकस्य वारणाय प्रकृतद्वयं । तथा च यादृशपक्षसाध्यकन्यायावयवत्वं तादृशपक्षसाध्यकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञान-जनकत्वं पर्यवसितोर्थः ।95

वक्ष्यमाणाऽतिप्रसंगवारणाऽसंभवादुद्देश्यपदं प्रकृतार्थकतया व्याचष्टे । उद्देश्येतीति ।

वन्हिसाध्यकोपनयस्य । तत्साध्यकन्यायान्तर्गतोपनयस्य । एतेनाऽन्यसाध्यकन्यायमादाय सत्यन्तदलमाविष्कृतम् । वन्हिव्याप्य-धूमसाध्यकेत्यादिना विशेष्यदलसत्वं स्फुटीकृतम् । वारणाय । प्रतिज्ञाव्यवहारविषयतावारणाय । प्रकृतद्वयं । प्रतिज्ञापदार्थघटकन्या-यानुमित्योरेकसाध्यादिमत्वप्रापकं प्रकृतद्वयम् । प्रकृतन्यायावयवत्वपर्यन्ता-निवेशे वन्हिव्याप्यधूमसाध्यकप्रतिज्ञानुरोधेन तत्साध्यकानुमितेरपि प्रकृतपदेन विवक्षणीयतया तामादायोपदर्शितोपनये । प्रकृतानुमिति-पर्यन्ताऽनिवेशे वन्हिसाध्यकन्यायस्यापि प्रकृतन्यायेत्यनेन विवक्षणी-यतया तदवयवत्वमादाय तत्र प्रतिज्ञाव्यवहारस्य दुर्वारत्वादुभयत्र प्रकृतत्वनिवेशः । तथा च सति अभिन्नसाध्यपक्षकन्यायानुमित्यन्त-र्भावे यादृशो लक्षणार्थस्तं स्फुटयति । तथा चेति ।

---

प्रतिज्ञाव्यवहाराभावादिति भावः । एकसाध्यादिमत्त्वप्रापकमिति । यादृशता-दृशेत्यर्थकमित्यर्थः । दीधितिकारेण एकदैव प्रकृतपदद्वयप्रयोजनं दर्शितम्, यादृशेत्यस्य निष्कासनेऽन्यत्र तादृशेत्यस्यापि निष्कासनात् । स्वयं पृथक् पृथक् तयोःप्रयोजनमभिधाय उक्तार्थे एव पर्यवसानमाह । प्रकृत-न्यायाऽवयवत्वपर्यन्ताऽनिवेशे इति । केवलमनुमितिदर्शि दत्ते । प्रकृतानुमितिपर्यन्तानिवेशे । तथा च केवलं न्यायदर्शि निवेशे इत्यर्थः । नचैवं वन्हिसाध्यकोदाहरणेऽपि प्रकृतद्वयनिवेशव्यावृत्तिसंभवेन उपनयपर्यन्ता-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यत्तु तादृशोपनये वन्हिव्याप्यधूमसाध्यकप्रतिज्ञाव्यवहारवारणाय न्याये, वन्हिसाध्यकप्रतिज्ञाव्यवहारवारणाय चाऽनुमितौ प्रकृतत्व निवेशनमिति प्रकृतद्वयमित्यन्तार्थ इति । तच्चिन्त्यम् ।

तत्साध्यपक्षकप्रतिज्ञाव्यवहारविषयस्याऽत्र निर्वाच्यत्वे प्रतिज्ञापदार्थ-घटकन्यायाऽनुमित्योरुभयत्र समभिव्याहृतसाध्यपक्षान्वयनिवेशसूचनाय प्रकृतद्वयं, तत्साध्यपक्षकार्थमित्यस्यैवाऽभिधातुमुचिततया तदुपेक्ष्य प्रतिज्ञा-व्यवहारविषयतावच्छेदकीभूतैकधर्मशरीरे द्विधानिविष्टयोः साध्यपक्षयो-रभेदमात्रलाभाय तथा चेत्यभिधाने संदर्भविरोधात् । यादृशेत्यादेः स्वस्येत्यादिः । तादृशेत्यादेः स्वनिष्ठमित्यादिः पर्यवसितोर्थः ।

---

नुसरणं व्यर्थमिति वाच्यम् । साध्यनिवेशव्यावृत्तेरपि तत्रैव सुलभतया तदुपेक्ष्य तदनुसरणादिति ध्येयम् । **इदन्त्ववधातव्यम्** । साध्यादिभेदेन प्रतिज्ञालक्षणस्य भिन्नतया वन्हिव्याप्यधूमसाध्यकप्रतिज्ञालक्षणे न्यायानुमित्यो-रुभयत्र प्रकृतत्वनिवेशनेऽपि वन्हिसाध्यकप्रतिज्ञालक्षणेऽनुमित्यंशे प्रकृतत्व-निवेशनमेव सम्यक् न तु तत्रापि न्याये इति ध्येयम् ! **तत्र** । उपनये । **उभयत्र प्रकृतत्वनिवेश** इति । न्याये प्रकृतत्वानिवेशे अनुमितौ केवलं तन्निवेशे अनुमितिपदेन वन्हिव्याप्यसाध्यकानुमितिमादाय तत्समनियत-शाब्दबोधजनकत्वस्य पर्वतपक्षकवन्हिसाध्यकन्यायावयवत्वस्य च पर्वतो वन्हि-व्याप्यवानिति प्रतिज्ञायां सत्वात्, तस्याः पर्वतपक्षकवन्हिसाध्यकस्थलीयो-पनयत्वात्: । न्याये प्रकृतत्वनिवेशनायाह । **प्रकृतानुमितिपर्यन्तानिवेशे** इति । प्रकृतन्यायपदेन पर्वतपक्षकवन्हिसाध्यकन्यायमादाय तदवयवत्वस्य-अनुमिति-सामान्यान्तर्गतवन्हिव्याप्यसाध्कानुमितिसमनियतबोधजनकत्वस्य च सत्वात्तथैवा-ऽतिव्याप्तिरिति भावः ।

प्रतिज्ञासामान्यलक्षणाऽभिप्रायेण दीधितिं व्याख्यातवान्, ये तु प्रतिज्ञाविशेषलक्षणाभिप्रायकतया दीधितिं लापयन्ति तन्मतमुत्थापयति । **यत्त्विति** । **तादृशोपनये** । वन्हिसाध्यकोपनये । **समभिव्याहृतेति** । समभि-व्याहृतस्योपस्थाप्येत्यर्थः । **स्वं**-प्रकृतपदद्वयम् । तथा च पर्वतपक्षकवन्हिसाध्य-कस्थले पर्वतोवन्हिमानिति वाक्यं प्रतिज्ञेति "भवत्संमते" व्यवहारेऽ नुमित्य-न्यूनाऽनतिरिक्तविषयकशाब्दज्ञानजनकत्वे सति न्यायावयवत्व"रूपप्रतिज्ञा-पदार्थ"घटकयोर्न्यायानुमित्योः पर्वतपक्षकत्ववन्हिसाध्यकत्वयोरन्वयान्न तादृशोपनये उक्तप्रतिज्ञाद्वयव्यवहार इति भावः । **इत्यस्यैवाऽभिधातु-मुचिततयेति** । एवकारेणाऽभेदमात्रार्थकत्वव्यवच्छेदः । अनुमितौ न्याये

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रतिज्ञापदप्रतिपाद्यतावच्छेदकतया मूलाभिप्रायविषयः । एवं च सति प्रतिज्ञापदस्य नानार्थत्वं न दोषाय गत्यन्तरविरहादिति प्रागेवोक्तं ग्रन्थकृतैव । तत्साध्यतावच्छेदकावच्छिन्नसाध्यकत्वस्य न्यायाद्यंशेऽनिवेशने उक्तोपनये एवाऽतिप्रसंगः, यत्पक्षकाऽनुमितिसमानविषयकत्वं तत्पक्षकन्यायान्तर्गतत्वस्याऽक्षतत्वादिति तन्निवेशनम् । द्रव्याव्याप्यधूमवानित्याकारकद्रव्यत्वावच्छिन्नसाध्यकोपनयवारणाय साध्यतावच्छेदकनिवेशनम् । एतल्लक्षणघटकन्यायावयवत्वशरीरे उदाहरणाद्यघटकत्वनिवेशस्य सिषाधयिषाधीनन्यायप्रयोगानंगीकारपक्षे प्रयोजनान्तरविरहात् । प्रतिज्ञाऽघटकत्वमात्रस्य तदेकदेशवारणाय निवेशनीयतया वह्न्यादिसाध्यकन्यायान्तर्गतस्य यत्किंचिद्धर्मिकवन्ह्यादिसाध्यकानुमित्यन्यूनाऽनतिरिक्तविषयकबोधजनकस्य स वन्हिमानित्युदाहरणैकदेशस्य वारणायैकधर्मावच्छिन्नपक्षकत्वनिवेशनम् ।

वस्तुतोऽनुमित्यन्यूनाऽनतिरिक्तविषयकत्वं प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वे सति तादृशवैशिष्ट्यविषयताविलक्षणविषयताशून्यत्वरूपमनुमितिमनन्तर्भाव्यैवाऽग्रे निवचनीयम् । तत्र प्रकृतपक्षादिनिवेशव्यावृत्तिरग्रे प्रदर्शनीया, किं व्यावृत्तिस्थलान्तरानुसरणेनेति । यत्तु

---

प्रकृतपदयोस्तत्साध्यपक्षकत्वनिवेशार्थकत्वं तत एवोपनये तत्स्थलीयप्रतिज्ञाव्यवहारवारणसंभवात् । यादृशपक्षकेत्यादिना सामान्यरूपेणाऽनुमितिन्यायघटकशाब्दबोधविषयसाध्यादीनामैक्यविवक्षाया निर्बीजत्वापत्तेरितिभावः । नन्वेवमुक्तोपनयेऽतिव्याप्तिर्दुर्वारैव, सति सप्तम्यभावेन पूर्वदलस्य यत्र कुत्रचित्सत्त्वे तत्रोत्तरदलस्य सत्वात्' । यत्र कुत्रचिदुत्तरदलसत्वे पूर्वदलसत्वं चेत्यतः **स्वस्येति** । **स्वनिष्ठमिति च पूरितम्** । **स्वं**-प्रतिज्ञात्वेनाभिमतम् । **उक्तोपनये** । वन्हिसाध्यकोपनये । यादृशसाध्यकत्वस्य न्यायांशेऽनिवेशेऽनुमितावपितादृशसाध्यकत्वं नास्त्येव एकदैव तस्य निवेशात्, तथाच यादृशलक्षणमवशिष्टंतादृशलक्षणमुपनयवाक्ये उपपादयति । **यत्पक्षकेति** । **अनुमितिसमानविषयकत्वमिति** । अनुमितिसमानविषयकशाब्दजनकज्ञानविषयत्वमित्यर्थः । तेनानुमितिसमानविषयकत्वस्य "शाब्दे एव सत्वेन" उपनयवाक्ये विरहेपि न क्षतिः । **उपनयवारणायेति** । द्रव्यव्याप्यधूमोपि द्रव्यत्वेन साध्य इति भावः । एकधर्मावच्छिन्नपक्षकत्वनिवेशस्य व्यावृत्तिं वक्तुमुपक्रमते । **एतदिति** । **अनंगीकारपक्षे इति** । अंगीकारे तु यो धूमवान् स वन्हिमान् यथा पर्वत इत्युदाहरणसंभवेन स वन्हिमानिति भागस्यापि पक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यप्रकारकबोधजनकत्वसत्वेन एकधर्मावच्छिन्नपक्षकत्वनिवेशेऽपि अतिव्याप्तिवारणायोदाहरणाऽघट-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षविशेषमनन्तर्भाव्याऽनतिप्रसक्तस्य न्यायत्वस्य दुर्निर्वचतया पक्षनिवेशनमिति। तदसत्। तथा सति हेतुविशेषमनन्तर्भाव्यापि तस्य दुर्वचतया तादृशहेतुकेत्यस्यापि वक्तुमुचितत्वात्। यदि च न्यायपदादेव हेतुविशेषनियन्त्रितन्यायलाभ इति न तदभिहितमित्युच्यते तदा पक्षप्रवेशस्याऽऽवश्यकत्वेऽपि न्यायपदादेव पक्षविशेषनियन्त्रितन्यायलाभ इति तादृशपक्षकेत्यभिधानस्याऽनुपयुक्ततेति।

हेतोर्वारणायेति। अनतिरिक्तविषयकत्वं पक्षतावच्छेदकविशिष्टपक्षे यत्साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयत्वं तद्भिलक्षणविषयताशून्यत्वम्, न तु प्रकृतानुमित्यविषयाविषयकत्वम्, स्वयमग्रे दूषणीयत्वात्।

---

कत्वस्याऽऽवश्यकतया तत एव एकधर्मावच्छिन्नपक्षकत्वनिवेशव्यावृत्तिर्न संभवत्येवेति तदनंगीकारपक्षानुसरणम्। एवं च तत्पक्षे प्रयोजनाभावेन तदनिवेशादुदाशैकदेशेऽतिव्याप्तिवारणायैकधर्मावच्छिन्नपक्षकत्वनिवेश इति भावः। प्रतिज्ञाऽघटकत्वमात्रस्येति। मात्रपदेन हेतूपनयनिगमनाऽघटकत्वव्यवच्छेदः। प्रतिज्ञाऽघटकत्वं च प्रतिज्ञादिघटकतानवच्छेदकधर्मवत्त्वम्। घटकतावच्छेदकत्वं च प्रतिज्ञात्वन्यूनवृत्तित्वे सति प्रतिज्ञावृत्तित्वम्। तेन प्रतिज्ञाभेदानुयोगितावच्छेदकत्वोक्तौ प्रकृतपक्षकत्वनिवेशवैयर्थ्येऽपि न क्षतिः। तदेकदेशवारणायेति। प्रतिज्ञैकदेशवारणायेत्यर्थः। रमाधवः पूज्य इति प्रतिज्ञैकदेशे माधवः पूज्य इतिभागेतिव्याप्तिवारणायेति यावत्। एकधर्मावच्छिन्नेति। वस्तुतइति। अत्र सत्यन्तमन्यूनविषयकत्वदलस्यार्थः। अनतिरिक्तविषयकत्वदलस्यार्थो विशेष्यदलम्। अनुमितिमनन्तर्भाव्यैवेति। तथा चैकसाध्यादिमत्त्वप्रापकं प्रकृतद्वयमिति कल्पनामात्रमेव। एवं च प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वे सति तादृशवैशिष्ट्यविषयताविलक्षणविषयताशून्यबोधजनकवाक्यत्वं प्रतिज्ञात्वं फलितम्। अग्रे प्रदर्शनीयेति। धूमादालोकवान् पर्वतो वन्हिमान्धूमादित्यत्र हेतावतिव्याप्तिवारणायान्यूनविषयकत्वनिवेशः। प्रकृतपक्षपदानुपादाने प्रमेयः प्रमेयादित्यत्र हेतावतिव्याप्तिः। पञ्चम्यर्थहेतुत्वे प्रकृत्यर्थप्रमेयस्य प्रकारत्वात्। हेतुत्वं प्रमेयाद्वाच्यत्ववत्प्रमेयादित्यत्र हेतावतिव्याप्तिः पक्षीभूतविभक्त्यर्थहेतुत्वविषयकबोधजनकत्वादितिभावः।

हेतोरिति। प्रतिज्ञाऽघटकस्वतन्त्रहेतोरित्यर्थः। दूषणीयत्वादिति। सर्वमभिधेयं प्रमेयत्वादित्यत्र प्रकृतानुमित्यविषयाऽप्रसिद्ध्येत्यादिः। तादृशविषयताविलक्षणेति। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्न-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



91 धूमादालोकवान्पर्वतोवन्हिमान्धूमादित्यादावनतिरिक्तविषयकज्ञानजनकस्य हेतोर्वारणायाऽन्यूनेति । निगमनवारणायाऽनतिरिक्तेति । 96

तादृशविषयताविलक्षणत्वं च तादृशविषयिताशालिनिश्चयत्वावच्छिन्ना-निवर्त्यसंशयनिवर्त्तकतावच्छेदकत्वं निर्वाच्यते । एवं चोक्तहेत्ववयवज-न्यबोधस्यानुमित्यविषयवह्निनिष्ठधूमज्ञानज्ञाप्यत्वविषयकत्वेऽपि[1] तादृशवि-षयताविलक्षणविषयताशून्यत्वमक्षतमेवेत्यतिव्याप्तिप्रसक्तिरिति भावः । निगमनवारणायेति । निगमनजन्यबोधस्यापि पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वेनाऽन्यूनविषयकतयाऽतिव्या-प्तिप्रसक्तिरिति भावः ।

निगमने । तस्माद्वन्हिमानित्यादिवाक्यसन्निधाने । साक्षादिति । अवयवान्तरवह्निर्भावेणेत्यर्थः । न श्रूयते इति । तथा च कथं तज्जन्यबोध-

---

प्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताविलक्षणेत्यर्थः । अथाऽत्र तादृशविषयताविलक्षणत्वं यदि तादृशविषयताभिन्नत्वं तदाऽसंभवः, प्रतिज्ञा-जन्यबोधीयसाध्यादिविषयतायास्तद्भिन्नत्वात् । नापि तादृशविषयताभिन्न-मुख्यविशेष्यताशून्यत्वं समुदितार्थः, धूमादालोकवान्पर्वतोवन्हिमानित्यत्र हेतु-जन्यबोधे तादृशविषयताभिन्नमुख्यविशेष्यताशून्यत्वाभावाद्धेतुवाक्येऽतिव्याप्ति-विरहादन्यूनविषयकत्वस्य वैयर्थ्यादित्यत आह । विलक्षणत्वं चेति । एवंचेति एतादृशविलक्षणत्वनिवेशे चेत्यर्थः । विषयकत्वेपीति । ज्ञानज्ञाप्यत्वं धूमीयमित्यत्र ज्ञानज्ञाप्यतात्वरूपेण वन्हिनिष्ठतादृशज्ञान ज्ञाप्यत्वस्यापि विषयीकरणादिति भावः । अक्षतमेवेति । वन्हित्वा वच्छिन्नप्रकारतानिरूपिततादृशपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वा वच्छिन्न-प्रतिबन्धकतानिरूपितप्रतिबध्यताया ज्ञानज्ञाप्यत्वं धूमीयं नवेति संशयेपि सत्वात् तादृशनिश्चयत्वाऽवच्छिन्नाऽनिवर्त्यो य संशयः उदासीन संशयः तन्निवर्त्तकतावच्छेदकविषयताशून्यत्वं हेतुजन्यबोधेऽक्षतमेवेति भावः । [ अन्यूनविषयकत्वनिवेशे हेतुजन्यबोधस्य प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्य-तावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वविरहान्नातिव्याप्तिः । अन्यूनविषयक-

---

१. धूमादालोकवान्पर्वतोवन्हिमानित्यत्राऽऽलोकपदं तेजः परम्, तेन हेतुवाक्ये एव वन्हिनिष्ठधूमज्ञानज्ञाप्यत्वप्रतिपत्तावपि नानुमित्यनतिरिक्तविषयकत्वक्षतिरित्य-स्मद्गुरुचरणाः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



95 यद्यपि निगमने साक्षात्पक्षवाचकपदं न श्रूयते तथापि न्यूनताभंगायोपनयस्थाऽयमादिपदस्याऽनुषङ्गात्तथा बोध्यम् । इत्थमेव च प्रसक्तामतिप्रसक्तिं निगमनंचेत्यादिना निराकरिष्यति ।97

स्याऽन्यूनविषयकत्वमितिभावः । न्यूनताभंगाय । आकांक्षापूरणाय । पक्षतावच्छेदकविशिष्टे पक्षे साध्यवत्ताबोधेन कस्तादृशवन्हिमानिति जिज्ञासा निवर्त्तते । वन्हिमानित्यभिधाने च तादृशाकांक्षा उत्सर्गतो जायते इत्यनुभवसिद्धमेवेति भावः । अनुषंगादिति । निगमनस्थसाध्यवाचकपदसमभिव्याहृतत्वेना ऽनुसन्धानोपगमादित्यर्थः - तथा च तदन्तर्भाव्यैव निगमनावयवत्वं पर्यवस्य । तीत्यन्यूनविषयकबोध जनकन्यायावयवत्वमादायाऽतिव्याप्तिप्रसक्तिरिति - भावः । निगमनं च न परामर्शहेतुरिति यथाश्रुताऽग्रिममूलग्रन्थस्य सत्यन्तदलविरहेण निगमने नातिव्याप्तिरित्यर्थपरत्वं प्रतीयते तच्च न घटते सत्यन्तस्य न्यायावयवत्वार्थकत्वात्तस्य च निगमनसाधारण्यात् । यथाश्रुतस्याऽपि सत्यन्तार्थस्य प्रतिज्ञायामिव तत्राप्यक्षतत्वात् । अन-

---

तयेति । अनतिरिक्तविषयकत्वनिवेशे च निगमनबोधस्य पक्षे साध्यवैशिष्ट्यावगाहिविषयताशालिनिश्चयत्वावच्छिन्नाऽनिवर्त्यो यः संशयः "वन्हिःधूमज्ञानज्ञाप्यो नवा अबाधितो नवा असत्प्रतिपक्षितो नवेत्यादयः तन्निवर्त्तकतावच्छेदकविषयिताशालित्वान्नातिव्याप्तिः । तथा च प्रकृतपक्षसाध्यकन्यायावयवत्वे- सति प्रकृतपक्षे प्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वे सति प्रकृतसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नाऽनिवर्त्यो यः संशयस्तन्निवर्त्तकतावच्छेदकविषयिताशून्यज्ञानजनकवाक्यत्वं पर्यवसितम् ।

अयं पदान्तर्भावेणैव निगमनत्वस्य वक्तव्यतया व्याचष्टे । तस्मादिति । अवयवान्तवाहिर्भावः स्वभिन्नावयवाऽघटकत्वम् । तथा च अयंपदस्य निगमनाऽघटकत्वे च । कथमन्यूनविषयकत्वमिति । तज्जन्यबोधस्य पक्षे साध्यवैशिष्ट्यावगाहित्वाभावादितिभावः । मणिकारस्याप्ययंपदानुषंगपक्षोऽभिप्रेत इत्यभिप्रायकमित्थमेवेति दीधितिग्रन्थमवतारयति । निगमनं चेति । ननु तर्हि कथं निगमनेऽ विव्याप्तिवारणमत आह । अनतिरिक्तविषयकत्वविशेषणेनैवेति । एतद्विशेषणमेवाऽतिव्याप्तिवारणक्षममिति भावः । एवकारेणाऽन्यूनविषयकत्वदलेन वारणं नास्तीति सूचितं, तच्चाऽयंपदानुषङ्गपक्षे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



96 तदर्थश्च निगमनमन्यूनाऽनतिरिक्तविषयकशाब्दज्ञानजनकं सन्न परामर्शहेतुः- येन निरुक्तन्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि व्याप्नुयात् । अबाधितत्वादेस्त-द्बोधौपयिकविशिष्टहेतुसंबन्धस्य च बोधकतया तस्यातिरिक्तविषयकज्ञा-नजनकत्वादिति ।

यत्तु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ यन्न पृथिवीतरेभ्यो भिद्यते तन्न पृथिवीत्युदाहरणवारणाय तदिति । 98

तिरिक्तविषयकत्वविशेषणेनैव तद्वारणाच्चेत्यनतिरिक्तिविषयकत्वविशेष-णस्य निगमनातिव्याप्तिवारकतापरत्वेन तादृशग्रन्थमत्रैव व्याख्यातुं भूमि-कामारचयति । इत्थमेवचेति । अन्यूनानतिरिक्तेति । तथा च न्यायावय-वत्वपर्यवसिततादृशपरामर्शप्रयोजक शाब्दज्ञानजनकत्वसत्वेऽपि अन्यूनाऽनतिरिक्तविषयकज्ञान जनकत्वं नास्तीति पर्यवसितोर्थः। अबाधि तत्वादिपरतया उदीच्यत-द्बोधेनापि निर्वाहान्निगमनजन्यशाब्दबोधे तद्भानार्थं लक्षणाऽऽदरो न युक्त इति मूलोक्त तद्विषयकतयातिरिक्त विषयकत्वं न विचारसहम् । एवं पचम्यर्थभागार्थस्याऽतिरिक्तस्य विषय-तया तथात्वाऽप्रतिपादने न्यूनत्व चेत्यतः पूरयति । तद्बोधौपयिकेति । अबाधितत्वादिबोधौपयिकेत्यर्थः । विशिष्टहेतुसंबन्धस्य । व्याप्ति पक्षधर्मताविशिष्टहेतुज्ञानज्ञाप्यत्वस्य । अस्य चाऽबाधितत्वादिव्याप्यतया तद्बोधौपयिकत्वं बोध्यम् ।

---

एवेति मणिकारस्वरसलाभः । ननु निगमनस्याबाधितत्वादिबोधजनकत्वं न युक्तं, निगमने तद्वाचकपदाभावादित्यतआह । उदीच्यतद्बोधेनापीति । लक्षणादरः लक्षणावृत्तेरादरः । तद्विषयकतया । अबाधितत्वादिविषयकतया । पंचम्यर्थ-भागस्य । विशिष्टधूमज्ञानज्ञाप्यत्वस्य । तथात्वाप्रतिपादने । अतिरिक्तविषय-कत्वाप्रतिपादने । तस्यचेति । विशिष्टहेतुसंबन्धस्य चेत्यर्थः ।

इतरत्वस्य केवलान्वयितया बाधमाशंक्याह । इतरादीति ।

अत्र च इतरपदादेव साध्यनिर्देशः, उदाहरणे च पृथिवीतरपदात्, इतिवैषम्यात्कथं तस्य न्यायावयवत्वमित्यत आह । प्रतिज्ञादाविति । एकेनैव समानानुपूर्वीकपदेनैव साध्यादिनिर्देश इति नियमो न सर्वत्रेत्यर्थः । प्रकृतानुमित्यनिवर्त्त्यसंशयाऽनिवर्त्तकत्वरूपाऽनतिरिक्तविषयकत्वस्य सत्वदशायां कीदृशमन्यूनविषयकत्वं निवेश्यते इति पृच्छति । अन्यूनविषयकत्वं हीति - सर्वस्मादिति । अस्य च पक्षतावच्छेदककोटावनिवेशे हेत्ववयवेऽतिव्याप्तिर्न संभवति, तज्जन्यबोधे सर्वज्ञानज्ञाप्यत्वस्य प्रकृतानुमित्यतिरिक्तस्य भानादतः



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



९७ तत्तुच्छम् । तेन पृथिव्यामितरभेदस्याऽविषयीकरणात् । तात्पर्यभ्रमेण तादृशबोधजनकत्वस्याऽतिप्रसक्तत्वात् ।

न च तावताप्युदाहरणस्य तथात्वसंभवः । यन्नेत्यादेरनन्वयात् । १०२

मिश्रमतमुपन्यस्यति । यत्त्विति । पृथिवीतरेभ्यो भिद्यते इत्यसमस्तम् इतरपदं पृथिवीतरपरम् । इतरादिससंबन्धिकार्थबोधकपदानां समभिव्याहृततत्तत्पदोपस्थाप्यतत्तदर्थेतरत्वादिना निरूढलक्षणा, अतो वादिवाक्ये स्वारसिकलक्षणाविरहेऽपि न क्षतिः ।

प्रतिज्ञादौ सर्वत्रैकेनैव पदेन साध्यनिर्देश इति न नियमः । तेनाऽग्रे यन्न पृथिवीतरेभ्यो भिद्यते इत्युदाहरणप्रयोगाऽविरोधः ।

विशेष्यवाचकं पृथिवीतिपदान्तरं पूरणीयम् । अतपदं समस्तमित्येव वा । उदाहरणवारणायेति । तज्जन्यबोधेपि पक्षसाध्याश्रयत्वात्मकतत्संबन्धरूपानुमितिविषयसकलपदार्थभानेनान्यूनविषयकत्वसत्वादित्यभिमानः । तत् अनतिरिक्तेतिपदम् ।

अन्यूनविषयकत्वं हि न प्रकृतानुमितिविषयताव्यापकविषयताकत्वम्, सर्वस्मात्कालत्ववान्महाकालः कालपरिमाणवान् सर्वस्मादित्यत्र हेत्ववयवेऽतिव्याप्तेः । नापि पक्षतावच्छेदकविशिष्टविषयकत्वं, हेतुत्वं प्रमेयाद्वाच्यत्ववत् प्रमेयादित्यादौ हेत्ववयवेऽतिव्याप्तेः ।

नापि पक्षतावच्छेदकविशिष्टविषयकत्वे संति साध्यतावच्छेदकविशिष्टविषयकत्वं तद्वैशिष्ट्यविषयकत्वं वा । प्रमेयनिष्ठहेतुत्वं प्रमेयं प्रमेयादित्यत्र हेत्ववयवेऽतिव्याप्तेः । तज्जन्यबोधे प्रमेयत्वत्वरूपसाध्यतावच्छेदकविशिष्टस्य प्रमेयपदार्थतावच्छेदकस्य धर्मिणि वैशिष्ट्यभानादिति पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वं तद्वाच्यम् । तथा च नोक्तोदाहरणेऽतिव्याप्तिरित्याशयेन दूषयति । तत्तुच्छमिति ।

---

सर्वस्मादिति तत्रोक्तम् । एवं च प्रकृतानुमितावपि सर्वज्ञानज्ञाप्यत्वभानाद्धेतुजन्यबोधेपि तद्भानेऽनतिरिक्तविषयकत्वमक्षतमिति भावः । एवं पंचम्यर्थस्यापि तत्कोटौ निवेशे इदमेव प्रयोजनं बोध्यम् । अतिव्याप्तेरिति । हेत्ववयवमात्रविषयकज्ञानेऽपि पक्षतावच्छेदकविशिष्टविषयकत्वसत्वात् ।

तथा च । पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपाऽन्यूनविषयकत्वनिवेशे । दीधितौ तेन । यन्न पृथिवीतरेभ्यो भिद्यते तन्न पृथिवीत्युदाहरणेन । अतिव्याप्तत्वादिति । अनतिरिक्तविषयकत्वनिवेशेपि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ननु भ्रान्तः पृथिवीपदस्य विशेष्यपरत्वं-इतरपदस्य च पृथिवीतरपरत्वमवगत्य तादृशोदाहरणात्पृथिवीत्वविशिष्टे साध्यवत्त्वं प्रत्येतीति तत्राऽतिप्रसक्तिरित्यत आह। तात्पर्यभ्रमेणेति। तादृशेति। अन्यूनविषयकेत्यर्थः। अतिप्रसक्तत्वात्। तथा चाऽयमित्याकारकसाध्यवत्त्वतात्पर्यभ्रमविषयसर्वनामपदघटितोपनयेऽतिव्याप्तत्वात्। तात्पर्यभ्रमदशायामपि नातिव्याप्तिप्रसक्तिरित्याह। नचेति। उदाहरणस्य। उदाहरणत्वपर्याप्त्यधिकरणस्य। यन्नेत्यादेः। तन्नेत्यादिभागार्थस्य अनन्वयात्। पृथिवीतरेभ्यो भिद्यते इत्येतादृशबोधेऽप्रवेशात्। तथा चाऽन्यूनविषयकतादृशबोधजनकत्वमेकदेशस्यैव न तु यन्नेत्यादिघटितसमुदायस्य। एकदेशस्य तु न्यायावयवत्वाभावादेव नातिप्रसक्तिशंका। न्यायान्तर्गतत्वस्यैकदेशसाधारणस्य निवेशेचाऽनतिरिक्तविषयकत्वनिवेशेऽपि तादृशोदाहरणैकदेशे एवाऽतिव्याप्तिरिति भावः। तात्पर्यभ्रमेण यन्नेत्यादिकमन्तर्भाव्य यद्भिन्ना पृथिवीतरेभ्यो भिद्यते इत्यन्वयबोधः संभवतीति नाशंकनीयम्। जलं न द्रव्यं गन्धवदित्यादौ जलभिन्नं द्रव्यं गन्धवदित्यन्वयबोधस्याऽनुभवविरुद्धतया नञर्थोद्देश्यतावच्छेदककबोधस्याऽव्युत्पन्नत्वात्। यदितरभिन्नपृथिव्यन्यदित्याकारको यदर्थविशेष्यकबोधोपि न संभवति, अयं न पचति पुरुष इत्यत्रेदंपदार्थे पाककर्तृपुरुषभेदबोधस्यानुभवविरुद्धतयाऽभावप्रतियोगितावच्छेदत्वेनाऽऽख्यातार्थभानस्य पचति चैत्र इवाऽयमित्यादितः पाककर्तृचैत्रादिसादृश्यबोधस्याऽननुभवेनेतरविशेषणविशेषणतया तद्भानस्यैवाऽव्युत्पन्नत्वात्।

---

शक्तिभ्रमादिजन्यतादृशबोधजनकत्वमादायोपनयादावतिव्याप्तिवारणाय शक्तिभ्रमाजन्यत्वनिवेशस्याऽवश्यकत्वात्। **दीधितौ। तात्पर्यभ्रमेणेति।** नञ्पदं यत्पदार्थंजलादिविशेषितस्वार्थं बोधयतु इति तात्पर्यभ्रमेणेत्यर्थः। भूतलं यद्भिन्नं तमानयेत्यादौ तात्पर्यं प्रसिद्धम्।

दीधितौ। **तथात्वसंभवः।** पक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयकबोधजनकत्वसंभवः। **अनुभवविरुद्धतयेति।** जलं गन्धवद्द्रव्यभिन्नमित्येवान्वयबोध इति चिन्त्यम्। **अनुभवविरुद्धतयेति।** पाकानुकूलकृत्यभाववांश्चैत्र इत्यन्वयबोधः। **आख्यातार्थभानस्येति।** अभावप्रतियोगितावच्छेदकतया भासमानस्वातिरिक्तो यो धर्मस्तद्धर्मावच्छिन्नांशे-आख्यातार्थोऽभावप्रतियोगितावच्छेदकतया न भासते इत्यर्थः। **इतरविशेषण-**

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अत्र केचित् । अन्यूनविषयकत्वं पक्षतावच्छेदकविशिष्टविषयकत्वे सति साध्यतावच्छेदकविशिष्टविषयकत्वमेव न तु पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वम् । एवं च दर्शितव्यतिरेक्युदाहरणजन्यबोधस्यापि तादृशाऽन्यूनविषयकत्वादतिव्याप्तिः प्रसज्यते । नचैवमपि साध्यतावच्छेदकविशिष्टसाध्यपक्षतावच्छेदकविशिष्टपक्षघटितवाक्यार्थबोधकत्वमुदाहरणैकदेशस्यैव, न तु तन्न पृथिवीत्यादिभागघटितसमुदायरूपोदाहरणस्येत्यवयवत्वविशेषणप्रवेशादेव नातिव्याप्तिशंकेति वाच्यम् । तादृशान्यूनविषयकत्वघटितधर्मावच्छिन्नजनकतापर्यन्ताऽनिवेशाद्वाक्यार्थद्वयविषयकसमूहालंबनबोधजनकतामादायाऽतिव्याप्तेः प्रसंजनात् । न हि तादृशसमूहालंबनबोधजनकत्वमेकेदेशे पर्यवस्यति । अपि तु समुदाय एव ।

---

तया । इतरो-भेदसादृश्यादि- तद्विशेषणं-पृथिवी चैत्रादि-तद्विशेषणतयेत्यर्थः । तद्भानस्येति । आख्यातार्थभानस्येत्यर्थः ।

एवकारव्यवच्छेद्यमाह । नत्विति । ननु एतादृशाऽन्यूनविषयकत्वोक्तौ प्रमेयनिष्ठं हेतुत्वं प्रमेयं प्रमेयादित्यत्र हेत्ववयवेऽतिव्याप्तिःप्रागभिहितैवेति कथं पुनस्तादृशाऽन्यूनविषयकत्वोक्तिःसंगच्छतेइतिचेन्न । नवीनमते ज्ञाप्यत्वस्यैवपञ्चम्यर्थत्वात्, तन्मते प्रमेयादिति हेतुवाक्यात्प्रमेयनिष्ठहेतुत्वबोधाभावान्न तत्रातिव्याप्तिरिति तन्मतावलंबनेन तदुक्तिसंगतिः । नच तन्मतेपि प्रमेयज्ञाप्यत्वं प्रमेयंप्रमेयादित्यत्र हेत्ववयवेऽतिव्याप्तिःशंक्या, नामार्थधात्वर्थयोरभेदातिरिक्तसंबन्धेन साक्षादन्वयाभावात्प्रमेयपदस्य प्रमेयविषयके लाक्षणिकतया तदर्थस्य धात्वर्थज्ञानेऽभेदान्वयावश्यकत्वेन यादृशधर्मावच्छिन्नःप्रतिज्ञया बोध्यस्तादृशधर्मावच्छिन्नविषयकबोधजनकत्वस्य तादृशहेत्ववयववाक्येऽसंभवात् । विषयत्वं प्रमेयंप्रमेयादिति हेतुवाक्यस्यातिरिक्तविषयकबोधजनकतयैव वारणादितिध्येयम् । एवंच । पक्षतावच्छेदकविशिष्टविषयकत्वे सति साध्यतावच्छेदकविशिष्टविषयकत्वरूपाऽन्यूनविषयकत्वनिवेशे च । दर्शितव्यतिरेक्युदाहरणेति । यन्न पृथिवीतरेभ्योभिद्यते तन्न पृथिवीत्युदाहरणेत्यर्थः । अनिवेशादिति । पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिशाब्दत्वस्य कदाचित्कार्यतावच्छेदकत्वेऽपिनिरुक्तान्यूनविषयकशाब्दत्वस्यातथात्वेन निवेशाऽसंभवादित्यर्थः । नन्वेतादृशान्यूनविषयकत्वनिवेशे उक्तातिव्याप्तिरतआह । अथवेति । न्यायान्तर्गतत्वमेवेति । एवकारेण न्यायावयवत्वव्यवच्छेदः । तथा च तादृशोदाहरणैकदेशेऽतिव्याप्तिवारणायाऽनतिरिक्त-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अथवा न्यायान्तर्गतत्वमेव सत्यन्तार्थः । अत एव मिश्राणां घट-शब्दो गुणः द्रव्यकर्मान्यत्वे सति सत्त्वादित्यत्रोदाहरणे यदि प्रतिज्ञारूप-शब्द एव दृष्टान्तत्वेनोपादीयते तदा तत्राऽतिव्याप्तिवारणार्थत्वादित्या-दिना शाब्दज्ञानपदस्य व्यावृत्तिसंगतिः । तद्दाने तत्रातिव्याप्तिप्रसक्तिः, विषयविधया श्रावणप्रत्यक्षजनकत्वात्तादृशदृष्टान्तरूपशब्दस्येति । पक्षतावच्छेदकविशिष्टविषयकत्वमेवान्यूनविषयकत्वम् ।

एवं च तादृशोदाहरणैकदेशाऽतिव्याप्तिवारणायैव साध्यतावच्छेदक-संबन्धेन साध्यतावच्छेदकमात्रविशिष्टसाध्यप्रकारकत्वार्थकमनतिरिक्त-विषयकेति । तज्जन्यबोधस्य साध्यतावच्छेदकसम्बन्धेन साध्याप्रकारक-त्वात् । मात्रपदार्थान्तर्भावान्निगमनव्युदासः । तज्जन्यबोधे विशिष्टहेतु-संबन्धस्याधिकस्य साध्यांशे भानेन शुद्धसाध्यतावच्छेदकावच्छिन्नसा-ध्याऽप्रकारकत्वात् । एवं च वह्निव्याप्यधूमवानयमित्याद्युपनयजन्यबोध-स्य व्याप्तिघटकाधिकरणांशे साध्यतावच्छेदकावच्छिन्नप्रकारकत्वेऽपि-साध्यांशे व्यापकत्वस्याधिकस्य भानेन तत्रापि नातिप्रसंगः ।

न चैवमपि यन्न पृथिवीतरान्यदित्युदाहरणैकदेशेऽतिप्रसंगः, तज्जन्य-बोधे पक्षतावच्छेदकविशिष्टपक्षविषयकत्वस्य शुद्धसाध्यतावच्छेदकविशि-ष्टसाध्यप्रकारकत्वस्य च सत्त्वादिति वाच्यम् ।

---

विषयकत्वनिवेश इति भावः । उदाहरणे । योयो द्रव्यकर्मान्यत्वे सति सत्तावान् स गुणो यथा घटशब्दोगुण इत्याकारके । तत्र । दृष्टान्तघटकघटशब्दे । तथा-त्वानुमित्यन्यूनाऽनतिरिक्तविषयकज्ञानजनकत्वस्यैवोपादाने उक्तदृष्टान्तघटक

घटशब्देतिव्याप्तिः, तद्विशेष्यकगुणत्वप्रकारकप्रत्यक्षे विषयविधया तादृशशब्-ब्दस्य जनकत्वात् । शाब्दपदे दत्ते च शाब्दबोधस्य हेतुवैशिष्ट्यावगाहित्वान्नाति-व्याप्तिः तादृशोदाहरणैकदेशे यन्नपृथिवीतरेभ्योभिद्यते तन्न पृथिवीत्युदाहरणै-कदेशे । तज्जन्यबोधस्य । उदाहरणजन्यबोधस्य । साध्याप्रऽकारकत्वादिति । अभावे प्रतियोगितासंबन्धेन भेदस्य प्रकारत्वात् ।

**एवमपि** । साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकमात्रविशिष्टसाध्यप्रका-रकत्वनिवेशेऽपीत्यर्थः । अतिप्रसङ्गइति । यन्न पृथिवीतरान्यदित्युदाहरणै-कदेशात्मकवाक्यजन्यबोधस्य स्वरूपसंसर्गेण पृथिवीतरभेदवद्भिन्नं यद् भवति इत्याकारकतया साध्यीभूतस्य पृथिवीतरभेदस्य साध्यतावच्छेदकीभूतस्वरूप-संसर्गेणाधिकरणे प्रकारतया भासमानत्वात् अन्यपदस्य भेदाधिकरणार्थकत्वात् इति तु न युक्तम्, किन्तु इतरभेदो निरूपितत्वसंसर्गेणाख्यातार्थाश्रयत्वे प्रकारः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



98 यदि च निगमने नायमादिपदं निविशते वाक्यैकवाक्यतयैव विशिष्टार्थभाना-दिति विभाव्यते,तदा हेतौ साध्यसामानाधिकरण्यभाने सामान्यतः पक्षेऽपि साध्य-वत्त्वभानात्पक्षे हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुमत्ताबोधकस्योपनयस्य

पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वावच्छेदेन तादृशसाध्यप्रकार-कत्वस्य दलद्वयनिष्कृष्टार्थत्वात् । तादृशोदाहरणभागजन्यबोधस्येतरभेदांशे निर्धर्मितावच्छेदकतया तादृशसाध्यप्रकारकत्वविरहात् । साध्यता-वच्छेदकसंबन्धनिवेशनं च यत्र कालिकसंबन्धेन कालपरिमाण स्पन्दत्वादेः साध्यता समवायेन च तस्यैव हेतुता तत्रत्योपनयीयव्याप्या-न्तातिरिक्तभागवारणाय । सिषाधयिषया च न्यायप्रयोगो नाभ्युपेयते इति यत्र साध्यतावच्छेदकसंबन्धेनैव साध्यतावच्छेदकविशिष्टसाध्यस्य हेतुता तत्रत्योपनयीतादृशभागेऽतिप्रसंग इत्यस्य नावकाशः । नचैवमपि निग-मनीयतस्मादित्यंशातिरिक्तांशेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम् । तस्मादित्यं-शार्थमनन्तर्भाव्य व्यवहितयोः पक्षसाध्यवद्वाचकपदयोरन्वयबोधा-जनकत्वादितिरीत्योक्तस्थलेपि व्यावृत्तिदानं संगमयन्ति ।

अयंपदाननुषङ्गपक्षे निगमनेऽनतिरिक्तविषयकत्वव्यावृत्तिर्न संगच्छते इत्याशंकते । यदि चेति । अयमादीत्यादिना इदमियमित्यादेःपरिग्रहः । वाक्यैकवाक्यतयेति । उपनयनिगमनयोरेकवाक्यतयेत्यर्थः । विशिष्टार्थ-भानात् । पक्षतावच्छेदकविशिष्टे साध्यवत्तालाभात्, विशेषाकांक्षानिवृत्तेः ।

---

इतरभेदाश्रयत्वाभाववद् यद् भवति तन्न पृथिवीतिबोधस्य सर्वानुभवसिद्ध-त्वात्, तथाच साध्यतावच्छेदकसंसर्गेण साध्यप्रकारकत्वाभावान्नाति-व्याप्त्यवसर इति ध्येयम् । विशेष्यकत्वावच्छेदेनेति । अन्यूनविषयकं सदनतिरिक्तविषयकमित्युद्देश्यविधेयभावमहिम्नाऽवच्छेद्यावच्छेदकभावलाभः । तादृशोदाहरणेति । यन्न पृथिवीतरान्यत् तन्न पृथिवीत्युदाहरणेत्यर्थः । भागजन्यबोधस्येति । पृथिवीतरान्यदितिभागजन्यबोधस्येत्यर्थः । तादृशेति । पक्षविशेष्यकत्वावच्छिन्नेत्यर्थः । भागवारणायेति । स्पन्दत्वव्याप्यस्पन्द-त्ववानयमित्युपनयस्य स्पन्दत्ववानयमिति भागस्येत्यर्थः । तस्मादित्यतिरिक्तांशे-इति । अयं तस्माद्वन्हिमानिति निगमनीयेऽयं वन्हिमानित्यंशे इत्यर्थः । व्यवहितयोरिति । आसत्त्यभावेनेत्याशयः । उक्तस्थलेऽपि । निगमनेऽपि । साध्यवत्तालाभादिति । साध्यवत्ताज्ञानादित्यर्थः । एतन्मते । अननुषङ्गपक्षे । तस्मादितरेभ्यो भिद्यते इत्येव निगमनोपगमात् । इयं तस्मान्ने-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

यत्र च पक्षसाध्ययोस्ताद्रूप्येण दृष्टान्तत्वहेतुत्वाभ्यामुपन्यासः तादृश सिषाधयिषया च न्यायप्रयोगस्तत्रोदाहरणोपनययोः ।

न च पक्षवाचकपदाननुषङ्गे तस्मान्नेतराणीत्यादिनिगमनविरोधः-अनुयोग्यमिश्रितनञर्थशाब्दबोधस्याऽव्युत्पन्नतया तन्मात्रस्याऽबोधकत्वेन वाक्यत्वाभावादितिवाच्यम् । एतन्मते तादृशनिगमनानभ्युपगमात् । यद्यप्यनतिरिक्तविषयकत्वाऽनिवेशेऽन्यूनविषयकबोधजनकत्वं तज्जनकज्ञानविषयत्वं वा न्यायावयवत्वं विशेषितं प्रतिज्ञाहेत्वादिजन्यबोधमादाय हेत्वादावतिप्रसक्तं । तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वरूपाऽन्यूनविषयकत्वावच्छिन्नजन्यतानिरूपिजनकतावच्छेदकयत्किञ्चिद् - ज्ञानविषयताश्रयवर्णसमुदायत्वनिवेशे नायं दोष इति स्थलान्तरे व्यावृत्तिमाह । तद्देत्यादिना । भाने । ज्ञाने । सामान्यतः । अधिकरणत्वरूपसामान्यधर्मावच्छिन्ने-विशेषरूपानवच्छिन्नेइति वा । साध्यवत्वभानात् । साध्यवत्त्वविषयकत्वात् । उपनयस्य वारणाय तदिति योजना । पक्षे साध्यवैशिष्ट्यावगाहित्वमेवाऽन्यूनविषयकत्व, न तु पक्षतावच्छेदकवैशिष्ट्यान्तर्भाव इत्यभिप्रायेणेदम् ।

प्रमेयाद्वाच्यत्ववानयं प्रमेयः प्रमयादित्यादिवक्ष्यमाणहेतुवारणाय पक्षतावच्छेदकवैशिष्ट्यान्तर्भाव आवश्यक इति तदन्तर्भावाभिप्रायेण-स्थलान्तरे व्यावृत्तिमाह । यत्रेति । पक्षेति । पक्षस्य ताद्रूप्येण पक्षता

---

तराणि इतितु न, पक्षपदघटिततया सप्रदायविरोधात् । न्यूनतां शंकते । यद्यपीति । साध्यसामानाधिकरण्यघटकाऽधिकरणस्य साध्याधिकरणत्वेन निवेशेऽधिकरणत्वावच्छिन्ने साध्यभानं व्युत्पाद्य साध्येन रूपेण तन्निवेशे निरवच्छिन्ने तद्भानमाह। विशेषरूपानवच्छिन्ने इति । वक्ष्यमाणहेतुवारणायेति । तजन्यबोधे च पंचम्यर्थे प्रमेयभाने प्रमेयत्वस्यापि भानेन साध्यतावच्छेदकोभूतप्रमेयत्वत्वविशिष्टप्रमेयत्वरूपसाध्यस्य प्रमेयरूपपक्षे वैशिष्ट्यावगाहिजनकत्वस्य हेतौ सत्वादतिव्याप्तिवारणायेत्यर्थः । आवश्यक इति । तथा च हेतुजन्यबोधस्य प्रमेयांशे निर्धर्मितावच्छेदककतया पक्षतावच्छेदकवैशिष्ट्यविरहान्नातिव्याप्तिरिति भावः । यत्तु पक्षमुख्यविशेष्यकत्वनिवेशान्नातिव्याप्तिरिति । तन्न । प्रमेयाद्वाच्यवद्धेतुत्वं तादात्म्येन "स्वरूपसंबन्धेन वा" प्रमेयवत् प्रमेयादित्यत्र प्रमेयादिति हेत्ववयवेतिव्याप्तेः । साध्यतावच्छेदकसंबन्धनिवेशस्यैतद्दलेऽनिवेशस्य वक्ष्यमाणत्वात् । अस्मन्मते पक्षतावच्छेदकतापर्याप्तिनिवेशान्नातिव्याप्तिः । तदन्तर्भावेण । पक्षतावच्छेदकान्तर्भावेण । संशयाऽभावादिति । संशये

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



103 यत्र वा पर्वतत्वाद्यवच्छेदेन साध्यसिद्धेरुद्देश्यतायामेतत्पर्वतत्वादिना दृष्टान्तस्योपन्यासस्तत्रोदाहरणस्य । 107

वच्छेदकप्रकारेण यत्र दृष्टान्ततयोपन्यासस्तत्रोदाहरणस्य-साध्यस्य वा ताद्रूप्येण-साध्यतावच्छेदकरूपेण हेतुतया यत्रोपन्यासस्तत्रोपनयस्य वारणाय तादित्यर्थः । रूपान्तरेण पक्षसाध्ययोर्दृष्टान्तहेतुत्वाभ्यामुपन्यासे दर्शिताऽन्यूनविषयकत्वाऽसंभव इति ताद्रूप्येणेति । ननु पक्षे साध्यस्य निश्चयदशायामेव तादृशदृष्टान्तहेतुत्वासंभव इति तत्र संशयाभावान्न्याय एव न संभवतीत्यत आह । तादृशसिषाधयिषयेति । जल्पस्थले संशयस्याऽऽवश्यकत्वेऽपि वादस्थले न तथेति संशयमन्तरेणाऽपि अनुमित्साधीनानुमितिनिर्वाहाय न्यायप्रयोगसंभवादिति भावः ।

ननु सिषाधयिषया न्यायप्रयोगोपगमे पंचम्यर्थहेतुत्वे यादृशसंबन्धेन प्रकृत्यर्थस्याऽन्वयस्तत्संबन्धेन वन्हिसाध्यकहेतुत्वपक्षकवन्हिहेतुक न्यायान्तर्गतहेत्ववयवेऽतिव्याप्तिर्दुर्वारैवेति सिषाधयिषया न्यायप्रयोगो नांगीकर्त्तव्य इत्यत उक्तव्यावृत्तिर्न संगच्छते इत्यतः स्थलान्तरमनुसरति यत्र वेति । पर्वतत्वसामानाधिकरण्येन साध्यसिद्धेर्यत्रोद्देश्यता तत्रैतत्पर्वतत्वेनापि दृष्टान्तता न संभवति एतत्पर्वतत्वेन साध्यवत्तानिश्चयस्यापि तादृशानुमितिविरोधित्वादतः पर्वतत्वावच्छेदेनेति । तत्रोदाहरणस्येति । यद्यपि पर्वतत्वावच्छेदेन वन्हिमत्तावगाहिन्यामनुमितौ पर्वतत्वव्यापकत्वस्य वन्ह्यंशे भानात्तादृशदृष्टान्तघटितोदाहरणजन्यबोधे च तदभानादुद्देश्यानुमितिन्यूनविषयकत्वमेव तथापि पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपनिर्वाच्यमन्यूनविषयकत्वमक्षतमेवेति भावः ।

---

सत्येव जिज्ञासोदयादिति भावः । सन्दिग्धेर्थे न्यायः प्रवर्तते इति सिद्धान्तात् । जल्पेति । विपरीतोद्भावकपरविजिगीषया न्यायप्रयोगोजल्पः । वादेति । तत्वबुभुत्सोः कथा वादः । प्रथमतः संशयनिवर्तकसाध्यनिश्चयसत्वेपि अनुमित्सैवाऽनुमितिचरमकारणपरामर्शप्रयोजकन्यायसंपादिकेति भावः ।

यादृशसंबन्धेनेति । हेतुत्वं वन्हिमद्वन्हेरित्यादौ निरूपितत्वं संबन्धः । उक्तव्यावृत्तिरिति । अनतिरिक्तविषयकत्वव्यावृत्तिरित्यर्थः । निर्वाच्यमिति । अन्यूनविषयकत्वशरीरेसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्याऽनिवेशादिति भावः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यद्यपि पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्न-वैशिष्ट्यावगाहित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयतानिवेशो उदाहरणैकदेशे एव तादृशविषयता न तु समुदाये इति न्यायाऽवयवत्वनिवेशान्नातिप्रसंगः। तथापि प्रतिज्ञामात्राऽघटकत्वगर्भ न्यायावयवत्वं प्रकृतलक्षणे प्रविष्टम्, तच्च यथायं पर्वत इत्युदाहरणैकदेशेपीत्याशयः।

अवच्छेदकावच्छेदेनाऽनुमितिस्थलीयन्यायनिविष्टप्रतिज्ञालक्षणेऽव-च्छेदकावच्छेदेन साध्यवैशिष्ट्यावगाहित्वरूपाऽन्यूनविषयकत्वनिवेशने नैतद्वयावृत्तिसंगतिरित्यपरितोषेण व्यावृत्त्यन्तरमाह। सत्यन्तस्येति। अयमाशयः। एतल्लक्षणघटकन्यायावयवत्वशरीरे उभयघटकभागद्वयाऽघटितत्वं न निवेशनीयम्, अनतिरिक्तविषयकत्वनिवेशेनैवं तादृशभागद्वयघटितसमुदायेऽतिप्रसंगवारणात्।

न च शब्दज्ञानस्यैव शाब्दबोधजनकतया जनकत्वमत्र जनकज्ञानविषयत्वमेव वाच्यम्, एवं च तादृशसमुदायविषयकज्ञानमप्येकदेशप्रतिज्ञाविषयकत्वेन तथाविधबोधजनकमिति समुदायेऽतिप्रसंग इति वाच्यम्। तादृशबोधजनकतावच्छेदकीभूतयत्किंचिदेकज्ञानविषयितानिरूपकवर्णसमुदायत्वस्यैव विवक्षणीयत्वात्। न च तादृशवर्णसमु-

---

यद्यपीति। जन्यतेति। उदाहरणवारणाय जन्यताविषयतयोर्निवेशः। प्रतिज्ञामात्रेति। प्रतिज्ञात्वसमानाधिकरणत्वेसति प्रतिज्ञात्वावच्छिन्नभेदानुयोगितानवच्छेदकधर्मवत्त्वमर्थः। हेत्वाद्यघटकत्वं तु न निवेश्यते प्रयोजनाभावादिति भावः। ननु धूमज्ञानज्ञाप्यवन्हिवैशिष्ट्यावगाहिबोधमादाय प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिरत आह। अनतिरिक्तेति। समुदाये। प्रतिज्ञाहेतुसमुदाये।

तथाविधबोधजनकमिति। अन्यूनाऽनतिरिक्तविषयकबोधजनकमित्यर्थः। प्रतिज्ञामात्रविषयकेतियावत्। स च प्रतिबन्धकवशाद्धेत्वर्थाविषयको बोध्यः। तादृशबोधेति। अन्यूनाऽनतिरिक्तविषयकबोधेत्यर्थः। वर्णत्वाव्यापकेति। एतन्निवेशनन्तु प्रतिज्ञैकदेशाऽतिव्याप्तिवारणायैवेतिध्येयम्।

तादृशंचेति। तादृशवर्णत्वव्यापकं चेत्यर्थः। अवश्यमेवेति। तथा चाऽनतिरिक्तपदवैयर्थ्यमितिभावः। अनतिरिक्तपदसार्थक्यायेति। तथा च तादृशान्यूनविषयकबोधे अनतिरिक्तविषयकत्वविशेषणदाने एव तादृशसमुदायत्वे समनैयत्यनिवेशनप्रयोजनमन्यथा प्रतिज्ञाहेतुसमुदायस्य तेनैव वारणे वक्ष्यमाणव्यावृत्त्यसंगतेः तत्पदं व्यर्थं स्यादिति भावः। वर्णत्वसमनैयत्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दायत्वं तादृशवर्णत्वव्यापकसमुदायत्वं, तादृशं च प्रतिज्ञाहेतुसमुदायत्वमपीति तत्समुदाये ऽतिप्रसंग एवेति तादृशभागद्वयाघटितत्वमवश्यमेव निवेश्यमिति वाच्यम्। अनतिरिक्तपदसार्थक्याय तादृशयत्किंचिद्ज्ञानविषयताशालिवर्णत्वसमनैयत्यमेव निवेश्य प्रतिज्ञाहेत्वादिसमुदायत्वस्य वारणीयत्वात्। समानार्थकप्रतिज्ञाद्वयादिविषयकयत्किंचिद्ज्ञानविषयताश्रयवर्णत्वसमनैयत्यस्य तादृशप्रतिज्ञाद्वयादिपर्याप्तसमुदायत्वे सत्वेऽपि न क्षतिः, तदुभयादावपि प्रतिज्ञाव्यवहारात्। अपि तु प्रतिज्ञैकदेशस्यापि तादृशबोधनिष्ठवन्हिसबन्धिबुद्धित्वाद्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेकीभूतयत्किंचिदेकज्ञानविषयताश्रयवर्णसमुदायत्वमादायैव प्रतिज्ञात्वप्रसग इति प्रतिज्ञाद्यघटकत्व प्रतिज्ञामात्राऽघटकत्वं वा निवेशनीयम्। अन्यूनाऽनतिरिक्तविषयकशाब्दबुद्धित्वस्य किंचिज्जन्यतानवच्छेदकतया तदवच्छिन्ननिरूपितजनकतानिवेशाऽसंभवात्।

---

मेवेति। न तु व्यापकत्वमित्यर्थः। ननु तादृशवर्णत्वव्याप्यत्वमेव कुतो न निवेश्यं, एकदेशातिव्याप्तिवारणन्तु प्रतिज्ञाद्यघटकत्वदलेनैव संभवतीति वाच्यम्। एकप्रतिज्ञाऽपरप्रतिज्ञैकदेशघटितसमुदायेऽतिव्याप्तेः, तत्समुदायत्वे तादृशप्रतिज्ञाद्वयविषयकसमूहालंबनज्ञानीयतादृशजनकतावच्छेदकविषयताश्रयवर्णत्वव्याप्यत्वसत्वात् प्रतिज्ञाद्यघटकत्वाच्च। यद्वा वक्ष्यमाणप्रतिज्ञामात्राऽघटकत्वनिवेशकल्पे धूमादालोकवान्पर्वतो वन्हिमान् धूमादित्यादिन्यायीयहेतुघटकैकदेशेऽतिव्याप्तिवारणाय समनैयत्यशरीरे व्यापकत्वनिवेशः।

निवेश्येति। अन्यथा प्रतिज्ञाहेतुसमुदायस्योक्तरीत्यैव वारणे तन्निवेशनमनर्थकं स्यादित्यर्थः। अत्रेदं बोध्यम्। एतत्कल्पे प्रतिज्ञाहेतूभयघटकभागद्वयाघटितत्वमात्रं निवेश्यं, न तु उभयघटकभागद्वयाघटितत्वचतुष्टयं, प्रयोजनाभावात्। तथा च यद्यपि तदुपादानेऽपि अयमादिनिगमनान्तवारकतयाऽनतिरिक्तविषयकत्वसार्थक्यसंभवाद् हेत्वन्तावारणेऽपि न क्षतिरिति तत्यागप्रदर्शनं व्यर्थम्, तथापि तेनैव हेत्वन्तवारणात्पश्चात्तद्वैयर्थ्यमभिप्रेत्य प्रथमत एव तत्त्यागो दर्शितः। नन्वेवं समानार्थकप्रतिज्ञाद्वयादिविषयकज्ञानस्य निर्वाच्याऽन्यूनाऽनतिरिक्तविषयकयत्किंचिच्छाब्दबोधजनकतया तत्रातिव्याप्तिरित्याशंकामिष्टापत्त्या निराकुरुते। समानार्थकेति। उभयघटकेत्यादिनिवेशकल्पेपि। तस्य लक्ष्यतायाः एव स्वीकारात्। तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वविशेषणं तु अनतिरिक्तपदवैयर्थ्यभिया न मणिकृत्सम्मतमिति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



१०५ सत्यन्तस्य चाऽवयवाऽघटकन्यायान्तर्गतत्वपरतया हेत्वन्तस्याऽयमादि-निगमनान्तभागस्य वारणाय तत्। ११०

इत्थं चाऽननुषङ्गपक्षेऽप्ययं तस्माद्वन्हिमानितिभागे प्रतिज्ञादिहेत्वन्तभागेऽपि व्यावृत्तिः संभवतीत्याशयेनाह सत्यन्तस्य चेति। अवयवाऽघटकेति। न च तदुपादानेऽपि धूमादालोकवान्पर्वतोवन्हिमानित्यादिप्रतिज्ञार्थमात्रविषयकबोधनिष्ठधूमविशेषितहेतुत्वविषयकशाब्दत्वावच्छिन्न-कारणधूमादिहेतुविषयकज्ञानविषयतामादायाऽवयवाऽघटके तादृशहेतावतिव्याप्तिवारणायाऽनतिरिक्तविषयकबोधनिष्ठपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपाऽन्यूनविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किंचिद्ज्ञानविषयितानिरूपकवर्णसमुदायत्वनिवेशस्याऽवश्यकतया ऽवयवाऽघटकत्वनिवेशनं निष्प्रयोजनमिति वाच्यम्। तादृशहेतुवारणायाऽवयवाऽघटकेत्यनेनाऽवयवैकदेशमात्रविषयकज्ञाननिष्ठजनकताव्यावृत्तावयवत्वपर्याप्त्यवच्छेदकयत्किंचिद्धर्मव्यापकविषयताकान्यज्ञानवृत्तित्वावच्छिन्नभेदस्यैवान्यूनानतिरिक्तविषयकबोधजनकतायां विवक्षणीयत्वात्।

भावः। तादृशबोधनिष्ठेति। प्रकृतानुमित्यन्यूनानतिरिक्तविषयकप्रतिज्ञाप्रतिपाद्यसंपूर्णार्थविषयकबोधनिष्ठेत्यर्थः। प्रतिज्ञामात्राऽघटकत्वमेवेति। प्रतिज्ञात्वसमानाधिकरणत्वेसति प्रतिज्ञात्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदको यो धर्मस्तद्भिन्नधर्मवत्वमेवेत्यर्थः। ननु अन्यूनाऽनतिरिक्तविषयकत्वावच्छिन्नजन्यतानिवेशेनैवैकदेशातिव्याप्तिवारणसंभवे प्रतिज्ञामात्राघटकत्वनिवेशः किमर्थ इत्याशंकां निराकरोति। अन्यूनेति।

इत्थं च। प्रतिज्ञाऽघटकत्वमात्रस्य न्यायावयवत्वे च। अवयवाऽघटकत्वं च प्रतिज्ञाद्यघटकत्वं, प्रतिज्ञामात्राऽघटकत्वं वा। अत्राऽनतिरिक्तविषयकत्वोपादानेऽपि अन्यूनविषयकत्वावच्छिन्नजन्यतानिवेशावश्यकतां प्रदर्श्याऽवयवाघटकत्वनिवेशस्य वैयर्थ्यमाशंकते। न चेति। तदुपादानेऽपि। अवयवाऽघटकत्वोपादानेऽपि। अत्राऽनतिरिक्तविषयकत्वोपादानेऽपि अन्यूनविषयकत्वावच्छिन्नजन्यतानिवेशावश्यकतां प्रदर्श्याऽवयवाऽघटकत्वनिवेशवैयर्थ्यमाशंकते। न चेति। अन्यूनविषयकत्वनिष्ठावच्छेदकताकत्वमेव जन्यतायां निवेशनीयम्, नत्ववच्छेदकतापर्याप्तिरिति वक्ष्यते। अन्यथा प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिप्रसक्तेः, तादृशसमुदायजनितो यो विशिष्टवैशिष्ट्यावगाहिबोधस्तन्निष्ठविशिष्टवैशिष्ट्याऽवच्छिन्नजन्यताया निरुक्ताऽन्यूनविषयकत्वपर्याप्तजन्यतावच्छेदकताकत्वाभावात्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अवयवत्वं चेह न्यायान्तर्गतत्वविशेषणशून्यम्, । तेन प्रतिज्ञासमानाकारोदासीनवाक्यज्ञाने प्रतिज्ञाज्ञानीयकारणतायाः सत्वेऽपि तत्संग्रहः, तादृशोदासीनवाक्येपि तथाविधावयवत्वपर्याप्तेः । वस्तुतस्तु अवयवत्वघटकविशेष्यदलपरित्यागमात्रेणैव व्यावृत्तिः संगच्छते इति तादृशजनकतापर्यन्तनिवेशने प्रतिज्ञाघटकत्वदलपरित्यागसंभवेऽपि तत्परित्यागस्य प्रकृतानुपयुक्तत्वमित्येतल्लाभायैवाऽवयवाघटकेत्यभिहितम् ।

---

व्यावृत्तेति । व्यावृत्तान्तमुपलक्षणम् । एकदेशवारणाय पर्याप्तिनिवेशः । अवयत्वपर्याप्त्यवच्छेदकन्यायत्वप्रमेयत्वादिव्यापकविषयताकान्यत्वस्य प्रतिज्ञाज्ञाने सत्वेनाऽसंभवः स्यादतो यत्किंचिदिति । तथा च प्रतिज्ञात्वावच्छिन्नविषयताया अवयवत्वपर्याप्त्यवच्छेदकीभूतप्रतिज्ञात्वरूपयत्किंचिद्धर्मव्यापकतयाप्रतिज्ञाज्ञाने तादृशविषयताकत्वसत्वेन न तादृशविषयताकान्यत्वमस्तीति हेत्वादिनिष्ठसमुदायत्वव्यापकविषयकताकभेदकूटनिवेशान्नासंभवः ।

न च पूर्वोक्तप्रतिज्ञामात्राघटकत्वदले प्रतिज्ञात्वसामानाधिकरण्याप्रवेशान्नातिव्याप्तिप्रसक्तिरिति किं तथाविवक्षणेनेति वाच्यम् । प्रतिज्ञामात्राऽघटकत्वं संपूर्णमेव निवेश्यमित्यभिप्रायात् । असंभववारणाय व्यापकत्वनिवेशः । आनुपूर्व्यवच्छिन्नविषयताया व्यापकत्वानवच्छिन्नविषयताकान्यत्वनिवृत्तिः ।

तथा च प्रकृतानुमित्यनतिरिक्तविषयकबोधनिष्ठप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वावच्छिन्न" जन्यतानिरूपिता अथ चाऽवयवत्वपर्याप्त्यवच्छेदकयत्किंचिद्धर्मव्यापकविषयताकान्यज्ञानवृत्तित्वावच्छिन्नभिन्ना या जनकता तदवच्छेदकविषयतेत्यादि ।

ननु धूमादालोकवान्पर्वतोवन्हिमानित्यादौ धूमादिति हेत्ववयवेऽतिव्याप्तिः, धूमज्ञानज्ञाप्यत्वविषयकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकताया अपि तत्र हेतुत्वरूपयत्किंचिद्धर्मव्यापकविषयिताकान्यज्ञानवृत्तित्वावच्छिन्नभिन्नत्वात् इति चेन्न । हेत्ववयवसमानाकारप्रतिज्ञाघटकधूमादिति भागस्य विवक्षितहेतुत्वानाक्रान्तत्वेन तद्विषयकज्ञानस्य हेतुत्वव्यापकविषयताकान्यत्वात् । प्रतिज्ञाघटकधूमादितिभागज्ञानवृत्तिजनकतामपेक्ष्य धूमादिति हेत्ववयवविषयकज्ञानवृत्तिजनकताया अभेदात् । तथा च तादृशधर्मो हेत्ववयवादिवृत्तिसमुदायत्वं, तत्र च न प्रतिज्ञाद्येकदेशमात्रविषयकज्ञानविषयत्वं, आनुपूर्वीसाम्येऽपि समुदायत्वस्य भिन्नत्वात् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



केचित्तु यत्र प्रतिज्ञैकदेशस्यापि कथंचित्प्रतिज्ञासमानार्थकत्वं संभवति तत्रैकदेशेऽतिप्रसंगवारणायाऽवयवाऽघटकत्वनिवेशनमावश्यकमित्याहुः ।

---

ननु अवयवत्वं न्यायान्तर्गतत्वघटितं तत्पर्याप्त्यवच्छेदकं च न पर्वतोवन्हिमानिति वाक्यत्वं तस्योदासीनसाधारण्यात् , किंतु तत्तद्वाक्यत्वं तथा च तत्तत्प्रतिज्ञाविषयतानामेव तद्व्यापकत्वात्तन्निरूपकान्यज्ञानवृत्तित्वस्योदासीनज्ञानसाधारणकारणतायां सत्वादसंभव इत्यतआह । अवयवत्वं चेदमिति । प्रतिज्ञाद्यघटकत्वदलसत्वेन धूमादित्येकदेशसमुदायत्वस्याऽवयवत्वपर्याप्त्यवच्छेदकत्वेपि तद्व्यावृत्तिः । नचोदासीनवाक्यवृत्तिविषयताया अपि तादृशानुपूर्व्यवच्छिन्न विषयतात्वेन व्यापकत्वसंभवान्न्यायान्तर्गतत्वोपादानेपि न क्षतिरिति वाच्यम् । एकदेशविषयताया विषयतात्वेन व्यापकतया प्रतिज्ञाघटकधूमादिति भागविषयताया वा तादृशानुपूर्व्यवच्छिन्नविषयतात्वेन व्यापकत्वादतिप्रसंग इति स्वविषयतात्वेन व्यापकतानिवेशाद्वा,वाक्यभेदेन विषयताभेदात् ।

केचित्तु तादृशजन्यतायामेवाऽवयवाघटकत्वं,तच्च तादृशबोधवृत्तियत्किंचिज्जन्यताशून्यज्ञान वृत्तिजन्यत्वानिरूपकत्वं,तत्प्रतिज्ञैकदेशधूमादिति पदज्ञानवृत्तिजनकतायास्तादृशजन्यताशून्यधूमविशिष्टहेतुत्वमात्रज्ञानवृत्तिजन्यतानिरूपकत्वान्नातिप्रसंगइत्याहुः ।

नन्वेवमग्रे पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिअनुमित्यन्यूनविषयकत्वनिर्वचनविरोध इत्यत आह । विशेष्यदलेति । उभयघटकभागद्वयाघटितत्वेत्यर्थः । व्यावृत्तिरिति । अनतिरिक्तविषयकत्वेत्यादिः । तादृशेति । पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपाऽन्यूनविषयकत्वावच्छिन्नजन्यतानिरूपितेत्यर्थः । तत्परित्यागस्य । प्रतिज्ञाघटकत्वदलपरित्यागस्य । प्रकृतानुपयुक्तत्वमिति । तथाचाऽवयवाघटकेत्यपि व्यर्थमेव,परन्तु इदानीं उभयघटकेत्यादिदलवैयर्थ्यकथनेन व्यावृत्तिःसंभवतीतिअवयवाघटकत्ववैयर्थ्यसंभवेपि तत्कथनमिदानीमनुपयुक्तं तदकथनेपि व्यावृत्तिसंभवादित्यर्थः ।

केचित्विति । अदितिः पुत्रवतीत्यादौ दितिः पुत्रवतीत्येकदेशवारणाय समानेति । यत्र रमाधवः पूज्यः, सदाशिवो वन्द्यः इत्यादौ । प्रतिज्ञैकदेशस्यापि । माधवः पूज्यः, शिवो वन्द्य इत्यस्यापि । रमेश्वरः पूज्य इत्यादौ मेश्वरः पूज्य इत्यादितथाविधबोधजनकतावच्छेदकत्वेन तत्रेच्छाविषयविषयितां निवेश्य दूषयति । प्रतिज्ञेति । तन्मात्रस्य । एकदेशमात्रस्य । तथाविधबो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



१८ यद्यपि सर्वमभिधेयं प्रमेयमित्यादावतिरिक्ताऽप्रसिद्धिः

तदसत्। प्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधकताया एकदेशे संभवेपि तन्मात्रस्य तथाविधबोधपरत्वाभावात्, तथात्वे समुदायप्रयोगानुपपत्तेः। कथंचित्प्रयोगेऽपि वैयर्थ्येन तत्र समुदायमन्तर्भाव्य न्यायत्वानंगीकारात्। अप्रकृतार्थपरवाक्यवारणाय च वास्तवतथाविधतात्पर्यसत्ताया लक्षणे निवेशनीयतया एकदेशमात्रस्य तादृशार्थपरत्वाभावेनाऽतिप्रसंगानवकाशादिति। हेत्वन्तस्येति। कथिताऽन्यूनविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतानिवेशेन तत्तद्भागप्रतिपाद्यविशिष्टार्थबोधजनकत्वमादाय केवलहेत्वादावतिव्याप्तिर्न संभवति तादृशजनकताश्रयत्किंचिज्ज्ञानविषयवर्णसमुदायत्वस्य तत्रापर्याप्तेरतो निगमनमात्रं हेतुमात्रं चोपेक्षितम्।

अन्यूनाऽनतिरिक्तविषयकेत्यस्य प्रकृतानुमितिविषयस्यान्यूनविषयः सन्ननतिरिक्तो विषयो यस्येति व्युत्पत्तेरनुमितिविषयनिष्ठभेदप्रतियोगितानवच्छेदकत्वे सति अनुमितिविषयातिरिक्तावृत्ति यद्विषयत्वं तत्त्वमिति यथाश्रुतार्थमाक्षिपति। यद्यपीति। यद्यपि प्रकृतपक्षताव-

---

धपरत्वाभावात्। प्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधपरत्वाभावात्। तथात्वे। तादृशविशिष्टार्थबोधपरत्वे। यदि मेश्वरः पूज्यः इत्यादिवाक्यात्तादृशबोधोजायतामितीच्छायामपि रमेश्वरः पूज्य इति प्रतिज्ञा तत्र तत्सार्थक्यशकां निराचष्टे। कथंचिदिति। अनवधानतयेत्यर्थः। न्यायत्वानंगीकारादिति। तथाचाऽवयवाघटकत्वं व्यर्थमेवेतिभावः। ननु तत्परत्वानिवेशे तत्पदसार्थक्यं स्यादित्यतस्तत्परत्वस्यावश्यकतामाह। अप्रकृतार्थपरेति। तच्च नानार्थकहर्यादिपदघटितं लक्षणया जलाद्यर्थकवन्ह्यादिपदघटितं च बोध्यम्।

वास्तवतथाविधतात्पर्यसत्ताया इति। तत्तदर्थबोधकत्वप्रकारकस्वानुकूलकृतिसमानाधिकरणेच्छाविशेष्यताया इत्यर्थः इदं वाक्यममुमर्थं बोधयतु इति वक्तुरिच्छयैव वाक्यप्रयोगाद्वाक्ये तादृशतात्पर्यसत्तानिर्वाहः। दीधितौ-हेत्वन्तस्याऽयमादिनिगमनान्तस्येति। अयं तस्मात्तथेत्यस्येत्यर्थः। वारणायेति। तस्य पक्षे साध्यवैशिष्ट्यावगाहित्वरूपान्यूनविषयकबोधजनकत्वादिति भावः। तत्। अनतिरिक्तपदम्।

दीधितौ—हेतोर्निगमनस्य च वारणाय इत्येव कथं नोक्तमित्यत आह। कथितेति। पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपेत्यर्थः। तत्तद्भागेति। धूमादालोकवान्पर्वतोवन्हिमानिति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



च्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकयत्किंचिदनुमित्यविषयविषयकत्वं पर्वतोवन्हिमानित्यादिप्रतिज्ञाजन्यानखिलबोधानामेवेति तादृशानुमितिविषयत्वसामान्याभावो विवक्षणीयः, तथा च केवलाभिधेयत्वाद्यवच्छिन्नपक्षकस्थलेप्यतिरिक्ताऽप्रसिद्धिरस्त्येव। तथापि अप्रसिद्धिं स्फुटीकर्तुं अभिधेयत्वाद्यवच्छिन्नपक्षकप्रमेयत्वादिसाध्यकस्थले विश्वमेवाऽनुमितिविषय इत्येतल्लाभाय सर्वमित्युक्तम्। सर्वेभ्यो दर्शपूर्णमासावित्यत्रेव प्रक्रान्तकतिपयपदार्थमात्रवृत्तिसर्वत्वावच्छिन्नतात्पर्येणाऽपि विशेष्यवाचकपदान्तराऽसमभिव्याहृतसर्वपदप्रयोगसंभवात्सर्वंप्रमेयमित्युक्तावनुमितिविषयतायाः केवलान्वयित्वाऽलाभादभिधेयमित्युक्तम्। एवं च किंचिद्धर्मावच्छिन्नांशेऽभेदेनस्वार्थविशेषणकबोधपरसर्वशब्दस्य तद्धर्मव्यापकविधेयव्याप्यसर्वत्वबोधकताव्युत्पत्तेरभिधेयत्वव्यापकसर्वत्वलाभान्नानुमितेः कतिपयवस्तुमात्रविषयकत्वशंकेति भावः। अतिरिक्ताप्रसिद्धिः। प्रकृतानुमितिविषयातिरिक्ताऽप्रसिद्धिः।

---

प्रतिज्ञाघटकहेतुसमानार्थकभागेत्यर्थः। तथाचाऽन्यूनानतिरिक्तविषयकेत्यादिनिरुक्तौ पक्षे साध्यविषयकत्वावच्छिन्नजन्यतोपादानस्यावश्यकतयाऽनतिरिक्तविषयकत्वानुपादाने न कुत्रापि हेतावतिव्याप्तिरित्यर्थः। तत्तद्भागेत्यस्य तत्तद्धेतावित्यर्थः। एतच्च प्रतिज्ञाद्यघटकत्वकथनं निरुक्तान्यूनविषयकत्वावच्छिन्नजन्यतानिवेशलाभायैव। तत्र पर्याप्त्यनिवेशान्नाऽनतिरिक्तपदवैयर्थ्यम्।

सर्वमभिधेयं प्रमेयमिति दीधितिकृदुक्तसर्वपदवैयर्थ्यं शंकते। **यद्यपीति।** **सामान्याभावोविवक्षणीय** इति। तथा च सामान्याभावविवक्षणे सर्वपदं व्यर्थमिति भावः। **तथा च।** सामान्याभावविवक्षणे च। **केवलेति।** अभिधेयत्वसामानाधिकरण्येन तत्तदभिधेयेऽनुमितिसंभवेपि तादृशानुमितिविषयत्वसामान्याभावस्याऽप्रसिद्धेरित्यर्थः। **स्फुटीकर्तुमिति।** सामान्याभावपर्यन्तविवक्षणेपि शिष्येण ग्राहयितुमित्यर्थः। सर्वमभिधेयमित्यत्राऽभिधेयपदप्रयोजनमाह। **सर्वेभ्य इति।** पुत्रपौत्रादिस्वर्गपश्वादिसर्वफलोद्देश्येनेत्यर्थः। कर्तव्यमिति शेषः। **प्रक्रान्तेति।** पूर्ववाक्यजन्यशाब्दबोधविषयत्वं पूर्वोपस्थितत्वं वा प्रक्रान्तत्वम्। यद्यपि मिलितानां तावत्फलानां न दर्शपौर्णमासकर्तव्यताप्रयोजककामनाविषयत्वं, सर्वपदेन मिलितत्वेन फलानुपस्थापनात्। तथापि यावद्धर्मावच्छिन्नाः प्रक्रान्ताः प्रत्येकं तावद्धर्माव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न च कोऽप्यप्रसिद्ध्या प्रमेयं न वेति विप्रतिपत्तेः संशयस्य चाऽयोगान्न-तादृशी प्रतिज्ञा, प्रकृतानुमितिविषयतासमव्याप्तविषयताकत्वं,

प्रमेयत्वं पक्षनिष्ठाभावप्रतियोगि नवेति संशयसंभव इत्यतस्त-त्संग्रहायाऽन्यूनानतिरिक्तविषयकत्वमन्यथा निर्वक्ति । प्रकृतेति । स्वविषयताव्यापकप्रकृतानुमितिविषयताव्यापकविषयिताकत्वमित्यर्थः । स्वविषये अनुमितिविषयान्यूनत्वस्य स्वविषयत्वे तद्विषयताव्यापकत्व-पर्यवसितत्वात्, स्वविषये अनुमितिविषयानतिरिक्तत्वस्य च तद्विषयत्वे स्वविषयताव्यापकत्वपर्यवसितत्वादिति भावः ।

यद्यपि समूहालंबनात्मकपर्वतपक्षकवन्हिविधेयकानुमितिविषयतायाः विश्ववृत्तितया पर्वतोवन्हिमानिति प्रतिज्ञाजन्यबोधो न तादृशानुमिति-विषयतासमनियतविषयताक वाक्यान्तरसहिततद्ज्ञानस्य समूहालं-वनबोधजनकयत्किंचिद्ज्ञानविषयवर्णसमुदायत्वं न तन्मात्रपर्याप्तं यत्किंचित्प्रकृतानुमितिव्यक्तिविषयतासमनैयत्यस्य विवक्षणेऽपि च निग-मनाद्यतिव्याप्तिर्दुर्वारैव, तज्जन्यबोधस्यापि पर्वतोवन्हिमान् धूमज्ञान-ज्ञाप्यवन्हिमांश्चेत्याकारकसमूहालंबनानुमितिविषयतासमनियतविषयता-कत्वात् । तथापि प्रकृतपक्षकप्रकृतसाध्यव्याप्यवत्तापरामर्शत्वावच्छिन्न-जनकतानिरूपितजन्यतावच्छेदकविषयतात्वेन यद्विषयतासमनैयत्यं तत्त्वस्य विवक्षितत्वान्न दोषः ।

---

च्छिन्नानामेवोपस्थितौ वाक्यभेदप्रसंग इति तावत्समुदायत्वरूपसर्वत्वेनोप-स्थितिमात्रं, फलता तु प्रातिस्विकरूपेणेति बोध्यम् । अत एव प्रत्येकफल-कामस्यैव तत्राधिकार इति सिद्धान्तः । सर्वत्वावच्छिन्नेति । यावत्वावच्छि-न्नेत्यर्थः । केवलान्वयित्वाऽलाभादिति । विशेष्यवाचकपदाऽसमभिव्याहृत-सर्वपदस्य अन्योन्याभावप्रतियोगितानवच्छेदकविधेयव्याप्यपर्याप्तिकयावत्वाव-च्छिन्ने शक्तिः । सर्वं प्रमेयमित्यत्रअन्योन्याभावप्रतियोगितानवच्छेदकप्रमेयत्व-व्याप्यपर्याप्तिकयावत्ववन्तः प्रमेयाऽभिन्ना इति बोधः । एवं च अन्योन्याभावप्रतियोगितानवच्छेदकप्रमेयत्वव्याप्यपर्याप्तिकयावत्वस्य कतिपयपदा-र्थेष्वपि सत्वान्न केवलान्वयित्वलाभ इतिभावः । एवंचेति । अभिधेय-पदोपादाने चेत्यर्थः । किंचिद्धर्मावच्छिन्नांशे । अभिधेयत्वावच्छिन्ने उद्देश्यतावच्छेदकावच्छिन्ने इति यावत् । स्वं सर्वपदं । तद्धर्मव्यापकेति । उद्देश्यतावच्छेदकव्यापकेत्यर्थः व्युत्पत्तेरिति । उद्देश्यवाचकपदसमभि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रकृतानुमितिप्रकारतासमव्याप्तप्रकारताकत्वं वा वक्तव्यमिति वाच्यम् ।

---

व्याहृतसर्वशब्दस्य उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिकयावत्त्वावच्छिन्ने शक्तिरिति व्युत्पत्तिः । इति भाव इति । सर्वमभिधेयं प्रमेयमित्यत्र अभिधेयत्वव्यापकप्रमेयत्वव्याप्यपर्याप्तिकयावत्त्वाश्रयोऽभिधेयं प्रमेयाभिन्नमिति बोधः । तथा च जगन्मात्रवृत्तियावत्त्वमेवाऽभिधेयत्वव्यापकं, न कतिपयपदार्थमात्रवृत्तियावत्त्वमिति तादृशसर्वपदस्य न कतिपयवृत्तियावत्त्वबोधकत्वमिति तत्त्वम् ।

दीधितौ—न चेति । वाच्यमित्यनेनान्वयः । **कोटीति** । प्रमेयत्वाभावरूपेत्यादिः । सन्दिग्धे एव न्यायप्रवृत्तेर्विप्रतिपत्तेरनावश्यकत्वादाह । **संशयस्य चेति** । सन्दिग्धसाध्यके धर्मिण्येव न्यायप्रवृत्तेरिति भावः । संशयमाह । प्रमेयत्वमिति । तत्संग्रहाय । सर्वमभिधेयं प्रमेयमिति प्रतिज्ञासंग्रहाय । द्विधाऽनुमितिविषयतानिवेशे गौरवादाह । **स्वेति** । स्वं शाब्दबोधः । अनुमितिविषयताव्यापकत्वसंपत्तये प्रकृतेति । तादृशविषयिताकशाब्दबोधजनकवाक्यत्वं फलितम् । **समूहालंबनात्मकेति** । पर्वतो वन्हिमान् सर्वमभिधेयं प्रमेयमित्याकारकेत्यर्थः । **तादृशानुमितीति** । समूहालंबनानुमितीत्यर्थः । समूहालंबनशाब्दबोधविषयतायास्तत्समनैयत्येप्याह । **वाक्यान्तरसहितेति** । सर्वमभिधेयं प्रमेयमिति वाक्यसहितेत्यर्थः । **तद्ज्ञानस्य** । पर्वतो वन्हिमानितिप्रतिज्ञाज्ञानस्य । निष्ठत्वं षष्ठ्यर्थः, अन्वयश्चास्य समुदायत्वे । **न तन्मात्रपर्याप्त** । न प्रतिज्ञामात्रपर्याप्तं किन्तु वाक्यान्तरसहितप्रतिज्ञायां । तथा च न प्रतिज्ञासंग्रह इति भावः । **अथेदमसंगतम्**, वाक्यान्तरसहित प्रतिज्ञाजन्यसमूहालंबनबोधनिष्ठसाध्यविशिष्टपक्षविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रतिज्ञामात्रविषयकयत्किंचिद्ज्ञानीयविषयताश्रयवर्णसमुदायत्वस्य प्रतिज्ञामात्रे सत्वात् । मैवम् । तादृशबोधनिष्ठवन्हिसंबन्धिविषयकत्वावच्छिन्नजन्यतामादायैकदेशेऽतिव्याप्तिवारणाय तादृशबोधनिष्ठा या या जन्यतेति विवक्षणावश्यकतया प्रतिज्ञासंग्रहो दुःशक एव । नचैकदेशस्य न्यायावयववदलेनैव वारणं शंक्यम् । प्रतिज्ञाद्यघटकत्वाघटितस्यैव तस्य निवेश इत्यभिप्रायात् । **यत्किंचित्प्रकृतेति** । असमूहालंबनप्रकृतेत्यर्थः । **तथापीति** । **यद्विषयतेति** । यत्पदं प्रतिज्ञाजन्यशाब्दबोधसामान्यपरम् । तथा च यादृशशाब्दबोधविषयत्वं प्रकृतपक्षकप्रकृतसाध्यव्याप्यवत्तापरामर्शजन्यतावच्छेदकविषयतासमनियतं तादृशविषयत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयताश्रयवर्णसमुदायत्वं फलितम् ।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सकलाभिधेयवृत्तिधर्मवत् सकलाभिधेयनिष्ठात्यन्ताभावाप्रतियोगि आकाशाभाववद्वा इदं द्रव्यमित्यादौ विशिष्टपक्षबोधके उपनयेऽतिव्याप्तेः ।

नन्वेवं सति उक्तस्थलीयोपनयेऽतिव्याप्तिः, तज्जन्यबोधस्यापि विश्वविषयकत्वेन तथाविधानुमितिविषयतासमनियतविषयताकत्वादित्यतो विषयतापदस्य प्रकारत्वाभिप्रायेणान्यथा तदर्थं निर्वक्ति । प्रकृतेति । तादृशोपनयजन्यबोधे प्रकारीभवतोऽभावत्वादेस्तादृशानुमितावप्रकारत्वान्न तत्प्रकारतायाः समनैयत्यमिति नातिव्याप्तिरिति भावः । सकलेति । सकलाभिधेयवृत्तिधर्मवदिदं द्रव्यमिति योजना । तादृशानुमिताविवैतत्स्थलीयोपनयजन्यबोधे विश्वस्यैवाभिधेयत्वेन प्रकारतया तत्प्रकारतासमनैयत्यसत्त्वमेवेति भवत्यतिव्याप्तिरिति भावः । ननु विशेषणानवच्छिन्नप्रकारतानां समनैयत्यं विवक्षणीयमतो नातिव्याप्तिः, उपनयजन्यबोधे अभावत्वादौ तादृशप्रकारतासत्त्वादुक्तानुमितेस्तादृशप्रकारतायाश्च तत्राऽसत्त्वादित्यतोऽनुमितावपि तेषां तथाविधप्रकारताघटनाय स्थलान्तरेऽतिव्याप्तिमाह । सकलाभिधेयेति । अभावत्वप्रतियोगित्वत्वादीनां स्वरूपतः पक्षतावच्छेदकत्वाद् भाति तथानुमितिरिति भावः ।

---

**एवंसति** । अनुमितिविषयतासमव्याप्तविषयताकत्वनिवेशे सति । **उक्तस्थलीयोपनये** । सर्वमभिधेयं प्रमेयमित्यादिस्थलीयोपनये । प्रमेयत्वव्याप्यहेतुमत्सर्वमभिधेयमित्याकारके । **तज्जन्यबोधे** । उपनयजन्यबोधे । **तथाविधेति** । सर्वमभिधेयं प्रमेयमित्याकारकेत्यर्थः । **तदर्थं** । अन्यूनानतिरिक्तत्वदलार्थं । **प्रकृतेति** । प्रकृतपक्षसाध्यकेत्यर्थः । **दीधितौ**–**वक्तव्यमिति** । अन्यूनानतिरिक्तदलेनेत्यादिः । **तादृशेति** । प्रमेयत्वव्याप्यहेतुमत्सर्वमभिधेयमित्याकारकेत्यर्थः । **प्रकारीभवतः** । व्याप्तिघटकतयेत्यादिः । **तादृशेति** । सर्वमभिधेयं प्रमेयमित्याकारकेत्यर्थः । **तत्प्रकारतायाः** । अभावत्वप्रकारतायाः । **समनैयत्यमिति** अनुमितिप्रकारतासमनैयत्यमित्यर्थः । **तादृशानुमिताविवेति** । सर्वमभिधेयं प्रमेयमित्यनुमिताविवेत्यर्थः । व्याप्तिघटकीभूताऽभावत्वादीनामपि अनुमितौ अभिधेयत्वेन प्रकारत्वमिति सूचनाय दृष्टान्तकथनं । **एतत्स्थलीयोपनयजन्यबोधे** इति । सकलाभिधेयवृत्तिधर्मवदिदं द्रव्यमितिस्थलीयतादृशधर्मवदिदं द्रव्यत्वव्याप्यवदित्युपनयजन्यबोधे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



द्रव्यमिति विपरीतकोटिप्रसिद्ध्यर्थम् । विशिष्टपक्षबोधक इति । उपनयस्थेदंपदेन विशेष्यमात्रपरामर्शेऽन्यूनविषयकत्वं न संभवतीति-भ्रमनिराकरणाय । व्याप्तिशरीरे साध्यसाधनप्रकारेणैव तदधिकरणान्तर्भावः नत्वधिकरणत्वेनापि इत्यनुमितौ तस्य तत्त्वस्य वा स्वरूपतः प्रकारत्वविरहेपि नासंगतिः । हेतुरप्यत्रेदन्त्वं, समवायेन द्रव्यमेव वा बोध्यम् । गुणादेस्तत्त्वे हेतुतावच्छेदकगुणत्वादेः स्वरूपत उपनयजन्यबोधे भाने कथितप्रकारतासमनैयत्यानुपपत्तेः ।

---

इत्यर्थः । विश्वस्यैवाभिधेयत्वेन प्रकारतयेति । उक्तस्थले तादृशवृत्तिधर्मनिष्ठाधेयत्वे निरूपितत्वसंबन्धेनाऽभिधेयस्य प्रकारत्वादभिधेयत्वेनैव विश्वस्य प्रकारत्वं बोध्यम् । तत्प्रकारतासमनैयत्यं । अनुमितिप्रकारतासमनैयत्यं । विशेषणानवच्छिन्नप्रकारतानां । निरवच्छिन्नानुमितिप्रकारतानां । तादृशप्रकारतासत्वात् । निरवच्छिन्नप्रकारतासत्वात् । उक्तानुमितेरिति । सकलभिधेयवृत्तिधर्मवदिदं द्रव्यमित्यनुमितेरित्यर्थः । निरूपितत्वं षष्ठ्यर्थः । अन्वयश्चास्य प्रकारतायां । तादृशप्रकारतायाश्च । निरवच्छिन्नप्रकारतायाश्चेत्यर्थः । तत्र । अभावत्वादौ । असत्वादिति । अभिधेयत्वेनैव भानादिति भावः । तेषां । अभावत्वादीनां । तथाविधेति । विशेषणानवच्छिन्नेत्यर्थः । दीधितौ—सकलाभिधेयेति । सकलाभिधेयनिष्ठाऽत्यन्ताभावाप्रतियोगि आकाशाभाववदिदं द्रव्यं इत्यादावित्यर्थः अत्र । अनुमितौ । तथानुमितिरिति । विशेषणानवच्छिन्नप्रकारताकानुमितिरित्यर्थः । प्रमेयत्वानुषंगत्यागे बीजमाह । विपरीतेति । दीधितौ-विशिष्टपक्षबोधके उपनये इति । द्रव्यत्वव्याप्यवत्सकलाभिधेयनिष्ठाऽत्यन्ताभावाप्रतियोगि आकाशाभाववदिदमित्याकारके इत्यर्थः । अतिव्याप्तेरिति । अनुमितौ उपनये च स्वरूपतः प्रकाराणां तुल्यत्वादिति भावः । पक्षबोधकमित्येव कथं नोक्तमित्यत आह । विशेष्यमात्रपरामर्शे इति ।

अन्यूनविषयकत्वं अनुमितिविषयताव्यापकविषयताकत्वं समनैयत्यघटकं । ननु निरवच्छिन्नप्रकारतानां समनैयत्यनिवेशे उक्तोपनयेऽतिव्याप्तिर्न संभवति, तस्य व्याप्तिबोधकत्वेन तद्घटकहेतुसामानाधिकरण्य-साध्यसामानाधिकरण्य-घटकाधिकरणानां हेत्वधिकरणत्वेन साध्याधिकरणत्वेनैव निवेशे तादृशाधिकरणत्वस्याऽधिकरणतात्वस्य वा उपनयजन्यबोधे स्वरूपतोभानेनाऽनुमितौ-तद्भानेन निरवच्छिन्न "अनुमिति" प्रकारतासमनैयत्याभावात्, इत्याशंकां निरस्यति । व्याप्तिशरीरे इति । साध्यसाधनप्रकारेणैवेति । साध्येन-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयत्वं तदन्यूनविषयत्वम्।

नचाऽभेदेन विषयतासमनैयत्यस्योक्तावनुमितिविषयतात्वसमनियतस्वविषयतात्वकत्वोक्तौ नायं दोष इति वाच्यम् । हेत्वर्थघटितार्थकप्रतिज्ञाघटकन्यायान्तर्गतहेतुजन्यबोधविषयतायामनुमितिनिरूपितविषयतात्वाभावादनुमितिविषयतात्वव्याप्यस्वविषयतात्वकत्वाभावादेव तादृशबोधवारणसंभवेनान्यूनविषयकत्वांशवैयर्थ्यापत्तेः ।

---

साधनेनैव वेत्यर्थः । **तदधिकरणेति** । साध्याधिकरण-हेत्वधिकरणेत्यर्थः । एवकारव्यवच्छेद्यं स्पष्टयति । **नत्विति** । **तस्य** तत्वस्य **वेति** । अधिकरणत्वस्य अधिकरणतात्वस्य वेत्यर्थः । **नाऽसंगतिः** । नातिव्याप्त्यसंगतिः । **तथात्वे** । हेतुत्वे । **कथितप्रकारतेति** । अनुमितिप्रकारतेत्यर्थः । तथाचानुमितौ गुणत्वादेः स्वरूपतोऽभानेनोपनयजन्यबोधे च स्वरूपतस्तद्भानेनाऽतिव्याप्त्यलग्नकतापत्तेरितिभावः । उक्तोपनयेऽतिव्याप्तिं निराकर्तुं शंकते । **नचेति** । **अभेदेन विषयतासमनैयत्यस्योक्ताविति** । समानाकारकविषयतायाश्चैक्यमितिमतेनेदम् । एवं चाऽनुमितिविषयत्वोपनयजन्यबोधविषयत्वयोर्निरूप्यनिरूपकभावभेदेन महान् भेद इतिसमनैयत्यविरहान्नातिव्याप्तिरिति भावः । एवं निरूपकभेदेन विषयताभेदादित्यपि बोध्यम् । एवं शाब्दबोधः । उक्तोपनयेऽतिव्याप्तिवारणेऽपि अन्यूनविषयकत्वदलवैयर्थ्यं स्यादित्याह । **हेत्वर्थघटितार्थकप्रतिज्ञाघटितन्यायान्तर्गतेति** । धूमादालोकवान् पर्वतो वन्हिमान् धूमादितिन्यायान्तर्गतेत्यर्थः । **हेतुजन्यबोधविषयतायामिति** । धूमादितिवाक्यजन्यबोधविषयतायामित्यर्थः । **अनुमितिनिरूपितेति** । धूमादालोकवान् पर्वतोवन्हिमानित्यनुमितिनिरूपितेत्यर्थः । **स्वविषयतात्वकत्वाभावादेवेति** । अनतिरिक्तत्वाभावादेवेत्यर्थः । **तादृशबोधेति** । हेत्ववयवजन्यबोधेत्यर्थः । **अन्यूनविषयकत्वांशवैयर्थ्यापत्तेरिति** । निगमनार्थबोधस्य सर्वस्यापि अनुमितिविषयताशालित्वेनाऽन्यूनविषयकत्वमात्रोपादाने निगमनवारणाऽसंभवादनतिरिक्तविषयकत्वमावश्यकमित्याशयेनाऽन्यूनविषयकत्वमात्रवैयर्थ्याभिधानं बोध्यम् । प्रतिज्ञाहेत्वर्थसमूहालंबनमादाय हेत्वन्तवारणायापि अनतिरिक्तविषयकत्वं बोध्यम् । हेतुजन्यबोधविषयतायां अनुमितिनिरूपितविषयतात्वाभावं द्रढयति । **नहीति** । **वहिर्भूतविषयता** । केवलहेत्वर्थविषयता । **अनुमितिनिरूपितेति** । तथा च नातिव्याप्तिरिति भावः । **समूहालंबनेति** । धूमादालोकवान् पर्वतोवन्हिमान् इति समूहालंबनेत्यर्थः । **अनुमितिनिरूपितत्वमादायेति** । तथा च वहिर्भूतविषयताया-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नहि साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नविषयताबहिर्भूतविषयता अनुमितिनिरूपिता । समूहालम्बनानुमितिनिरूपितत्वमादाय नातिप्रसङ्गावकाशः प्रकृतपरामर्शजन्यतावच्छेदकविषयतात्वस्यैव निवेशनीयत्वादन्यथाऽसंभवापातादिति ।

उपनयविशेषेऽतिव्याप्त्यभिधानं चोपलक्षणपरम् । अन्यूनविषयकत्वस्य निरुक्तार्थकत्वे सर्वस्मात्कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेत्ववयवेऽव्यतिव्याप्तिर्बोध्या तज्जन्यबोधविषयताया विश्ववृत्तित्वेनानुमितिविषयताऽव्यापकत्वात् । एवं तादृशान्यूनानतिरिक्तविषयकत्वस्य किंचिज्जन्यतानवच्छेदकत्वेन तदवच्छिन्नजन्यताविवक्षणाऽसंभवेन प्रतिज्ञाहेतुजन्यसमूहालंबनबोधमादाय तन्निष्ठहेत्वर्थविषयकत्वावच्छिन्नजन्यतानिरूपितजनकताश्रये धूमादालोकवान् पर्वतो वन्हिमानित्यादौ हेत्ववयवेऽतिव्याप्तिर्दुर्वारा, तस्या अनवच्छिन्नप्रकारताव्यापकतादृशप्रकारताकत्वविवक्षयापि वारणाऽसंभवादित्यपि बोध्यम् । एतद्दोषवारणाय प्रथमतोऽन्यूनविषयकत्वमन्यथा निर्वक्ति । तथापि प्रकृतेति ।

---

मपि अनुमितिनिरूपितत्वं सुलभमिति भावः । अन्यथा । प्रकृतपरामर्शजन्यतावच्छेदकविषयत्वानिवेशे । असंभवापातादिति । पूर्वोक्तसमूहालंबनानुमितिमादायेत्यादिः । उपनयविशेषे । द्रव्यत्वव्याप्यवत्सकलाभिधेयनिष्ठात्यन्ताभावाप्रतियोग्याकाशाभाववदिदमित्युपनये । निरुक्तार्थकत्वे । अनुमितिविषयताव्यापकविषयताकत्वरूपत्वे । तज्जन्येति । हेत्ववयवजन्येत्यर्थः । पूर्वोक्तसमूहालंबनमादाय दूषणान्तरमाह । एवमिति । तदवच्छिन्नेति । अन्यूनविषयकत्वावच्छिन्नेत्यर्थः । तन्निष्ठेति । तादृशसमूहालंबनबोधनिष्ठेत्यर्थः । तस्य । अतिप्रसंगस्य । एतद्दोषवारणाय । सर्वस्मात्कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेत्ववयवेऽतिव्याप्तिवारणाय । प्रकृतानुमितिविषयताव्यापकत्वस्य तज्जन्यबोधीयविषयतायां सत्वात् ।

**प्रथमत** इति । अनतिरिक्तविषयकत्वनिर्वचनात्पूर्वमित्यर्थः । यद्यपि अतिरिक्ताप्रसिद्धिनिबन्धनदोषोद्धाराय प्रथमतोऽनतिरिक्तविषयकत्वनिर्वचनमेवोचितं । तथापि अन्यूनविषयकत्वस्य प्रकृतानुमितिविषयताव्यापकविषयताकत्वरूपत्वे वक्ष्यमाणाऽनतिरिक्तविषयकत्वनिवेशेपि अनिस्तारात्प्रथमतोऽन्यूनविषयकत्वं निर्वक्तुमुपक्रान्तम् । अत्र अन्यूनविषयकत्वं अनुमितिविषयताव्यापकविषयताकत्वम् । अनतिरिक्तविषयकत्वं च शाब्द

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एतच्च प्रकृतपक्षतावच्छेदकविशिष्टेत्यर्थकम्, तदनुपादाने प्रमेया-द्वाच्यत्ववानयं प्रमेयः प्रमेयादित्यादौ हेत्ववयवे, यत्किंचिद्धर्मावच्छिन्नत्वो-पादानेपि घटान्यत्ववद्रूपघटान्यतरस्माद् घटान्यत्ववत्सधर्मा घटो घटा-न्यत्ववानित्याकारिका या सामानाधिकरण्यसंबन्धेन घटान्यत्वसाध्यक-प्रतिज्ञा तद्घटितन्यायान्तर्गते रूपघटान्यतरत्वावच्छिन्नांशे सामाना-धिकरण्यसंबन्धेन विशेषणतापन्नघटान्यत्वघटिततादृशसंबन्धावच्छिन्न-हेतुताके विशिष्टान्यतररूपहेतुप्रतिपादके हेत्ववयवेऽतिव्याप्तिः।

---

विषयिताव्यापकानुमितिविषयिताकत्वम्। एतच्च। प्रकृतेति च। तथा च प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगा-हित्वमर्थः। एवं च नोक्तहेत्ववयवेऽतिव्याप्तिः, तज्जन्यबोधस्य विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यानवगाहित्वादिति भावः। दीधितौ-तदन्यूनविषयकत्वं प्रकृतानुमित्यन्यूनविषयकत्वम्। तदनुपादाने। पक्षतावच्छेदकवैशिष्ट्यानु-पादाने। हेत्ववयवे। प्रमेयादित्याकारकहेतुवाक्यघटक"प्रमेय" इत्येकदेशे इत्यर्थः। अतिव्याप्तिरितिपरेणान्वयः। तज्जन्यबोधे पञ्चम्यर्थे प्रमेयभाने प्रमेयत्वस्यापि भानेन साध्यतावच्छेदकीभूतप्रमेयत्वत्वविशिष्टप्रमेयत्वस्वरूप-साध्यस्य प्रमेयरूपपक्षे वैशिष्ट्यावगाहिजनकत्वस्य प्रमेयादिति भागघटक"प्रमेये"-इतिभागे सत्वाद् भवत्यतिव्याप्तिरिति भावः। वस्तुतः तादात्म्येन प्रमेयस्य साध्यत्वे प्रमेयादिति हेतावेवाऽतिव्याप्तिः अन्यूनविषयकत्वदले संबन्धविशेषानिवेशस्य वक्ष्यमाणत्वात्। पक्षतावच्छेदकवैशिष्ट्यानिवेशेऽसंभवः, पक्षे साध्यवैशिष्ट्य-विषयताविलक्षणत्वस्य पक्षतावच्छेदकवैशिष्ट्यविषयतायां सत्वेन तादृशविषयता-शालित्वस्यैव प्रतिज्ञाजन्यबोधमात्रे सत्वादित्यस्मद्गुरुचरणाः।

ननु हेतुजन्यबोधस्य प्रमेयांशे निर्धर्मितावच्छेदककतया किंचिद्धर्मावच्छिन्न-विशेष्यकत्वं निवेश्यापि हेतावतिव्याप्तिर्वारयितुं शक्यते इत्यतः पक्षतावच्छेदक-वैशिष्ट्यनिवेशस्य स्थलान्तरे व्यावृत्तिमाह घटान्यत्वेति। तथा च पक्षता-वच्छेदकवैशिष्ट्यानिवेशे यत्किंचिद्धर्मावच्छिन्नत्वनिवेशेपि घटान्यत्ववद्रूप-घटान्यतरस्माद् घटान्यत्ववत्सधर्मा घटो घटान्यत्ववान् घटान्यत्ववद्रूपघटान्यतर-स्मादित्यत्र हेतौ "घटान्यत्ववद्रूपघटान्यतरस्मादित्यत्र" अतिव्याप्तिः, तत्र रूपघटान्यतरत्वरूपयत्किंचिद्धर्मावच्छिन्ने घटान्यत्वरूपसाध्यस्य भानेन यत्किं-चिद्धर्मावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिबोधजनकत्वस्य -

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सत्वात् अतस्तन्निवेशः। घटान्यत्ववदिति। अत्र घटान्यत्ववत्ता च स्वरूपसमवायोभयघटितसामानाधिकरण्यसंबन्धेन—तच्च स्वरूपेण घटभेदाधिकरणे समवायेन वृत्तित्वरूपं, घटान्यत्वं कपाले वर्तते, तत्र कपालरूपं घटश्च वर्तते, एवं च स्वरूपसमवायोभयघटितसामानाधिकरण्यसंबन्धेन घटान्यत्वविशिष्टं घटकपालरूपान्यतरत् तादृशान्यतरत्वावच्छिन्नज्ञानज्ञाप्यघटान्यत्वस्य सामानाधिकरण्यसंबन्धेन पक्षतावच्छेदक "घटक" त्वम्। सामानाधिकरण्यसंबन्धेनेति। स्वरूपसमवायोभयघटितसामानाधिकरण्यसंबन्धेनेत्यर्थः। घटान्यत्वसाध्यकेति। स्वरूपेण साध्यत्वे बाधः स्यात्। तद्घटितेति। प्रतिज्ञाघटितेत्यर्थः न्यायान्तर्गते। अस्य हेत्ववयवे इत्यनेनाऽन्वयः। रूपघटाऽन्यतरत्वावच्छिन्नांशे। कपालरूप-घटान्यतरस्मिन्। सामानाधिकरण्यसंबन्धेन। स्वरूपसमवायोभयघटितसामानाधिकरण्यसंबन्धेन। विशेषणतापन्नेति। विशेषणीभूतेत्यर्थः। घटान्यत्वघटितेति। तथा च सामानाधिकरण्यसंबन्धेन घटान्यत्वं हेतुतावच्छेदकघटकम्। हेतुतावच्छेदकसंबन्धमाह। तादृशसंबन्धावच्छिन्नेति। समवायघटितसामानाधिकरण्यसंबन्धावच्छिन्नेत्यर्थः। समवायसंबन्धेनाऽन्यतररूपहेतोः स्वरूपासिद्धत्वादिति ध्येयम्। विशिष्टेति। घटान्यत्वविशिष्टेति। हेत्ववयवे। हेतौ। घटान्यत्ववद्रूपघटान्यतरस्मादित्याकारके इति यावत्। अतिव्याप्तिरिति। रूपघटान्यतरत्वरूपयत्किंचिद्धर्मावच्छिन्ने घटान्यत्वरूपसाध्यस्य भानेन यत्किंचिद्धर्मावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिबोधजनकत्वस्य सत्वादित्युक्तमुपरिष्टात्। सामानाधिकरण्यसंबन्धेन रूपघटान्यतरमात्रस्य हेतुत्वे व्यभिचारमाह। घटत्वादाविति। रूपवतीत्यनेन हेतुसत्वं सूचितम्। तथा च घटादिरूपस्यापि अन्यतरान्तर्गततया सामानाधिकरण्येन तस्य घटत्वादौ सत्वेन तत्र च सामानाधिकरण्यसंबन्धेन घटान्यत्वरूपसाध्यविरहाद् भवति व्यभिचारः! व्यभिचारवारकतयेति। तथा च घटान्यत्वरूपविशेषणे दत्ते तद्वैशिष्ट्यं कपालादिरूपस्यैव, तस्य सामानाधिकरण्यसंबन्धेन घटत्वादावसत्वान्न व्यभिचार इति भावः। घटान्यत्वात्मकविशेषणस्येति। सार्थक्यमिति परेणान्वयः। घटान्यत्वमात्रं न हेतुः-सिषाधयिषाया अनुसरणापत्तेः। घटान्यत्वविशिष्टरूपस्य घटान्यत्वविशिष्टघटस्य वा तादृशसामानाधिकरण्यसंबन्धेन हेतुत्वे त्वाह। धर्मिभेदेनेति। रूपभिन्नस्य घटस्यापि प्रवेशेनेत्यर्थः। विशेष्यस्य। रूपघटान्यतरस्य। सार्थक्यमितिपरेणान्वयः। तादृशघटमात्रस्य विशेष्यत्वे घटान्यत्वंव्यर्थम्, तादृशसंबन्धेन घटस्य घटत्वे विरहेण व्यभिचारविरहात्। व्यर्थ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



**घटत्वादौ सामानाधिकरण्यसंबन्धेन रूपवति व्यभिचारवारकतया घटान्यत्वात्मकविशेषणस्य धर्मिभेदेन विशेष्यस्य घटान्यत्वसमानाधिकरणसत्तासमानाधिकरणे घटरूपादौ व्यभिचारवारकतया च विशेष्यतावच्छेदकस्य सार्थक्यमित्यवधेयम् ।**

---

विशेषणघटितधर्मावच्छेदेन व्याप्तेरसिद्धेः। तादृशरूपमात्रस्य विशेष्यत्वे पक्षमात्रविशेष्यकत्वनिवेशेनापि अतिव्याप्तिवारणं संभवतीत्यन्यतरदुपात्तम् ।

ननु सामानाधिकरण्यसंबन्धेन घटान्यत्वविशिष्टस्यैव तादृशसंबन्धेन हेतुत्वमस्तु, एवं च रूपघटान्यतरस्यैव घटान्यत्ववैशिष्ट्यरूपेण हेतुत्वसंभवे किमन्यतरत्वेन हेतुत्वेनेत्याशंकां समाधत्ते। घटान्यत्वसमानाधिकरणेति । व्यभिचारवारणायेति । तथा सति सत्ताया अपि कपालान्तर्भावेण घटान्यत्वविशिष्टतया तस्याः घटत्व-घटरूपादौ सत्वेन व्यभिचारः स्यादिति भावः । घटान्यत्वविशिष्टस्यैव हेतुत्वे तु सामानाधिकरण्यसंबन्धेनापि न घटत्व-घटरूपादौ व्यभिचारः इति घटान्यत्वोपलक्षितस्यैवान्यतरस्य हेतुत्वं बोध्यम्, विशिष्टहेतुके च न प्रयोजनमित्यवधेयम् । विशेष्यतावच्छेदकस्य । रूपघटान्यतरत्वस्य अवधेयमिति । रूपघटयोरेकतरमादाय हेतुत्वसंभवेपि अन्यतरत्वेनोपादानस्यधर्मिभेदान्न वैयर्थ्यम् । व्यापकत्वाघटकत्वेपीति । सामानाधिकरण्यसंबन्धेन साध्यत्वे व्याप्तिरेव न संभवति तस्य वृत्त्यनियामकतया हेतुसमानाधिकरणाभावीयतत्संबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्याशयः । पक्षतावच्छेदकतापर्याप्तिनिवेशनायाह । वन्हिमदिति । पक्षमुख्यविशेष्यता न निविष्टेति हृदयम् । ननु नित्यावृत्तिधर्मशून्यत्वात्, एवं वन्हिमदवृत्तिधर्मशून्यत्वादिति च कथं नाक्तं द्रव्यपदं पर्वतपदं चानर्थकमित्यतआह । अखंडेति ।

इदमत्रावधेयम् । अत्र हेतुकोटौ यावतां निवेशस्तेषां तेषां पक्षकोटौ निवशो हेतुवाक्यजन्यबोधस्याऽनतिरिक्तविषयकत्वसंपादनार्थम् । पक्षे सधर्मेत्यनुपादाने पक्षनिश्चयकाले एव पक्षे साध्यनिश्चयसंपत्तेः, संशयाभावान्न्यायप्रयोगानुपपत्तिरतस्तन्निवेशः । बाधवारणाय स्वरूपसमवायोभयसंबन्धघटितसामानाधिकरण्यसंबन्धेन घटान्यत्वस्य साध्यत्वं बोध्यम् । घटान्यत्ववद्रूपघटोभयत्वावच्छिन्नहेतुत्वे घटान्यत्वस्य वैयर्थ्यापत्तिः, उभयत्वावच्छिन्नस्य सामानाधिकरण्यसंबन्धेन घटत्वादावभावेन व्यभिचाराभावात् । तथा च तादृशहेतुवाक्यजन्यबोधस्य पक्षे साध्यवैशिष्ट्यावगाहित्वाभावेन न हेतुवाक्येतिव्याप्तिरतोघटान्यत्ववत्तादृशान्यतरत्वावच्छिन्नस्य हेतुत्वमिति संक्षेपः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पञ्चम्यर्थपञ्चकप्रतिज्ञादिस्थले तु पक्षे प्रकृतयर्थस्य वैशिष्ट्यबोधको हेतुर्नतु प्रकृतसाध्यस्य ।

सामानाधिकरण्यसंबन्धस्य वृत्त्यनियामकतया व्यापकत्वाघटकत्वेपि नित्यद्रव्यावृत्तिधर्मशून्यत्वान्निरवयवं गगनं नित्यं नित्यद्रव्यावृत्ति धर्मशून्यत्वाद्, वन्हिमत्पर्वतावृत्तिधर्मशून्यत्वादालोकवान् पर्वतो वन्हिमान् वन्हिमत्पर्वतावृत्तिधर्मशून्यत्वादित्यादौ हेत्ववयवेऽतिव्याप्तिवारणाय पक्षतावच्छेदकवैशिष्ट्यनिवेशनमावश्यकम् । अखंडाभावघटकतया हेतुघटकद्रव्यत्वपर्वतत्वादीनामवैयर्थ्यम् ।

साध्यतावच्छेदकविशिष्टसाध्यनिवेशप्रयोजनमाह— पंचम्यर्थेति । हेतुत्वं प्रमेयाद्वाच्यत्ववत्प्रमेयादित्यादौ हेतुजन्यबोधस्य विभक्त्यर्थहेतु त्वे प्रमेयाद्यात्मकप्रकृत्यर्थवैशिष्ट्यावगाहित्वेऽपि प्रकृतसाध्यतावच्छेदक-विशिष्टवैशिष्ट्यानवगाहित्वान्नातिव्याप्तिरित्यर्थः ।

पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छि-न्नप्रकारताकत्वमेव पर्यवसितार्थः । संबन्धविशेषश्चैतद्दले न प्रवेश्यः प्रयोजनविरहात्. अतः पंचम्यर्थे

हेतुजन्यबोधस्य । हेतुत्वं प्रमेयायमित्याकारकस्य । साध्यतावच्छेदक-विशिष्टेति । तादृशवाच्यत्वविशिष्टेत्यर्थः । अत्र वाच्यस्यैव साध्यत्वं नतु वाच्यत्वस्य, तथा सति "जन्यत्वपक्षकोक्तसाध्यहेतुकस्थले" इत्यनेन वाच्यत्वसाध्यकस्थलस्यैव परामर्शे तत्स्थलीयहेतौ व्यावृत्तिदानाऽसंगतिः स्यात्, प्रमेयादित्यत्र प्रमेयपदस्य लक्षणया प्रमेयपदस्य ज्ञानपरतया वाच्यत्वबोधक-त्वाऽसंभवात्, वाच्यस्य साध्यत्वे तु प्रमेयज्ञानस्यापि वाच्यतया साध्यबो-धकत्वात् । अत एव प्रमेयाद्वाच्यत्ववदित्यस्यापि संगतिः, अन्यथा हेतोर्निरा-कांक्षत्वं स्यात् । इदानीं तु साध्यघटकप्रमेयज्ञानज्ञाप्यत्वस्य वाच्यत्वेऽन्वयः हेत्वर्थस्य तस्य वाच्यत्ववति अन्वय इति ध्येयम् । नन्वत्र साध्यतावच्छेदवै-शिष्ट्यप्रवेशो व्यर्थः, उक्तातिव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धेन साध्यप्रका रताया एव निवेशनीयत्वात् । नचोक्तसंबन्धनिवेशेपि निरूपितत्वसंबन्धेन यत्र वाच्यस्य साध्यता तत्रोक्तहेतावतिव्याप्तिरतः साध्यतावच्छेदकवैशिष्ट्यनिवेश आवश्यक इति वाच्यम् । निरूपितत्वसंबन्धस्य वृत्त्यनियामकतया तत्संबन्धा-वच्छिन्नप्रतियोगित्वाप्रसिद्धेर्न्यायस्यैवाऽभावादित्याशंकां निरस्यति । **संबन्ध-विशेषश्चेति** । **अतः**—साध्यतावच्छेदकसंबन्धानिवेशात् । **यादृशसंबन्धेन** । निरूपितत्वसंबन्धेन । **नैतद्व्यावृत्त्यसंगतिः** । न साध्यतावच्छेदकवैशिष्ट्यव्यावृ-त्त्यसंगतिः । ननूक्तस्थलीयप्रमेयादिति हेतौ प्रमेयपदं लक्षणया प्रमेयज्ञानपरम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तादृशविषयताविलक्षणविषयताशून्यत्वम्

प्रकृत्यर्थस्य यादृशसंबन्धेनान्वयस्तस्य वृत्त्यनियामकतया व्यापकत्वाघटकत्वेपि नैतद्वृथावृत्त्यसंगतिः। यदि च जन्यग्रहविषयत्वरूपपंचम्यर्थैकदेशे जन्यत्वे प्रकृत्यर्थस्य हेतुज्ञानस्यान्वयः, न तु परम्परासंबन्धेन तादृशविषयत्वे तदा जन्यत्वपक्षकोक्तलाध्यहेतुकस्थले व्यावृत्तिर्बोध्या, पक्षमुख्यविशेष्यकत्वपर्यन्तानिवेशात्। न तु तादृशविषयत्वत्वावच्छिन्नपक्षकस्थले, हेतुजन्यबोधे तादृशविशिष्टपक्षे इतरवैशिष्ट्यानवगाहित्वात्।

तादृशविषयताविलक्षणेति। साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताविलक्षणेत्यर्थकम्। तद्विलक्षणत्वं च न तद्भिन्नत्वम्, प्रतिज्ञाजन्यबोधीयसाध्यादिविषयतायास्तद्भिन्नत्वेनाऽसंभवापातात्। तादृशविषयताभिन्नमुख्यविशेष्यताशून्यत्वानवेशेनाऽसंभववारणेपि निगमनेऽतिव्याप्तितादवस्थ्यात्, अन्यूनविषयकत्वदलवैयर्थ्याच्च, धूमादालोकवान्पर्वतोवन्हिमान्धूमादित्यादौ हेत्ववयवजन्यबोधीयहेतुत्वनिष्ठमुख्यविशेष्यतायास्तादृशविषयताभिन्नत्वात्।

एतेन तादृशविषयतानन्तःपातित्वं प्रकृतपरामर्शजन्यतानवच्छेदकत्वं वा तदित्यपि परास्तम्। उक्तस्थले आलोकाद्यंशे हेतुत्वप्रकारताया एव तादृशविषयतान्तःपातित्वात्प्रकृतपरामर्शजन्यतावच्छेदककत्वाच्च, हेतुजन्यबोधीयतद्विषयताया अतथात्वात्।

---

पंचम्यर्थो जन्यज्ञानविषयत्वं। तत्र विभक्त्यर्थैकदेशे जन्यत्वे एव प्रकृत्यर्थस्य "प्रमेयज्ञानस्य" अन्वयः। तथा च पक्षतावच्छेदकीभूत "हेतुत्वत्वात्मक" विषयत्वत्वावच्छिन्ने साध्यस्याऽनन्वयाद्धेतावतिव्याप्तिविरहेण साध्यतावच्छेदकवैशिष्ट्यनिवेशो व्यर्थ इत्याशंकते। यदिचेति। परंपरासंबन्धेन। स्वज्ञाननिरूपितत्वसंबन्धेन पक्षमुख्यविशेष्यकत्वापादानेपि व्यावृत्तिरित्यभिमानं निराकरोति। न त्विति। इतरेति। साध्येत्यर्थः। एतादृशान्यूनविषयकत्वोपादाने निगमनेऽतिव्याप्तिवारणायाऽनतिरिक्तविषयकेति। तस्य चाऽनुमितिविषयातिरिक्ताऽवृत्तिविषयत्वार्थकत्वे सर्वमभिधेयं प्रमेयमित्यादावतिरिक्ताऽप्रसिद्धिरतस्तदर्थमाह-दीधितौ-तादृशविषयताविलक्षण विषयताशून्यत्वमिति। अस्य तदनतिरिक्तविषयकत्वमित्येनेनान्वयः। तद्भिन्नत्वेन पक्षविषयताभिन्नत्वेन।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न च तथाविधविषयतावच्छेदककोट्यप्रविष्टधर्मावच्छिन्नविषयताशून्यत्वनिवेशान्न दोष इत्यपि साधु । यत्र प्रमेयसामान्यस्य पक्षतावच्छेदकादिघटकता तत्र तादृशविषयतावच्छेदककोट्यप्रविष्टाप्रसिद्धेः । विलक्षणावच्छेदकतानिवेशेपि द्रव्यव्याप्यधूमादालोकवान्पर्वतोवन्हिमान्धूमादित्यादिन्यायान्तर्गतनिगमनादावतिव्याप्तिः, तज्जन्यबोधविषयतावच्छेदकधूमत्वादेस्तादृशविषयतावच्छेदककोटिप्रविष्टत्वनियमात् । अपि तु तादृशविषयताशालिनिश्चयत्वावच्छिन्नानिवर्त्यसंशयनिवर्तकतावच्छेदकत्वमेव तत् । निगमनादिजन्यबोधीयज्ञानज्ञाप्यत्वादिविषयतायास्तादृशनिश्चयत्वावच्छिन्नानिवर्त्यज्ञानज्ञाप्यत्वादिसंशयप्रतिबन्धकतावच्छेदकतया तद्वारणम् । उक्तहेत्ववयवजन्यबोधनिवर्त्यस्य हेतुत्वं धूमोयं नवेत्यादिसंशयस्य धूमादिज्ञानज्ञाप्यत्वघटितपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयनिवर्त्यतया तादृशबोधविषयतायाः न तथाविधविषयताविलक्षणतेति अन्यूनपदस्य व्यावृत्तिसंगतिः ।

सर्वेषामेव संशयानां स्वविरोधिविषयकतथाविधविषयताशालिसमूहालंबननिश्चयनिवर्तनीयतया तादृशनिश्चयाऽनिवर्त्यसंशयाऽप्रसिद्धिरतस्तादृशनिश्चयत्वावच्छिन्नेति । इत्थं चाऽधिकमवगाहमानेपि निगमनजन्यबोधे साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छे-

---

पूर्वमनतिरिक्तविषयकत्वानुपादानेऽयंपदानुषंगपक्षे निगमनेऽतिव्याप्तिरुक्ता, सा इदानीं तन्निवेशेपि अस्त्येवेत्याह । अतिव्याप्तितादवस्थ्यादिति । ननु प्रकारतावच्छेदकतापर्याप्तिनिवेशान्न निगमनेऽतिव्याप्तिरित्यत आह । अन्यूनविषयकत्ववैयर्थ्याच्चेति । निगमनवारकं प्रकारान्तरमपि निरस्यति । एतेनेति । अन्यूनविषयकत्वस्य वैयर्थ्येनेत्यर्थः । उक्तस्थले । धूमादालोकवान्पर्वतोवन्हिमान् धूमादित्यादौ । अतथात्वादिति । अनन्तःपातित्वात्, जन्यतानवच्छेदकत्वाच्चेत्यर्थः । तथाविधेति । साध्यतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नेत्यर्थः : न दोष इति । नान्यूनविषयकत्ववैयर्थ्यम् । उक्तस्थले हेतुत्वादिविषयतायास्तथाविधविषयतावच्छेदककोटिप्रविष्टत्वादिति भावः । यत्र । सकलाभिधेयवृत्तिधर्मवदित्यादौ । कोट्यप्रविष्टाऽप्रसिद्धेरिति विश्वस्यैव कोटिप्रविष्टत्वादिति भावः ।

विलक्षणेति । वैलक्षण्यं-निरवच्छिन्नम् । तथा च तथाविधविषयतानिरूपितनिरवच्छिन्नावच्छेदकताशून्यधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकविषयताशून्यत्वमर्थः । द्रव्यव्याप्येति । अतिव्याप्तिरिति । इदं च निगमनजन्यबो-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दकावच्छिन्नपक्षविषयकत्वस्याऽक्षततया धूमज्ञानज्ञाप्यत्वादिसंशयस्य तादृशविषयताशालिनिश्चयानिवर्त्यत्वानुपपत्तिरित्यपि समाहितम्। अवच्छिन्नत्वं चाऽन्यूनवृत्तित्वं व्यापकत्वपर्यवसितम्, अतो ज्ञानज्ञाप्यत्वं धूमीयं नवेति संशयनिरूपितप्रतिबन्धकतायां धूमज्ञानज्ञाप्यत्वातिरिक्त प्रतिज्ञाप्रतिपाद्यभागविषयताघटितधर्मस्य स्वरूपसंबन्धरूपावच्छेदकत्वविरहेपि नान्यूनपदस्य व्यावृत्त्यसंगतिः।

अप्रामाण्यज्ञानास्कन्दितस्य निगमनादिजन्यबोधस्य संशयाऽप्रतिबन्धकतया तज्जनकत्वमादायातिप्रसंगस्य वारणाय तादृशसंशयाऽनिवर्तकत्वमुपेक्ष्य तन्निवर्त्तकतावच्छेदकविषयताशून्यत्वेन बोधो विशेषितः।

पक्षतावच्छेदकाद्यनिवेशे तदनवच्छिन्नपक्षादिविषयताशालिनिश्चयसमुदायस्य कमपि संशयं प्रति अप्रतिबन्धकतया तादृशनिवर्त्याऽप्रसिद्धिरतस्तन्निवेश इति।

इत्थं चानतिरिक्तविषयकत्वघटकसाध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नविषयतायां स्वनिष्ठत्वनिवेशेनैव न्यूनविषयकदर्शितहेतुजन्यबोधवारणसंभवे पृथगन्यूनविषयकत्वविशेषणमनर्थकमित्यपि समाहितम्। तादृशविषयतायां स्वनिष्ठत्वविशेषणे निगमनादिजन्यबोधस्य ज्ञानज्ञाप्यत्वविशेषितसाध्यविशिष्टपक्षविषयताशालित्वनियमात्स्वनिष्ठनिरुक्तविषयताशालिनिश्चयत्वव्यापकप्रतिबन्धकताक-ज्ञानज्ञाप्यत्वादिसंशयान्यसंशयाऽप्रतिबन्धकतयाऽनतिरिक्तविषयताकत्वापत्तेर्दुर्वारत्वात्।

---

धेऽबाधितत्वादिभानं नास्तीत्याशयेन। उक्तेति। धूमादालोकवान्पर्वतोवन्हिमानित्यादिस्थलीयेत्यर्थः।

नान्यूनपदस्य व्यावृत्त्यसंगतिरिति। अत्रेदं बोध्यम्। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिष्ठावच्छेदकताक-प्रतिबन्धकतानिवेशे धूमादालोकवान्पर्वतोवन्हिमानिति प्रतिज्ञायामव्याप्तिः, हेतुत्वं धूमीयं नवेत्यादिसंशयस्य तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यत्वात्। एतादृशाव्याप्तिवारणायैव व्यापकत्वरूपावच्छिन्नत्वं निवेश्यं नत्वन्यूनपदव्यावृत्त्यसंगतिनिराकरणायैवेति। विशेषित इति। तथा च निगमने नातिव्याप्तिः, तज्जन्यबोधे उक्तसंशयनिवर्तकतावच्छेदकविषयितावत्त्वादिति भावः।

समुदायस्येति। केवलपक्षविशेष्यकत्वस्य द्रव्यत्व-पृथिवीत्व-मेयत्वादिना पक्षविशेष्यकज्ञानसाधारणतया तादृशपक्षविषयकनिश्चयत्वव्यापकप्रतिबन्धकत्वाप्रसिद्धिरित्यर्थः। स्वनिष्ठत्वेति। स्वपदं-यादृशशाब्दबोधमादाय लक्षणं संग-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्तिविषयकत्वं वा तदनतिरिक्तविषयकत्वम् ।

सत्यन्तस्य न्यायावयवत्वमर्थः—निगमने च पक्षवाचकपदमनुषज्यते इति तद्वारणमनतिरिक्तपदप्रयोजनमितिमतमनुसृत्य लघुशरीरमनतिरिक्तविषयकत्वं निर्वक्ति । प्रकृतेति । प्रकृतहेतुका या प्रकृतसाध्यसिद्ध्यौपयिकी व्याप्तिस्तदविषयकत्वमर्थः । यद्रूपावच्छिन्नविशेषितप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नविषयकनिश्चयत्वं प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानुमितिजनकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नाऽविषयकत्वमिति तु पर्यवसितम् । तादृशं रूपं तद्धेतुतावच्छेदकावच्छिन्नतद्धेतुव्यापकप्रकृतसाध्यसामानाधिकरण्यत्वं--तत्तत्साध्यतावच्छेदकावच्छिन्नसाध्याभावव्यापकाभावप्रतियोगितात्वं च । निगमनस्थतत्पदस्य च व्याप्तिपक्षधर्मताविशिष्टहेतुपरतया तज्जन्यबोधस्य तादृशरूपावच्छिन्नविषयकत्वान्नातिव्याप्तिः । अन्वयव्यतिरेकव्याप्त्योर्विशिष्यैकतरनिवेशेऽन्वयिनि व्यतिरेकिणि वा निगमनेऽतिव्याप्तिरिति निरुक्तरूपावच्छिन्नत्वेन द्वयोरनुगमः । यदि च यत्त्वतत्त्वयोर्निवेशान्नानुगमसंभव इति विभाव्यते, तदाऽभावद्वयमेव बोधे निवेशनीयम् । एतल्लाभायैवौपयिकान्तमिति ध्येयम् । यद्यप्युदाहरणजन्यबोधस्य न निरुक्तरूपावच्छिन्नविषयकत्वं—तथापि सिषाधयिषाधीनन्यायप्रयोगानुपगमेन तत्र पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपाऽन्यूनविषयकत्वविरहादेव नातिप्रसंगः । हेत्वन्तभागे च सत्यन्ताभावान्नातिव्याप्तिरित्यवधेयम् ।

---

मनीयं तादृशशाब्दबोधपरम् । निगमनजन्यबोधवृत्तित्वविशिष्टतादृशप्रकारतामादाय दूषयति तादृशेति ।

तथा च न्यायावयवत्वे सति पक्षतावच्छेदकविशिष्टबोधजनकवाक्यत्वं प्रतिज्ञात्वं फलितम् । बोधे पक्षतावच्छेदकवै० स्वावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व-तादृशप्रकारताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यताशून्यसंशयनिवर्तकतावच्छेदकविषयिताशून्यत्वोभयसं०

व्याप्त्यविषयकत्वकल्पे हेत्वन्तेऽतिव्याप्तिशंकां परिहर्तुं तं कल्पमवतारयति । सत्यन्तस्येति । अनुषज्यते इति । तथा चाऽन्यूनविषयकत्वनिर्वाहः । अभावद्वयं—अन्वयव्याप्तिविषयकत्वाभाव—व्यतिरेकव्याप्तिविषयकत्वाभावोभयं । एतत्कल्पे औपयिकान्तवैयर्थ्यमाशंक्याह । एतल्लाभायैवेति । न

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वन्हिव्याप्यालोकवत्सधर्मा पर्वतोवन्हिमान्धूमात्, इन्धनव्याप्यधूमवान्पर्वतोवन्हिमान्धूमादित्यादौ तस्याः संग्रहाय प्रकृतहेतुसाध्ययोरुपादानम्। वन्हिव्याप्यधूमवान्पर्वतोवन्हिमान्धूमात्, सत्तादिव्याप्यद्रव्यवदिदं सत्तादिमद्द्रव्यत्वादित्यादयस्तु न प्रयोगाः। विशिष्टपक्षोपस्थापकादेव तादृशव्याप्तिप्रतीतौ आकांक्षाविरहेणोदाहरणानुत्थानात्, अन्यथाऽतिप्रसंगात्। अत एव नैकदोभयव्याप्त्युपन्यासोपि।

वन्हिव्याप्तिविशिष्टस्यालोकस्य पर्वतत्वावच्छिन्नविशेषणत्वे तद्विशिष्टेपि पर्वते तद्वृत्तेरर्थतो लाभेनार्थतस्तत्र प्रकृतसाध्यगमकतालाभान्न हेत्ववयवाभिधानप्रयोजकाऽऽकांक्षावसर इत्यतः सधर्मेति। तस्याः। प्रतिज्ञायाः। ननु यत्र प्रकृतहेतुकप्रकृतसाध्यकव्याप्तिरेवान्तर्भवति पक्षगर्भे, तत्रत्यप्रतिज्ञाया असंग्रह इत्याशंकां परिहरति। वन्हीति। विशिष्टपक्षेति। पक्षतावच्छेदकविशिष्टपक्षेत्यर्थः। तादृशव्याप्तीति। प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्तीत्यर्थः। उदाहरणेति। यद्यपि दर्शितस्थले विशिष्टपक्षोपस्थापकपरात्प्रकृतहेतौ विशिष्टपक्षवृत्तित्वस्याप्यर्थतः प्रतीत्या उपनयादिप्रयोजकाकांक्षाया अप्यनवकाशः। तथापि धूमवत्त्वस्थाने धूमवत्साधर्म्यनिवेशे तस्याः संभव इति उदाहरणमात्रोपादानम्। अन्यथा। आकांक्षाविरहेप्यभिधाने। अतिप्रसंगात्। हेतुद्वयादेरप्यभिधानप्रसंगात्। अतएव। अनाकांक्षितानभिधानादेव। एकदा। एकन्यायप्रयोगदशायाम्। उभयव्याप्तीति। अन्वयव्याप्तिव्यतिरेकव्याप्तिद्वयेत्यर्थः। व्याप्तिद्वयस्य क्रमेणाभिधातुं शक्यतया प्रथमोपस्थितव्याप्तिप्रतीत्यैव समीहितनिर्वाहेण व्याप्त्यन्तराकांक्षानुदयादिति भावः।

एतेनाऽन्वयव्यतिरेकोनाहरणाकांक्षाघटितान्वयव्याप्तिरेकिहेतुलक्षणानन्तरमपरं तल्लक्षणमभिधास्यतोमणिकृतः प्रथमलक्षणानिर्भरनीजमाविष्कृतम्। अत एवैतादृशातिप्रसंगस्य पृथगभिधानम्।

---

निरुक्तरूपावच्छिन्नविषयकत्वमिति। न तद्धेतुव्यापकसाध्यसामानाधिकरण्यत्वाद्यवच्छिन्नविषयकत्वमित्यर्थः। तथा च व्याप्तिबोधने तात्पर्याभावादुदाहरणेऽतिव्याप्तिर्दुर्वारैवेति भावः। नातिप्रसंग इति। तथा च एतत्कल्पे यो यो धूमवान् स स वन्हिमान् यथा पर्वत इत्युदाहरणं न स्वीकार्यम्, अन्यथा तस्य निरुक्तान्यूनविषयकत्वेन चातिव्याप्तेदुर्वारत्वपातादति तस्य शुद्धपर्वतवृत्तित्वलाभेपि न प्रकृतपक्षवृतित्वलाभ इत्यतो विशिष्टेति। तद्वृत्तेः। विशिष्टालोकवृत्तेः। सधर्मेतीति। एतेन व्याप्तिविशिष्टस्यालोकादेर्विशिष्टपक्षावृत्तित्वशंकानुच्छेदा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यदि च मैत्रः पचति अयं गौरित्यादेरेव प्रतिज्ञाया तथोपवर्णितविशिष्टज्ञानजनकत्वं संभव तादात्म्येन गोः साध्यत्वात् गोत्वत्वाद्यनुपस्थित्या गोत्वादेः साध्यत्वानुपपत्तेः पदार्थतावच्छेदकजातौ हेत्वर्थान्वयायोगाच्च.

वन्ह्यादिसाध्यकप्रतिज्ञायामव्याप्त्या यथोपवर्णितलक्षणमाक्षिपति : यदिचेति । अत्र चाऽसंभवाभावमाविष्कर्तुं कतिपयप्रतिज्ञाजन्यबोधस्य यथोपवर्णितानुमित्यन्यूनाऽनतिरिक्तविषयकत्वं व्यवस्थापयति । चैत्र इत्यादिना ।

---

द्धेत्वाकांक्षेति सूचितम् । तस्याः । उपनयप्रयोजकाकांक्षायाः । एतेन । एकदा न व्याप्तिद्वयाभिधानमिति दीधितिकारोक्त्या । लक्षणानन्तरमिति । अन्वयव्यतिरेकोदाहरणाकांक्षाजनकशाब्दज्ञानजनकवाक्यत्वरूपलक्षणानन्तरमित्यर्थः । अपरं पक्षसपक्षसतोविपक्षाऽसतो हेतुवचनमित्येवंरूपं । तल्लक्षणं । अन्वयव्यतिरेकिहेतुलक्षणम् ।

वन्हिसाध्यकप्रतिज्ञायां । पर्वतोवन्हिमानित्याकारिकायां । अव्याप्त्या । तज्जन्यबोधस्य वन्हिमदभिन्नपर्वतविषयकत्वेनाऽनुमित्यन्यूनानतिरिक्त विषयकत्वाभावादितिभावः । तच्चानुपदं स्फुटीभविष्यति । यथोपवर्णितमिति । न्यायावयवत्व सति पक्षतावच्छेदकावच्छिन्नविशेष्यता निरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वे सति तादृशप्रकारता शालिनिश्चयत्वावच्छिन्नानिवर्त्यसंशयनिवर्तकतावच्छेदकविषयताशून्यः (अथवा तादृशप्रकारताशाल्यनुमितिजनकत्वं यद्रूपावच्छिन्नविशेषित-प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुप्रकारकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यता - शालिनिश्चयत्वव्यापकं तद्रूपावच्छिन्नाविषयकः) यो बोधस्तज्जनकवाक्यत्वं लक्षणमित्यर्थः । दीधितौ यदिचे ति । अस्य सूक्ष्ममीक्ष्यतेइत्यनेनाऽन्वयः । अचच । लक्षणे च । असंभवाभावम् अव्याप्तिमित्यर्थः । यथोवपर्णितेति । अस्य अन्यूनानतिरिक्तविषयकत्वेऽन्वयः । दीधितौ-मैत्रःपचतीति । अत्र मैत्रविशेष्यककृतिप्रकारिकाऽनुमितिः, तथैव च प्रतिज्ञाजन्यो बोधः । एवं च तादृशबोधस्योपवर्णितानुमित्यन्यूनानतिरिक्तविषयकत्वाल्लक्षणसमन्वयः । एवमयं गौरित्यत्रापि । ननु व्युत्पत्तिविरोधादयं गौरित्यादिप्रतिज्ञायाः पक्षे साध्यीभूतगोत्वविशिष्टज्ञानजनकत्वात्कथं तत्र गोत्वप्रकारकज्ञानजनकत्वम् । एवं गोत्वस्य साध्यत्वे अयंगौरित्यत्र अनुल्लिख्यमानजातेः स्वरूपतो भानेन साध्यतावच्छेदकरूपेण साध्यंवत्ववोधकवाक्यस्यैव प्रतिज्ञात्वाद् अयं गौरिति वाक्यस्य न गोत्वसाध्यकप्रतिज्ञात्वसंभव इत्याह । पक्षेसाध्यतावच्छेदकगोत्वत्वविशिष्ट-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अयं गौरित्यत्र गोत्वस्य साध्यत्वे पक्षे साध्यतावच्छेदक-गोत्वत्वविशिष्ट "गोत्व" प्रकारकज्ञानजनकत्वाऽसंभवादाह । तादात्म्ये-नेति । ननु भवतु गोसाध्यकप्रतिज्ञा तादृशी । तथापि यदि समवायेन गोत्वस्य साध्यत्वेपि तथाविधप्रतिज्ञा संप्रदायानुमता तदा तत्साध्यक-तादृशप्रतिज्ञायाः दर्शितबोधजनकत्वाऽसंभवात्सामान्यतस्तदाकारप्रति-ज्ञायास्तथात्वाभिधानमसंगतमित्याशंकायां तस्या गोत्वादिसाध्यकत्वं निराकरोति । गोत्वत्वाद्यनुपस्थित्येति । तादृशप्रतिज्ञावाक्यादित्यादिः । अत्रेतिशेषः । अनुपपत्तेरिति । प्रतिज्ञायाःसाध्यतावच्छेदकोपस्थापकत्व-नियमात्, अन्यथा सुन्दरवन्हित्वावच्छिन्नसाध्यकस्थलेपि वन्हिमानित्या-कारकप्रतिज्ञाप्रसंगादितिभावः । यद्यपि समवायेन रक्तत्वविशिष्टदण्डा-वच्छिन्नसाध्यकरक्तदण्डिमानित्यादिप्रतिज्ञायाः न समवायेन रक्तत्व-विशिष्टसाध्यतावच्छेदकबोधकत्वसंभवः--तथापि तत्र साध्यतावच्छेदक-

---

प्रकारकज्ञानजनकत्वासंभवादिति । दीधितौ-तादात्म्येन गोसाध्यत्वादिति । तथा च प्रतिज्ञायाः अनुमित्यन्यूनानतिरिक्तविषयकबोधजनकत्वाल्लक्षणसमन्वयः ।

अथ गोत्वसाध्यकस्थलेपि यदि अयंगौरित्याकारिकैत्वव प्रतिज्ञा तदा तस्याः प्रतिज्ञात्वं न संभवतीत्याशंकते । नन्विति । तादृशी । अयं गौरित्याकारिका । तथाविधेति । अयं गौरित्याकारिकेत्यर्थः । तत्साध्यकेति । गोत्वसाध्यकेत्यर्थः । दर्शितबोधेति । साध्यतावच्छेदकीभूतगोत्वत्वविशिष्टगोत्वप्रकारकबोधेत्यर्थः । तदाकारप्रतिज्ञायाः । अयं गौरित्याकारकप्रतिज्ञायाः । तथात्वाभिधानं । प्रति-ज्ञात्वाभिधानं । असंगतमिति । अयं गोत्ववानिति प्रतिज्ञैव संगता सा च संम्प्रदायानुमतेतिभावः । तस्याः । अयं गौरितिप्रतिज्ञायाः । तादृशेति । अयं गौरितीत्यर्थः । नियमादिति । तथा च साध्यतावच्छेदकरूपेण साध्यवत्वबोध-कस्यैव वाक्यस्य प्रतिज्ञात्वान्न तस्य गोत्वसाध्यकप्रतिज्ञात्वसंभव इति भावः । अन्यथा । तादृशनियमानंगीकारे । प्रतिज्ञायाः साध्यतावच्छेदकरूपेण साध्यव-त्वबोधकत्वनियमे व्यभिचारमाह । यद्यपीति । प्रतिज्ञायाः रक्ताऽभेदावगाहिशा-ब्दबोधजनकत्वे इति शेषः । न समवायेन रक्तत्वविशिष्टसाध्यतावच्छेदक-बोधकत्वसंभव इति । किन्तु रक्तरूपसंबन्ध्यभिन्नदण्डबोधकः, अन्यथा नामार्थ-योरितिव्युत्पत्तिभंगापत्तेः । तादृशस्तु नः, साध्यतावच्छेदकतथाचव्यभिचारइति भावः । रक्तदण्डिमानिति वाक्याद्रक्तत्वविशिष्टाभिन्नदण्डसंबन्ध्यभिन्नः, इति बोधः । अनुमितिस्तुसमवायेन रक्तत्वविशिष्टदण्डसाध्यतावच्छेदककैति तत्वम् । समाधत्ते । तथापीति तत्र । रक्तदण्डिमानित्यत्र ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वन्हिमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य वन्हेः संयोगात्मकः संबन्धो-भासते तथैव वन्हिव्याप्यधूमवानयमित्युपनयसंगमात्,

घटकसकलपदार्थानामेव विशकलितानां तादृशवाक्यादुपस्थितेस्तदधीन साध्यतावच्छेदकविशिष्टसाध्यविषयकमानसबोधेनापि तत्र विशिष्ट-साध्यसंशयप्रयोज्यजिज्ञासाविषयसिद्धिसंभवः—प्रकृते तु विशकलितानामपि गोत्वत्वादिघटकपदार्थानां नोपस्थितिरिति विशेषः।

गोत्वादेः साध्यत्वे दोषान्तरमाह। पदार्थेति। जातेः पदार्थतावच्छेदकत्वं पदार्थान्तराऽन्वयित्वाऽसंभवप्रयोजकत्वेनाभिहितम्। इदमुपलक्षणम्। अन्वयितावच्छेदकरूपेणानुपस्थितत्वमपि तथा बोध्यम्। ननु पर्वतोवन्हिमानित्याद्याकारकप्रतिज्ञा न वन्हिसाध्यका अपितु अभेदेन वन्हिमत्साध्यिकैव, तथा च तज्जन्यबोधविषयतायाः अभेदेन वन्हिमत्साध्यकानुमितिविषयतातो न वैलक्षण्यमतो न तत्राऽव्याप्त्यवकाश इत्यत आह। तथैवेति। तादृशप्रतिज्ञाया वन्हिसाध्यकत्वेनैवेत्यर्थः। इत्युपनयसंगमात्—इत्याकारकस्योपनयस्य तादृशप्रतिज्ञाघटितन्यायान्तर्गतत्वोपपत्तेः। वन्हिमतः साध्यत्वे वन्हिमद्व्याप्यवानित्याकारस्यैवोपनयस्य-संभवादिति भावः।

---

प्रकृते त्विति। अयं गौरित्यत्र त्वित्यर्थः। नोपस्थितिरिति। उपस्थापकाभावादिति भावः। दोषान्तरं। बाधकं। दीधितौ—पदार्थतावच्छेदकजाताविति। पदार्थतावच्छेदकीभूतगोत्वे साध्ये इत्यर्थः। हेत्वर्थाऽन्वयायोगादिति। हेत्वर्थस्य ज्ञानज्ञाप्यत्वस्याऽन्वयाऽसंभवादित्यर्थः। विशेष्यतासंबन्धेन इतरपदार्थप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेनोपस्थितेः कारणत्वादिति भावः। घटादन्य इत्यादावेकदेशेपि पञ्चम्यर्थप्रतियोगित्वान्वयाज्जाताविन्युक्तम्। जातौ पदार्थतावच्छेदकत्वविशेषणस्य फलमाह। पदार्थान्तरेति। पदार्थान्तरस्य ज्ञानज्ञाप्यत्वस्य। अन्वयित्वाऽसंभवप्रयोजकत्वेनेति। अन्वयाभावप्रयोजकत्वे नेत्यर्थः। पदार्थतावच्छेदके पदार्थान्तरान्वयस्य व्युत्पत्तिविरुद्धत्वादिति भावः। इतरपदार्थप्रकारकशाब्दबोधं प्रति स्वातन्त्र्येणोपस्थितेः कारणत्वेपि ससंबन्धिकस्थलवदनुभवानुरोधेनैतादृशस्थलेपि कथंचिदुपस्थितेरुपयोग इत्युक्तावप्याह। इदमिति। तथा। पदार्थान्तराऽन्वयित्वासंभवप्रयोजकम्। अन्यथा बाधाऽप्रतिबध्यत्वापत्तेः। तथा च गोत्वस्य जातिरूपत्वेन स्वरूपतो भानेन स्वरूपतोभासमान पदार्थे पदार्थान्तरस्य ज्ञानज्ञाप्यत्वस्यान्वयो न संभवतीत्यर्थः। एतावता तादात्म्येन-गोरेव साध्यत्वं दृढीकृतम्, तथा चाऽसंभवाभावोपि आविष्कृतः, किन्तु

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शाब्दबोधे तु वन्हिमतोऽभेदः एवं भेदे साध्ये भिद्यते भिन्नमित्यादावपि वैलक्षण्यमिति सूक्ष्ममीक्ष्यते—

शाब्दबोधे । वन्हिमानित्येतादृशवाक्यजन्यज्ञाने । अभेद इति । भासते इत्यनुषज्यते । न तु वन्हेः संयोग इति शेषः । नामार्थयोर्भेदान्वयस्याऽव्युत्पन्नत्वादिति हृदयम् । तथा च तादृशप्रतिज्ञाजन्यबोधे निरुक्तमन्यूनविषयकत्वम् अनतिरिक्तविषयकत्वं च न संभवतीतिभावः । भेदे—शुद्धे प्रतियोगिविशेषिते वा साध्ये—इत्यादौ—इत्यादिप्रतिज्ञायाम् । आदिपदात्पृथिवी इतरेभ्योभिद्यते इतरभिन्नमित्यादिपरिग्रहः । वैलक्षण्यम् अनुमितिविलक्षणबोधजनकत्वम् ।

शुद्धभेदसाध्यकानुमितौ भेदस्यानुयोगितया, इतरावच्छिन्नभेदसाध्यकानुमितौ अनुयोगितया, इतरविशेषितस्य तस्य विशेषणताविशेषेण, भिद्यते इति प्रतिज्ञाजन्ये च बोधे आख्यातान्तोपस्थाप्यस्य भेदाश्रयत्वस्य, इतरेभ्योभिद्यते इत्यादिजन्यबोधे च पञ्चम्यन्तार्थेतरप्रतियोगिकत्वविशेषित भेदाश्रयत्वस्य स्वरूपसंबन्धेन, भिन्नमित्यादिजन्ये च निष्ठान्तोपस्थाप्यस्य-भेदाश्रयत्वावच्छिन्नस्य इतरेभ्योभिन्न मित्यादिजन्ये च इतरप्रतियोगिकत्वविशेषितभेदाश्रयत्वावच्छिन्नस्य इतरभिन्नमित्यादिजन्ये चाऽभेदेनेतर-

---

अव्याप्तिमाह । दीधितौ वन्हिमानित्यादाविति । पर्वतोवन्हिमानित्यत्रेत्यर्थः । पक्षे । पर्वते । साध्यस्य । वन्हेः । संयोगात्मकः संबन्धोभासते इति । तथा च प्रतिज्ञाजन्यबोधस्य "वन्हिमदभिन्नः पर्वतः" इत्याकारकस्य अनुमित्यन्यूनानतिरिक्तविषयकत्वाभावादव्याप्तिरिति भावः । पर्वतो वन्हिमानित्यनुमितौ तादात्म्येन वन्हिमानेव साध्यमित्याशंकते । नन्विति । तथा च । अभेदेन वन्हिमत्साध्यकत्वे च । तज्जन्येति प्रतिज्ञाजन्येत्यर्थः । वन्हिमद्व्याप्यवानित्याकारस्यैवेति । एवकारेण वन्हिव्याप्यवानित्यस्य व्यावृत्तिः । प्रतिज्ञोपनययोरेकरूपावच्छिन्नसाध्यबोधकत्वनियमादिति भावः । शाब्दबोधे त्विति । प्रतिज्ञाजन्यशाब्दबोधे तु इत्यर्थः । नत्विति । तथा च वन्हिसाध्यकप्रतिज्ञाया वन्हिसाध्यकानुमित्यन्यूनाऽनतिरिक्तविषयकज्ञानाऽजनकत्वात्तत्राव्याप्तिरिति भावः। ननु प्रतिज्ञाजन्यबोधे वन्हेः संयोगः कथं न भासते इत्यत आह । नामार्थयोरिति । भेदस्येति । अस्य विशेषणताविशेषेण पक्षांशेऽन्वयादित्यन्वयः । एवं तस्येत्यत्रापि । शाब्दबोधस्य भेदाश्रयत्वप्रकारकतया अनुमित्यपेक्षया एकं वैलक्षण्यम्, अपरं च पंचम्यन्तार्थभूतेतरप्रतियोगिकत्वप्रकारकतयेत्यादिकमूह्यम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तदा यादृशपक्षमादाधिकाः पक्षे यादृशयादृशविशिष्टार्थबोधिकाः प्रतिज्ञा सम्प्रदायसिद्धाः तादृशानां बोधानामन्यतमेनाप्यनिवर्त्यतत्स्य संशयस्यानिवर्तको यस्तावद्बोधानामन्यतमोबोधस्तज्जनकत्वं वक्तव्यम् ।

प्रतियोगिकत्वविशेषितभेदाश्रयत्वावच्छिन्नस्य इतरेभ्योऽन्यदित्यादिजन्ये चेतरप्रतियोगिकत्वविशेषितभेदावच्छिन्नस्य इतरान्यदित्यादिजन्ये चा भेदेनेतरप्रतियोगिकत्वविशेषितभेदावच्छिन्नस्य भेदेन पक्षांशे विशेषणत्वादिति अनुमितेस्तादृशबोधवैलक्षण्यादिति भावः । इदमुपलक्षणम् । ईदृशादिशा प्रकृते विधेयांशे भान इवोद्देश्यतावच्छेदकांशे भानेपि वैलक्षण्यमवसेयम् । गन्धाद्यवच्छिन्नपक्षकानुमितौ गन्धादेः साक्षाद्विधेयधर्मितावच्छेदकत्वात्, गन्धवती इतरेभ्यो भिद्यते इत्याकारकतादृशप्रतिज्ञाजन्यबोधे च गन्धादिसंबन्धस्यैव तथात्वात् इति ।

उद्देश्यानुमितिपदस्य यादृशविशिष्टार्थबोधः प्रतिज्ञया जन्यते तादृशविशिष्टार्थबोधपरतेत्यभिप्रेत्य समाधत्ते । यादृशेति यादृशरूपावच्छिन्नपक्षकयादृशरूपावच्छिन्नसाध्यकसंप्रदायसिद्धप्रतिज्ञाः यादृशरूपावच्छिन्नपक्षे यादृशरूपावच्छिन्नप्रकारकबोधजनिकाः तादृशरूपावच्छिन्ने तादृशरूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयाऽनिवर्त्तकतादृशबोधान्यतमबोधजनकत्वे सति तादृशरूपावच्छिन्नपक्षकतादृशरूपावच्छिन्नसाध्यकन्यायान्तर्गतत्वं प्रतिज्ञात्वमित्यर्थः । अत्र च जनिकेत्यन्तं बोधविशेषपरिचायकमात्रम् । न तु तदर्थस्य लक्षणे निवेशः । बोधाश्च विषयविशेषान्निवेश्य विशिष्यैवोपादेयाः, न तु प्रतिज्ञाप्रतिपाद्यत्वेन अतो नात्माश्रयशङ्कावकाशः ।

---

प्रतिज्ञाजन्यबोधजनकत्वस्य प्रतिज्ञात्वे आत्माश्रयादाह । अत्रचेति । एवंचेति । भिद्यते भिन्नमित्यादौ प्रतिज्ञार्थबोधानां विशिष्योपादाने चेत्यर्थः । अन्यतमत्वेनानुगमः सफलोभवतीति शेषः । अन्यथा प्रतिज्ञार्थत्वेनानुगमस्य तादृशार्थविषयकबोधानिवर्त्यसंशयानिवर्तकप्रतिज्ञार्थबोधजनकत्वमित्यस्यैव सम्यक्त्वेऽन्यतमत्वनिवेशो व्यर्थ एव स्यादिति भावः । एकधर्मावच्छिन्नपक्षसाध्यकेति । विभिन्नसाध्यादिस्थलीयप्रतिज्ञासाधारणमनुगतं लक्षणं तु नास्त्येव, इदानीमेकधर्मावच्छिन्नसाध्यकनिखिलप्रतिज्ञासाधारणलक्षणमप्यनुगतं निर्वक्तुमशक्यमेव स्यादतोऽन्यतमत्वनिवेशनमित्यर्थः । तेनरूपेणेति । अन्यतमत्वेनेत्यर्थः । तादृशतादृशबोधनिवर्त्यत्वाभावकूटघटितधर्मस्येति । तादृशकूटवत्संशयप्रतिबन्धकत्वसामान्याभावविशिष्टबोधनिष्ठान्यतमत्वस्येत्यर्थः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एवं च प्रतिज्ञाप्रतिपाद्यविशिष्टार्थानामननुगमेन एकधर्मावच्छिन्न-पक्षसाध्यकनिखिलप्रतिज्ञासाधारणमपि प्रतिज्ञात्वं नैकं संभवतीति बोधानामन्यतमत्वेनानुगमः तेन रूपेण जनकत्वांशे एव बोधानां विशेषणता, न तु निवर्त्यत्वांशेऽपीति बोधानामननुगमेपि तादृश-तादृशबोधनिवर्त्यत्वाभावकूटघटितधर्मस्यानुगतत्वात् तादृशबोधभेदकूट-वद्भिन्नत्वरूपान्यतमत्ववन्निवर्त्यत्वसामान्याभावस्थले तादृशतादृशबोध-निवर्त्त्यत्वाभावकूटस्यैव लाघवेन निवेशयितुमुचितत्वात्।

एवं च तादृशाभावकूटनिवेशसूचनायैवाऽन्यतमेनापीत्युक्तम्। एतेन सामान्याभावनिवेशसूचनायाऽपिकार इति व्याख्यानमनादेयम्। विशेष्यदले अन्यतमत्वनिवेशनमपि यत्र प्रतिज्ञार्थानां नानाविधत्वं तत्रैव, पर्वतादिपक्षकवन्ह्यादिसाध्यकस्थले पर्वतादौ वन्ह्यादिमद्भेदरू-पेणैकविधबोधस्यैव प्रतिज्ञया जननान्न तत्र तन्निवेशः। एतेनैकमादा-याऽन्यतमत्वस्याऽसंभवेपि न क्षतिः। शब्दाभेदस्याप्यप्रयोजकत्वात्।

---

लाघवेनेति। यद्यपि तादृशतादृशबोधान्यतमबोधानिवर्त्यत्वस्य तादृशान्य-तमत्वसमानाधिकरणप्रतिबन्धकतानिरूपितप्रतिबध्यत्वसामान्याभावरूपत्वे सर्वे-षामेव संशयानां स्वविरोधिसमूहालंबनात्मकतद्बोधान्यतममादाय तन्निवर्त्यत्वेन तदभावविशिष्टसंशयाऽप्रसिद्धिः। तादृशतादृशबोधान्यतमत्वव्यापकप्रतिबन्ध-कतानिरूपितप्रतिबध्यत्वसामान्याभावरूपत्वे च तादृशप्रतिबन्धकताया अप्रसिद्ध-त्वेनाव्याप्तेर्जागरूकत्वेन निवर्त्यत्वांशेऽन्यतमत्वेन बोधानां निवेशे गौरव-कथनमसंगतम्। तथापि तादृशतादृशविशिष्टार्थविषयकनिश्चयत्वव्यापकप्रति-बन्धकतान्यतमप्रतिबन्धकतानिरूपितप्रतिवध्यतासामान्याभावस्यैव तेन विव-क्षणान्नाव्याप्त्यादिकम्। परन्तु एवं विवक्षणे तादृशतादृशबोधभेदकूटा-वच्छिन्नत्वरूपान्यतमत्वेत्याद्युक्तिर्विचारणीयैवेति ध्येयम्। तादृशाभावकूट-निवेशेति। तादृशतादृशनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वा-भावकूटनिवेशेनेत्यर्थः। अन्यतमत्वघटितलक्षणं तु भेदादिसाध्यकस्थले एवाद-रणीयम्, न तु वन्ह्यादिसाध्यकस्थलेपि तत्र तादृशशाब्दबोधानिवर्त्यसंशया-निवर्तकबोधजनकत्वस्यैव सम्यक्त्वात्। अन्यथा तादृशशाब्दबोधान्यतम-त्वाप्रसिद्ध्याव्याप्तिरित्याह। विशेष्यदले इति अन्यतमबोधदले इत्यर्थः।

अत्र यादृशपक्षसाध्यका इत्यादिपरिचायकघटकस्य प्रकृतपक्षसाध्यकार्थ-कत्वे एव तत्र यादृशरूपावच्छिन्नपक्षे यादृशरूपावच्छिन्नप्रकारकबोधलाभा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वन्हित्वावच्छिन्नसाध्यकप्रतिज्ञया घटवद्भूतलादिघटितधर्मावच्छिन्नविशेष्यकः पर्वतत्वावच्छिन्नपक्षकप्रतिज्ञया च तादृशधर्मावच्छिन्नप्रकारकोपि बोधो जन्यते तन्निवर्त्यश्च भूतलं घटवन्नवेति संशयोपीति प्रतिज्ञायां प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकत्वस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वस्य वाऽनुपादाने तावद्बोधानिवर्त्यसंशयाऽप्रसिद्धिरतस्तदुपादानम् ।

---

न्निवर्तकत्वान्वयिनां जनकतान्वयिनां च बोधानां यादृशरूपावच्छिन्नपक्षसाध्यविषयकत्वस्य लाभः इति प्रथमतः परिचायकप्रविष्टयोः पक्षसाध्ययोः प्रत्येकप्रयोजनमाह। वन्हित्वावच्छिन्नसाध्यकप्रतिज्ञयेति । वन्हिमानित्याकारिकयेत्यर्थः । घटवद्भूतलादिघटितधर्मावच्छिन्नविशेष्यक इति । अस्य बोधो जन्यते इत्यनेनान्वयः । तादृशधर्मावच्छिन्नेति । घटवद्भूतलादिघटितवन्हित्वावच्छिन्नेत्यर्थः । संशयोपीति । संशयाऽप्रसिद्धौ हेतुः । तथा च यादृशरूपावच्छिन्नपक्षकत्वानुक्तौ यादृशरूपावच्छिन्नसाध्यकप्रतिज्ञाः संप्रदायसिद्धाः यादृशरूपावच्छिन्नप्रकारकबोधजनिकाः तादृशरूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्तकबोधान्यतमबोधाजनकत्वे सति तत्तद्रूपावच्छिन्नसाध्यकन्यायान्तर्गतत्वं प्रतिज्ञात्वम् इत्युक्तौ घटवद्भूतलसमानकालीनः पर्वतोवन्हिमानिति प्रतिज्ञाजन्यो वन्हिमदभिन्नस्तादृशपर्वत इति बोधस्तन्निवर्त्यश्च भूतलं घटवन्नवेतिसंशयोपि, एवं रीत्या तदनिवर्त्यसंशयाप्रसिद्धयाऽसंभवः स्यादतस्तदुपात्तमितिभावः । एवं प्रकृतसाध्यतावच्छेकावच्छिन्नप्रकारकत्वानिवेशे घटवद्भूतलकालीनवन्हिमदभिन्नः पर्वत इति बोधमादायाऽसंभवो बोध्यः । ननु पक्षसाध्ययोरेकतरस्य निवेशे तादृशशाब्दत्वावच्छिन्ननिवर्त्तकतानिवेशेऽवच्छिन्नत्वं व्यापकतारूपमेव वाच्यम्, एवं च तादृशबोधत्वव्यापकनिवर्तकताया अप्रसिद्धिरेव वक्तुमुचितेति संशयाऽप्रसिद्धिकथनमसंगतमिति चेन्न । निवर्तकतायां स्वरूपसंबन्धरूपावच्छिन्नत्वं निविष्टमित्यभिप्रायात् ।

ननु प्रकृतपक्षसाध्यतावच्छेदकावच्छिन्नत्वनिवेशोव्यर्थः, एवं तादृशबोधानिवर्त्यसंशयानिवर्तकत्वमपि अफलमित्याशंक्य समाधत्ते । **यत्किंचिद्रूपावच्छिन्नेति । निवेशने इति प्रागुपदर्शित** एवेति । **अतिप्रसंग इति** योजना । वन्हिसाध्यकोपनयस्य वन्हिव्याप्यधूमसाध्यकप्रतिज्ञार्थबोधजनकत्वाद् वन्हिसाध्यकन्यायान्तर्गतत्वाच्च प्रतिज्ञात्वापत्तिप्रसंग इत्यर्थः । ननु

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यत्किंचिद्रूपावच्छिन्नपक्षसाध्यकप्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधजनकत्वस्य यत्किंचिद्रूपावच्छिन्नपक्षसाध्यकन्यायान्तर्गतत्वस्य निवेशनेऽतिप्रसंगः प्रागुपदर्शितएवेति यादृशरूपावच्छिन्नपक्षसाध्यकप्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधानिवर्त्यसंशयानिवर्तकबोधाजनकत्वं तादृशरूपावच्छिन्नपक्षसाध्यकन्यायान्तर्गतत्वं निवेशितम्

अधिकं तु इति न्यायेन साध्यांशे हेतुज्ञानज्ञाप्यत्वमवगाहमानेपि निगमनादिजन्यबोधे प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकत्वस्याक्षतत्वान्निगमनाद्यतिव्याप्तिवारणाय तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्तकत्वरूपतादृशबोधानतिरिक्तविषयकत्वं बोधविशेषणम्, इत्थं च प्रतिज्ञाजन्यबोधानिवर्त्यस्य वन्हिर्धूमज्ञानज्ञाप्योनवेत्यादिसंशयस्य निवर्तकतया तादृशबोधवारणम्।

नच प्रतिज्ञाजन्यबोधस्य पर्वतत्वावच्छिन्नविशेष्यकवन्हिमत्वाद्यवच्छिन्नप्रकारकबोधत्वेनैवोपादेयतया निगमनादिजन्यबोधस्यापि तथात्वात्तन्निवर्त्यत्वमुक्तसंशयस्याऽक्षतमेवेति वाच्यम्।

---

तादृशान्यतमबोधजनकत्वमेवास्तु किं तादृशबोधानिवर्त्यसंशयानिवर्तकत्वनिवेशनेत्यत आह। अधिकं त्विति। साध्यांशे। वन्ह्यंशे। हेतुज्ञानज्ञाप्यत्वं। धूमज्ञानज्ञाप्यत्वं। निगमनादिजन्यबोधे। धूमज्ञानज्ञाप्यवन्हिमदभिन्नः पर्वत इत्याकारके। अक्षततयेति। पर्याप्त्यनिवेशादितिभावः। निगमनादीत्यादिपदात् अनतिरिक्तविषयकत्वघटकसाध्यतावच्छेदकसंबन्धनिवेशव्यावृत्तिस्थलस्य हेतुत्वं प्रमेयं प्रमेयादित्यादौ हेत्ववयवस्य परिग्रहः। इत्थं च। बोधे तादृशविशेषणे च। तथापि निगमनेऽतिव्याप्तिमाशङ्कते। नचेति। प्रतिज्ञाजन्यबोधस्य। वन्हिमदभिन्नः पर्वत इत्याकारकस्य। बोधत्वेनैवेति। बोधत्वनिष्ठं प्रतिबन्धकतावच्छेदकत्वं स्वरूपसंबन्धरूपमित्यभिमानः। उपादेयतया। प्रविष्टतया। निगमनादिजन्यबोधस्यापीति। धूमज्ञानज्ञाप्यवन्हिमदभिन्नः पर्वत इति बोधस्यापीत्यर्थः। अपिना प्रतिज्ञाजन्यबोधसमुच्चयः। तथात्वात्। पर्वतत्वावच्छिन्नविशेष्यकवन्हिमत्वावच्छिन्नप्रकारकत्वात्। तन्निवर्त्यत्वं। निगमनजन्यबोधनिवर्त्यत्वं। उक्तसंशयस्येति। वन्हिर्धूमज्ञानज्ञाप्यो नवेति संशयस्य। अक्षतमेवेति। तथा च निगमनेऽतिव्याप्तिस्तदवस्थैवेति भावः। प्रसक्तामतिव्याप्तिं निराकरोति। अप्रामाण्यज्ञानानास्कन्दितेत्यादिना।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अप्रामाण्यज्ञानानास्कन्दिततादृशविशिष्टार्थविषयकनिश्चयत्वावच्छिन्नानिवर्त्यत्वस्यैव निवेशनीयत्वात्, उक्तसंशयस्य धूमज्ञानज्ञाप्यत्वाविषयकवन्हिमत्पर्वतविषयकनिश्चयानिवर्त्यत्वेन तथाविधनिश्चयत्वावच्छिन्नाऽनिवर्त्यत्वाऽक्षतेः।

एतेन सर्वेषामेव संशयानां वन्हिमत्पर्वतादिविषयकसमूहालंबनात्मकत्वविरोधिनिश्चयनिवर्त्तनीयतया तादृशबोधानिवर्त्यसंशयाऽप्रसिद्धिरित्यपि निरस्तम्। तादृशनिश्चयत्वनिष्ठं निवर्त्तकतावच्छेदकत्वं च न स्वरूपसंबन्धविशेषः किन्त्वनतिरिक्तवृत्तित्वम्, तेन संबन्धी वन्हिमान्नवेत्याकारकैकदेशसंशयं प्रति वन्हिसंबन्ध्यभिन्नपर्वतादिनिश्चयत्वेनाऽप्रतिबन्धकत्वेऽपि तादृशसंशयानिवर्तकप्रतिज्ञाजन्यबोधस्य नाऽसंग्रहः। अत एव धूमादालोकवान् पर्वतोवन्हिमान्धूमादित्यादौ हेतुजन्यबोधानिवर्त्यहेतुत्वं धूमीयं नवेति संशयं प्रति प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकनिश्चयत्वेनाऽप्रतिबन्धकत्वेपि न विशेष्यदलवैयर्थ्यम्।

---

**तादृशविशिष्टार्थविषयकेति**। प्रतिज्ञार्थविषयकेत्यर्थः। **निश्चयत्वावच्छिन्नाऽनिवर्त्यत्वस्यैवेति**। प्रतिज्ञार्थविषयकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयताशून्यत्वस्यैवेति समुदितार्थः। निश्चयत्वावच्छिन्नत्वं न स्वरूपसंबन्धविशेषः इत्यनुपदमेव वक्ष्यति। **उक्तसंशयस्य**। वन्हिर्धूमज्ञानज्ञाप्योनवेति संशयस्य। **तथाविधेति**। वन्हिमत्पर्वतविषयकेत्यर्थः। **निश्चयत्वावच्छिन्नाऽनिवर्त्यत्वाऽक्षतेरिति**। वन्हिमत्पर्वतविषयकनिश्चयत्वावच्छिन्नाऽनिवर्त्यत्वसत्वान्नोक्तातिव्याप्तिरिति भावः। **एतेन**। निश्चयत्वावच्छिन्नानिवर्त्यत्वनिवेशेन। **स्वं**—संशयः। **तादृशेति**। वन्हिमत्पर्वतविषयकेत्यर्थः। **निरस्तमिति**। पर्वतोवन्हिमान्नवेतिसंशयातिरिक्तसंशयं प्रति वन्हिमत्पर्वतविषयकनिश्चयत्वेन न प्रतिबन्धकत्वं-किन्तु घटवद्भूतलादिविषयकनिश्चयत्वेन प्रतिबन्धकत्वादिति भावः। **तेन**। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेन। **नाऽसंग्रह इति**। तादृशनिश्चयत्वस्य तादृशसंशयनिरूपितप्रतिबन्धकताव्यापकत्वादिति भावः। **अत एव**। तादृशनिश्चयत्वव्यापकत्वनिवेशादेव। **हेतुजन्यबोधनिवर्त्येति**। हेतुत्वं धूमीयमितिबोधनिवर्त्येत्यर्थः। एतेन हेतुजन्यबोधे तादृशसंशयनिवर्तकत्वस्यैव सत्वादतिव्याप्तिविरहः सूचितः। **अप्रतिबन्धकत्वेपीति**। एतेन तादृशसंशये तादृशनिश्चयानिवर्त्यत्वं सूचितम्। **न विशेष्यदलवैयर्थ्यम्**। विशेष्यदलं—तादृशबोधान्यतमदलम्। **वैय-**

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वन्हिमत्त्वाद्यवच्छिन्नप्रकारकनिश्चयत्वावच्छिन्ननिवर्त्यस्य पर्वतत्वाद्यवच्छिन्नविशेष्यकनिश्चयत्वावच्छिन्ननिवर्त्यस्य चाऽप्रसिद्धिरतो विशिष्य विशेष्यप्रकारकोभयनिवेशनम् ।

यद्यप्यत्र प्रतिज्ञाप्रतिपाद्यस्य विधेर्यविशिष्टधर्मिण एव यादृशविशिष्टार्थेत्युपादानसंभव इति यादृशविशिष्टार्थबोधिका इत्युपेक्ष्य विशेष्यप्रकारयोः खण्डश उपादानसूचनाय पक्षे यादृशविशिष्टार्थबोधिका-इत्यभिधानमनुचितम् । तथापि धमादालोकवान्पर्वतोवन्हिमान्धूमादित्यादौ प्रतिज्ञार्थहेत्वर्थविषयकसमूहालंवनबोधजनकहेत्वन्ते हेतौ वान्यायावयवत्वं परित्यज्य न्यायान्तर्गतत्वनिवेशनपक्षे प्रतिज्ञाजन्यबोधनिष्ठैकदेशबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतामादायैकदेशे चातिप्रसंगवारणाय विशिष्टार्थविषयकबोधत्वावच्छिन्नजन्यताप्रतियोगिकजनकतानिवेशे पर्वतोवन्हिमानित्यादिप्रतिज्ञाया असंग्रहः, वन्ह्यादिशून्यपर्वतादौ वन्हिमत्वाद्यवगाहिभ्रमात्मकशाब्दबोधसाधारण्यानुरोधेन तत्तत्पदार्थानां परस्परमुपश्लेषावगाहित्वस्यैव तादृशप्रतिज्ञाजन्यतावच्छेदकत्वोपगमात् तत्ताद्विशिष्टार्थविषयकत्वस्याऽतथात्वादिति ।

---

र्थ्यमिति । विशेष्यदलासत्वे धूमादालोकवान्पर्वतोवन्हिमानिति प्रतिज्ञाजन्यबोधत्वस्य हेतुत्वं धूमीयंनवेति संशयनिरूपितप्रतिबन्धकताव्यापकत्वादतिव्याप्तिः स्यादिति भावः । उभयनिवेशनमिति । पूर्वमेकतरधर्मावच्छिन्नविषयताकत्वावच्छिन्ननिवर्तकताया, इदानीं च तादृशविषयताकत्वव्यापकनिवर्त्तकताया निवेश इति भेदः ।

ननु अभेदसंबन्धेन साध्यवद्विशिष्टपक्षविषयकत्वरूपविशिष्टविषयकत्वमेवाऽनतिरिक्तविषयकत्वघटकबोधविशेषणमिति भ्रमसाधारणनिरूप्यनिरूपकभावापन्नविषयिताशालित्वेन बोधानां निवेशस्य पक्षे यादृशविशिष्टवत्वबोधिका इति ग्रन्थेन दीधितिकृतां प्रदर्शनवैयर्थ्यमित्याशंकते यद्यपीति । यादृशविशिष्टार्थबोधजनिका इत्युक्तौ वास्तवविशिष्टविषयिताशालिबोधप्रदर्शने जनकतास्वपि बोधेपि वास्तवविशिष्टविषयताशालित्वलाभादसंभवं वक्तुं भूमिकामारचयति तथापीत्यादिना । हेत्वर्थमात्रविषयकबोधोपादाने तस्य वास्तवप्रतिज्ञार्थविषयकत्वेनाऽन्यतमान्तर्गतत्वाभाव इत्यग्रिमगीत्या हेत्यर्थविशिष्टसाध्यवैशिष्ट्यावगाहिबोधस्य नानतिरिक्तविषयकत्वमितिसमूहालंबनानुधावनम् । न्यायावयवत्वमुभयघटकेत्यादिविशेषणाघटितमित्याशयेन हेत्वन्ते, तन्निवेशमभिप्रेत्य च हेतावित्युक्तम् । एकदेशेप्यतिव्याप्तिमाह ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अनतिरिक्तविषयकबोधनिष्ठतादृशपरस्परोपश्लेषावगाहित्वावच्छिन्नजन्यताप्रतियोगिकजनकताया निवेशसूचनाय तथाभिधानम्। परस्परोपश्लेषावगाहिशाब्दत्वे जन्यतावच्छेदकतापर्याप्त्यनिवेशान्नानतिरिक्तविषयकत्वदलवैयर्थ्यमित्यवधेयम्।

भेदादिसाध्यकस्थले पृथिवीतरेभ्योभिद्यते इत्यादिप्रतिज्ञाप्रतिपाद्यभेदाश्रयत्वादिरूपयत्किंचिदेकार्थविषयकनिश्चयाप्रतिबध्यभेदादिकोटिकसंशयं प्रति पृथिवी नेतराणीत्यादिप्रतिज्ञाजन्यभेदादिप्रकारकनिश्चयस्य प्रतिबन्धकतया न कस्याश्चिदपि प्रतिज्ञायास्तादृशसंशयानिवर्तकबोधजनकत्वमतस्तद्विशिष्टार्थनिश्चयनिवर्त्यत्वाभावकूटनिवेशनम्। प्रतिज्ञाबोधस्य स्वसमानाकारानुमितौ सिद्धिविधया प्रतिबन्धकत्वात्तादृशानुमितेश्च सिषाधयिषाकालीनतादृशबोधाप्रतिबध्यतया तादृशाऽप्रामाण्यज्ञानानास्कन्दितप्रतिज्ञाप्रतिपाद्यविशिष्टार्थनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यत्वादसंभव इत्यतो ज्ञानसामान्यमुपेत्य संशयपर्यन्तानुधावनम्।

---

प्रतिज्ञाजन्येति। एकदेशे चेति। प्रतिज्ञाघटके धूमादितिभागे, आलोकवानितिभागे, वन्हिमानिति भागे चेत्यर्थः। अतथात्वादिति। येन रूपेण विषयिताया अवच्छेदकत्वं तस्यास्तेनैव रूपेण स्वरूपसंबन्धरूपावच्छेदकतया निवेशः। अन्यथा विशिष्टविषयितानिवेशे कथंता स्यात्तन्निवेशेपि अग्रिमाया योग्यताया निर्वन्हिपर्वतपरपर्वतोवन्हिमानिति वाक्यवारणायावश्यकत्वादिति बोध्यम्। तथात्वाभिधानमिति। पक्षे यादृशविशिष्टार्थबोधिका इत्यभिधानम्। वैयर्थ्यमिति। पर्याप्त्युपादाने च निगमनजन्यबोधस्याधिकावगाहितया तद्वैयर्थ्यं स्यादितिभावः। ननु पर्याप्त्यनिवेशे धूमादालोकवान्पर्वतोवन्हिमान्धूमादित्यादौ प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिर्दुर्वारैव तादृशवाक्यद्वयजन्यविशिष्टवैशिष्ट्यावगाहिबोधनिष्ठहेत्वर्थविशिष्टप्रतिज्ञार्थविषयकत्वावच्छिन्नजन्यतायाः प्रतिज्ञार्थविषयकत्वावच्छिन्नतया तन्निरूपितजनकताशालित्वात्। न च तादृशविशिष्टवैशिष्ट्यबोधो नानतिरिक्तविषयकः, वन्हिर्धूमज्ञानज्ञाप्यो नवेति संशयस्यैव प्रतिज्ञार्थबोधानिवर्त्यतया तन्निवर्तकत्वादिति वाच्यम्। एवमपि धूमाद्वन्हिमतः सधर्मा पर्वतोवन्हिमान्धूमादित्यादौ हेत्वन्तेऽतिव्याप्तिः, विशिष्टवैशिष्ट्यावगाहिबोधनिवर्त्यत्वस्य वन्हिर्धूमज्ञानज्ञाप्योनवेति संशये सत्वेन तदनिवर्त्यसंशयाऽनिवर्तकत्वस्याक्षतत्वादिति चेन्न। एवमपि तादृशप्रतिज्ञार्थविषयकनिश्चयत्वव्यापकनिवर्त्तकतान्यस्य पर्वतोधूमज्ञानज्ञाप्यवन्हिमान्नवेति संशयस्य निवर्तकतयैवाऽदोषादिति न पर्याप्तिनिवेश आवश्यक इति।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न चाऽनुमितेस्तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यत्वेऽपि तदप्रतिबन्धकसिषाधयिषाकालीनबोधजनकत्वमादाय प्रतिज्ञायां लक्षणसमन्वयः संभवतीति संशयपदमनर्थकं, स्वरूपयोग्यतारूपजनकताया एव निवेशनीयतयाऽव्याप्तेरप्यनवकाशादिति वाच्यम्। अनिवर्तकत्वं हि प्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वं न तु प्रतिबन्धकत्वाभावः, तथा सति अप्रामाण्यज्ञानास्कन्दितबोधमादाय निगमनातिव्याप्तितादवस्थ्यात्। तथा च सिषाधयिषाकालीनसिद्धेरप्रतिबन्धकत्वेऽपि प्रतिबन्धकतावच्छेदकविषयिताशालित्वेनानुमित्यनिवर्तकत्वाऽसंभवात्।

न च सिद्धेः पूर्वं परतो वा सिषाधयिषाया उत्पादस्थले द्वितीयक्षणे प्रथमक्षणे वा सिषाधयिषाविरहविशिष्टत्वमक्षतमेवेति सिषाधयिषायामपि सिद्धौ अनुमितिप्रतिबन्धकत्वमक्षतमेवेति कथं तस्या अप्रामाण्यज्ञानास्कन्दिततादृशविशिष्टार्थनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यत्वमिति वाच्यम्।

---

ननु धूमाद्वन्हिमत्पर्वतपक्षधर्मा पर्वतोवह्निमान्धूमादित्यादौ हेत्वन्तेऽतिव्याप्तिः, तत्र विशिष्टवैशिष्ट्यावगाहिबोधनिवर्त्यताया उक्तसंशयेऽक्षतत्वादिति चेन्न। उपनयानुत्थानेन तादृशप्रतिज्ञाया एवाऽसत्वात्।

ननु पर्वतोवन्हिमान्धूमादित्यादौ हेत्वर्थविशिष्टप्रतिज्ञार्थविषयकबोधजनकहेत्वन्तेऽतिव्याप्तिरेव नास्ति साध्यतावच्छेदके प्रकारतावच्छेदकतापर्याप्तिनिवेशादिति चेन्न। अनतिरिक्तविषयकत्वदलेनैव वारणात्तत्पर्याप्तिरपि न निवेश्यते इत्यभिप्रायात्। तद्विशिष्टार्थनिश्चयानिवर्त्यत्वाभावकूटनिवेशनमिति। तथा च भेदप्रकारकनिश्चयनिवर्त्यत्वस्यैव सत्वान्नाव्याप्तिरिति भावः। तादृशनिश्चयाऽनिवर्त्यज्ञानसामान्यानिवर्तकत्वमित्युक्तौ असंभवः स्यात्—तथाहि—पक्षधर्मिकसाध्यवत्तानिश्चयाऽनिवर्त्या या सिषाधयिषाकालीननिश्चयसमानाकारानुमितिः तन्निवर्तकत्वस्यैव बोधे सत्वादित्याह। प्रतिज्ञाजन्यबोधस्येति। तादृशबोधस्य कथं तादृशानुमितिनिवर्तकत्वमित्याशङ्कते। न चेति। अनुमितेः। सिषाधयिषाकालीनानुमितेः। तादृशनिश्चयप्रतिबन्धकताकान्यत्वेपीति। तादृशनिश्चयानिवर्त्यत्वे ऽपीत्यर्थः। तदप्रतिबन्धकेति। तादृशानुमित्यप्रतिबन्धकेत्यर्थः। अव्याप्तेरपीति। सिषाधयिषाविरहकालीनबोधजनके इत्यर्थः। तथासति। प्रतिबन्धकताशून्यत्वनिवेशे सति। तथा च। प्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वनिवेशे च

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यादृशसिद्धेः पूर्वं परतश्च सिषाधयिषोत्पादस्तादृशसिद्धेरेवाऽप्रतिबन्धकत्वात् । प्रत्यक्षनिश्चयेपि विशेषदर्शनकालीनविपरीतनिश्चयस्याऽप्रतिबन्धकतामते तस्यापि प्रतिज्ञार्थनिश्चयत्वावच्छिन्नाप्रतिबध्यतया उक्तदिशाऽसंभव इति प्रत्यक्षसामान्यमुपेक्ष्य संशयपर्यन्तानुधावनम् ।

अत्र च तत्तद्विशिष्टार्थविषयकनिश्चयत्वावच्छिन्नसंशयप्रतिबन्धकताशून्यत्वस्य ज्ञानविशेषणत्वोपगमेनैवाऽतिरिक्तविषयकस्य हेत्वन्ताविभागजन्यबोधस्य तथाविधधूमज्ञानज्ञाप्यत्वादिसंशयप्रतिबन्धकताश्रयस्य वारणसंभवात्तादृशप्रतिबन्धकतात्वेनैव तथाविधनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यसंशयप्रतिबन्धकतानिवेशो न तु तथाविधनिश्चयत्वावच्छिन्नप्रतिबंधकताकान्यसंशयप्रतिबन्धकतात्वेन गौरवादित्यवधेयम् ।

---

सिद्धेः । प्रतिज्ञाजन्यबोधस्य । अप्रतिबन्धकत्वेपि । अनुमित्यप्रतिबन्धकत्वेपि । अनुमित्यनिवर्त्तकत्वाऽसंभवादिति । तथा च संशयपदानुपादानेऽसंभवः स्यादिति भावः । पुनः संशयत्वनिवेशवैयर्थ्यं शंकते । न चेति । तस्याः । अनुमितेः । तस्यापि । प्रत्यक्षस्यापि । प्रतिज्ञार्थनिश्चयसत्वेपि प्रतिज्ञार्थाभावव्याप्यवत्तानिश्चयादिना जनिते तदभावप्रत्यक्षे तादृशप्रतिबन्धकताकान्यत्वं बोध्यम् । उक्तदिशेति । अनिवर्तकत्वस्य प्रतिबन्धकतावच्छेदकविषयिताशून्यत्वरूपस्य निवेशावश्यकत्वप्रदर्शनदिशेत्यर्थः ।

ननु प्रतिबन्धकत्वाभावस्यैव निवेशः सम्यक्, प्रतिबन्धकतावच्छेदकविषयितापर्यन्तनिवेशेऽसंभवात् । वन्हिमत्त्वाद्यवच्छेदेन घटाभावावगाहिग्रहेण वन्हिमत्वादौ घटव्याप्यत्वगाहिग्रहेण वा सहितस्य प्रतिज्ञार्थबोधस्य पर्वतोघटवान्नवेति संशयनिवर्तकत्वात् । प्रतिबन्धकत्वाभावनिवेशे तु अवच्छेदकधर्मदर्शनशून्यकालीनप्रतिज्ञाजन्यबोधमादाय लक्षणसमन्वयसंभवादिति चेन्न । ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताया एवोपादानात् ।

प्रतिबन्धकत्वाभावनिवेशपक्षं रोचयन्तोऽत्र संशयांशे विशिष्टभेदकूटनिवेशमपेक्ष्य प्रतिबन्धकतायां तादृशनिश्चयत्वानवच्छिन्नत्वनिवेशे लाघवमादर्शयन्ति अत्र चेत्यादिना ।

निश्चयत्वानवच्छिन्नत्वं-निश्चयत्वाऽव्यापकत्वं, तादृशनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वकूटम्, कूटोपादानप्रयोजनं स्फुटमेव[1] । स्वरूपसंबन्धावच्छिन्न-

---

तेन कृतेः साध्यतायां कृतिप्रकारकबोधानिवर्त्यस्य कर्तृसंशयस्य निवर्तको यः कर्तृप्रकारको बोधस्तज्जनकत्वेपि चैत्रः कर्ता इतिप्रतिज्ञायां नाव्याप्तिः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एवं च तादात्म्येन गवि साध्ये पक्षे गवाभेदस्य,

उक्तहेतुवारणाय तादृशबोधान्यतमेति । प्रकृतप्रतिज्ञाजन्यता यच्छेदकीभूतं यादृशयादृशबुद्धित्वं तादृशतादृशबुद्धित्वावच्छिन्नान्यतमजन्यतानिरूपितजनकतापर्यन्तस्य विवक्षणीयतयोक्तसमूहालंबनबोधमादाय न तत्रातिप्रसंग इत्युक्तप्रायम् ।

---

त्वाभावनिवेशे विशेष्यदलवैयर्थ्यापत्तेः, संबन्धो वन्हिमान्नवेत्यादिसंशयप्रतिबन्धकतामादायाऽव्याप्तेश्च । ज्ञानविशेषणत्वोपगमेनैवेति । ज्ञानं बोधः । हेत्वन्तादिभागजन्येति । निगमनघटकहेतुभागे इत्यर्थः । तथाविधेति । तत्तद्विशिष्टार्थविषयकनिश्चयत्वानवच्छिन्नेत्यर्थः । तादृशेति । तत्तद्विशिष्टार्थविषयकनिश्चयत्वानवच्छिन्नसंशयेत्यर्थः । तथाविधेति । तत्तद्विशिष्टार्थविषयकेत्यर्थः । उक्तेति । धूमादालोकवानित्यादिस्थलीयेत्यर्थः । बोधान्यतमत्वानिवेशे हेत्वर्थबोधकभागघटितप्रतिज्ञास्थलीयहेतावतिव्याप्तिरतस्तत्परित्यज्य जन्यतान्यतमत्वं निवेशयति । प्रकृतेति । पक्षे साध्यवैशिष्ट्यावगाहित्वं नान्यूनविषयकत्वं किन्तु तादृशतादृशबुद्धित्वमितिभावः । उक्तेति । धूमादालोकवान्पर्वतोवन्हिमान् हेतुत्वं च धूमीयमित्युक्तेत्यर्थः । जन्यतायां तादृशविषयित्वावच्छिन्नत्वं निवेश्यमिति प्रागभिधानेनैव जन्यतासु अन्यतमत्वं लब्धमित्येतद्दर्शयति उक्तप्रायमिति ।

इदमत्रावधेयम् । अनिवर्तकेत्यनेनाऽनतिरिक्तविषयकत्वं व्युत्पादितम् । तत्प्रयोजनं च हेत्वन्तस्य वारणमित्युक्तमेव, तावद्बोधानिवर्त्त्यो यो वन्हिर्धूमज्ञानज्ञाप्यो न वा इति संशयः तन्निवर्तकत्वाद्धेत्वन्तभागस्य । यद्यपि हेत्वन्तभागजनितस्य पर्वतोधूमज्ञानज्ञाप्यवन्हिमानितिबोधस्यापि तावदन्यतमबोधान्तर्गतत्वात्, वन्हिर्धूमज्ञानज्ञाप्यो न वेति संशयस्यापि तावदन्यतमबोधनिवर्त्त्यत्वादतिव्याप्तितादवस्थ्यम् । तथापि केवलप्रतिज्ञाव्यक्तीनां यादृशयादृशशाब्दधीजनकत्वं तादृशशाब्दसामान्यं यत्र यत्र प्रतिबन्धकं तदन्यसंशयाऽनिवर्तकत्वं विवक्षितम्, तथा च वन्हिर्धूमज्ञानज्ञाप्यो नवेति संशयस्य केवलप्रतिज्ञाजन्यबोधेनाऽप्रतिबन्धान्न हेत्वन्तभागेऽतिव्याप्तिः ।

अथैवमपि संशयपदं व्यर्थं प्रकृतपक्षसाध्यकप्रतिज्ञाव्यक्तीनां यादृशयादृशशाब्दधीजनकत्वं तादृशतादृशशाब्दसामान्यं यत्र यत्र प्रतिबन्धकं तदन्याऽनिवर्तकत्वमात्रस्यैव सम्यक्त्वात् । नचैतत्कालीनं वन्हिमत्पर्वतस्य शाब्दज्ञानं जायतामितीच्छाया अपि प्रतिज्ञाजन्यशाब्दसामान्याप्रतिबध्यत्वात्तन्निवर्तकं यदेतत्कालीनं वन्हिमत्पर्वतस्य शाब्दज्ञानं तज्जनिकायामिदानीन्तनप्रतिज्ञाया-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गवाभेदस्येत्यादि । सकलषष्ठ्यन्तैः समं बोधा विशिष्य धर्त्तव्या इत्यग्रिमस्याऽन्वयः । यद्यपि तादात्म्येन गोसाध्यकस्थले अनुमित्यन्यूनानतिरिक्तविषयकबोधजनकत्वं प्रतिज्ञायाः संभवतीति प्रागभिहितं, तावतैव गवाभेदः प्रतिज्ञाप्रतिपाद्य इत्यस्य लाभात्तत्र तादृशबोधमादाय लक्षणं कर्तव्यमितिस्फुटमेव । तथापि तत्र तादृश एव बोधो लक्षणघटकः नत्वन्यविधोबोध इति स्फुटीकर्तुं तदुपादानम् ।

---

मव्याप्तिवारणार्थं संशयपदमिति वाच्यम् । ज्ञानपदेनापि उक्तेच्छामादायाव्याप्तिवारणादितिचेत्, प्रागुक्तत्वात् ।

धूमादालोकवान्पर्वतोवन्हिमान्धूमादित्यादौ हेत्ववयवस्य वारणाय लक्षणोपात्तस्यान्यूनविषयकत्वदलस्य फलितार्थमाह तावतां बोधानामन्यतमेनाप्यनिवर्त्यस्येति । वक्तव्यमिति । अन्यूनानतिरिक्तविषयकत्वदलेनेत्यादिः । अत्र कल्पे सत्यन्तस्य न्यायान्तर्गतत्वमेवार्थो न तु न्यायावयवोर्थः, तावदन्यतमबोधानिवर्त्यसंशयानिवर्त्तकत्वदलस्य वैयर्थ्यापत्तेः, अवयवान्तरस्य तावद्बोधान्यतमबोधजनकत्वविरहाद्विशेष्यदलेनैव वारणसंभवात् । सत्यन्तस्य न्यायावयवत्वार्थकत्वे तु प्रागुक्तैव गतिः ।

यादृशत्वतादृशत्वयोरनुगतयोरभावाद्विशेषतः पर्यवसन्नं लक्षणमाह । दीधितौ-एवंचेति । पक्षे । इदन्त्वादिविशिष्टे । गवाभेदस्येति । अभेदसंबन्धेन गोरित्यर्थः । बोधाः विशिष्य धर्त्तव्या इत्यग्रिमेणान्वयः । तदेवाह । षष्ठ्यन्तैः सममित्यादिना । तथा च तादात्म्येन गोप्रकारकेदन्त्वावच्छिन्नधर्मिकशाब्दसामान्यानिवर्त्यसंशयानिवर्तकत्राध जनकत्वे सति अवयवाघटकप्रकृतन्यायान्तर्गतत्वं प्रकृतन्यायावयवत्वं वा तादात्म्येन गोसाध्यकेदन्त्वावच्छिन्न पक्षकप्रतिज्ञात्वम् । इदन्त्वावच्छिन्नधर्मिकतादृशगोप्रकारकत्वरूपाऽन्यूनविषयकत्वं बोधविशेषणं न देयम्, प्रयोजनविरहात्, धूमादालोकवान्पर्वतोवन्हिमान् धूमादित्यादिस्थलीयनिरुक्तावेव हेतुवारणार्थं तस्य प्रवेश्यत्वात् । स्फुटीकर्तुमिति । एतादृशस्थले अन्यतमत्वं न लक्षणघटकमिति दीधितिकृता व्यञ्जितम् । तादात्म्यातिरिक्तसंबन्धेनेति । तेन कालिकेन वन्हेः साध्यत्वे कालो वन्हिमानिति प्रतिज्ञाया अपि वन्हिमदभेदमादायैव निर्वाह्यत्वान्न न्यूनतेति ध्येयम् । वन्हाविति । साध्ये इति पूर्वेणान्वयः । एवमग्रेपि तदेवाह । सवन्हाविति । सप्तम्यन्तत्रयमिति । वन्हौ-कृतौ-इतरेभ्योभेदे इति सप्तम्यन्तत्रयमित्यर्थः । दीधितौ-वन्हिमदभेदस्येति । बोधा विशिष्य धर्त्तव्या इत्यनेन वचनविपरिणतेनाऽन्वयः । तथा च पर्वतधर्मिकवन्हिमत्प्रकारकशाब्दसामान्या-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संयोगेन समवायेन वा वन्हौ वन्हिमदभेदस्य, समवायेन पाकस्य कृतौ-पाककृतिमत्वस्य, पाककर्त्रभेदस्य,

विशेषणतया इतरेभ्योभेदे, इतरभेदवत्ववत्वस्य,इतरान्याभेदस्य, इतरभेदवत्वस्य, इतरभिन्नाभेदस्य बोधा विशिष्य धर्तव्या इति दिक् ।

तादात्म्येन वन्हौ साध्येऽयंवन्हिरित्येव प्रतिज्ञा जायते तत्र च वन्हिमदभेदबोधो न लक्षणघटकः इत्यतः संयोगेन समवायेन वेति । तादात्म्यातिरिक्तसंबन्धेनेत्यर्थः । वन्हौ इत्यादि सप्तम्यन्तत्रयं साध्ये इति प्राक्तनेनान्वितम् । वन्हिमदभेदस्यति । तत्राप्येतादृशबोधस्य तादृशप्रतिज्ञाजन्यतायाः प्रागुपदर्शितत्वेपि अन्यविधबोधासंभवमाविष्कर्तुमेतदुपादानम् । पाककृतिमत्वस्येति । पाककृतिसमवायस्येत्यर्थः । पचतीति प्रतिज्ञातस्तद्बोधादिति भावः । पाककर्त्रभेदस्येति । पाककृत्यवछिन्नाभेदस्य पाककृतिमत्वावच्छिन्नाभेदस्य चेत्यर्थः । पक्ता पाककृतिमानित्यादितस्तद्बोधादिति भावः ।

इतरभेदवत्ववत्वस्येति । इतरभेदाश्रयतासंबन्धस्येत्यर्थः । इतरेभ्यो-भिद्यते इत्यादितस्तादृशबोधोदयादिति भावः । इतरान्याभेदस्येति । इतरभेदावच्छिन्नाभेदस्येत्यर्थः । इतरान्येति प्रतिज्ञातस्तद्बोधादिति भावः । इतरभेदवत्वस्येति । इतरभेदसंसर्गस्येत्यर्थः । नेतराणीत्यतस्तद्बोधादिति भावः । इतरभिन्नाभेदस्येति । इतरभेदाश्रयत्वावच्छिन्नाभेदस्येत्यर्थः । इतरभिन्नेत्यादिप्रतिज्ञातस्तद्बोधादिति भावः ।

---

निवर्त्यसंशयानिवर्तकबोधजनकत्वे सति प्रकृतन्यायावयवत्वं संयोगेन वन्हिसाध्यक पर्वतपक्षकप्रतिज्ञात्वम् । प्रागुपदर्शितत्वेपीति । वन्हिमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य वन्हेः संयोगात्मकः संबन्धोभासते इति ग्रन्थेनेति भावः । पाककृतेः साध्यतायां चैत्रः पचति चैत्रः पक्ता इत्येवं प्रतिज्ञाद्वैविध्याद् बोधद्वयं दर्शयति । समवायेन पाकस्य कृताविति । साध्ये इत्यनुवर्तते । पाककृतिमत्वस्येति । बोधा विशिष्य धर्तव्या इत्यनेनाऽन्वयः । पचतीति प्रतिज्ञातस्तद्बोधादिति । पाककृतिमत्त्वबोधादित्यर्थः । आख्यातार्थकृतेरेव चैत्रे प्रकारत्वादिति भावः । पाककर्त्रभेदस्येति । बोधा विशिष्य धर्तव्या इत्यनेनाऽन्वयः । पक्ता—पाककृतिमानित्यादितस्तद्बोधादिति । चैत्रः पक्ताइत्यत्र कृदर्थस्य,चैत्रः कृतिमानित्यत्र च मतुवर्थस्य कर्त्तुरेव चैत्रे प्रकारत्वात् । तथा च चैत्रधर्मिको यः पाककृतिप्रकारको यश्च तादात्म्येन पाककर्तृप्रकारको बोधस्तदन्यतरानिवर्तनीयसंशयानिवर्तकतदन्यतर-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अनतिरिक्तविषयकत्वदलार्थः पूर्ववदेव, अन्यूनविषयकत्वं तावद्बोधनिवर्त्यंयावत्संशयनिवर्तकत्वं, दर्शितहेतुजन्यबोधस्य ज्ञानज्ञाप्यत्वं धूमीयं नवेत्यादि प्रतिज्ञाजन्यबोधनिवर्तनीयसंशयप्रतिबन्धकत्वेपि तादृशयावत्संशयान्तर्गतपर्वतोवन्हिमान्नवेत्यादिसंशयानिवर्त्तकत्वेन वारणासंभवादिति वदतोमतमाह् । तावदिति । तत्तद्विशिष्टार्थविषयकेत्यर्थः । तावद्बोधनिवर्त्यंयावत्संशयेति । तत्तद्विशिष्टार्थबोधान्यतमयत्किञ्चिद्बोधनिवर्त्ययावत्संशयेत्यर्थः । तेन भेदादिसाध्यकस्थले भेदतदाश्रयत्वादिकोटिकनानाविधसंशयानामेव प्रकृतसाध्यपक्षकप्रतिज्ञार्थबोधनिवर्त्त्ययावत्संशयान्तर्गततया तावत्संशयनिवर्त्तकत्वं न कस्यापीति निरस्तम् । तावत्संशयनिवर्त्तकतायाः पृथिवी नेतराणि पृथिवी इतरेभ्योभिद्यते

---

बोधजनकत्वे सति प्रकृतन्यायावयवत्वं चैत्रपक्षकपाककृतिसाध्यकप्रतिज्ञात्वमितिभावः । पृथिव्यामितरभेदस्य साध्यतायां चतुर्विधस्यैव प्रतिज्ञाजन्यबोधस्य संभवात्तत्राऽन्यतमत्वेन बोधा उपादेया इत्याह । दीधितौ–विशेषणतयेत्यादिना । इतरेभ्योभेदे इति । साध्ये इत्यनुवर्तते । इतरभेदवत्त्ववत्त्वस्येति । बोधा विशिष्यधर्त्तव्या इत्यनेनान्वयः । इतरेभ्यो भिद्यते इत्यतस्तादृशबोधादयादिति । पृथिवी इतरेभ्या भिद्यते इत्यत्राऽऽख्यातार्थाऽऽश्रयत्वस्य पृथिव्यां प्रकारत्वात्, इतरान्याभेदस्येति । बोधा विशिष्य धर्त्तव्या इत्यनेनाऽन्वयः । इतरान्येति प्रतिज्ञातस्तद्बोधादिति । पृथिवी इतरान्या इत्यत्र तादात्म्यसंबन्धेन पृथिव्यामितरान्यस्यैव प्रकारत्वादिति भावः । इतरभेदवत्वस्येति । बोधा विशिष्य धर्त्तव्या इत्यनेनान्वयः । नेतराणीत्यतस्तद्बोधादिति । पृथिवी नेतराणीत्यत्र पृथिव्यामितरभेदस्य नञर्थस्य साक्षात्प्रकारत्वादिति भावः । इतरभिन्नाभेदस्येति । अस्यापि बोधाविशिष्य धर्तव्या इत्यनेनाऽन्वयः । इतरभिन्नेत्यादिप्रतिज्ञातस्तद्बोधादिति । पृथिवी इतरभिन्ना इत्यत्र तादात्म्यसंबन्धेन पृथिव्यामितरभिन्नस्य प्रकारत्वादिति भावः ।

न च पृथिवी इतरान्येति प्रागुक्तक्रमेणैवाऽस्य गतार्थत्वम् । तत्राऽन्यत्वप्रकारेणैव भिन्नस्योपस्थापनात्, इह तु भिदधात्वर्थभिदाश्रयत्वस्येव निष्ठार्थाश्रयस्यैवाश्रयत्वरूपेण पृथिव्यामभेदेन भानात्ततोवैलक्षण्यादिति भावः ।

तथा च पृथिवीधर्मिकइतरभेदाश्रयत्वप्रकारको यश्च तादात्म्येन इतरान्य प्रकारकः, एवं इतरभेदप्रकारकः, तथा तादात्म्येन इतरभिन्नप्रकारको बोधः तदन्यतमानिवर्तनीयसंशयानिवर्तकतदन्यतमबोधजनकत्वे सति प्रकृतन्यायावयवत्वं पृथिवीपक्षकइतरभेदसाध्यकप्रतिज्ञात्वमेव ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तावद्बोधानिवर्त्यसंशयानिवर्तकतावद्बोधनिवर्त्यंयावत्संशयनिवर्त्तकबोधजनकत्वं वाच्यमित्यपि कश्चित् ।

इत्यादि प्रत्येकप्रतिज्ञाजन्यबोधेऽसत्वेपि एतादृशसकलवाक्यजन्यसमूहालंबनबोधस्य तावत्संशयनिवर्तकत्वात्, तत्र च निरुक्ताऽनतिरिक्तविषयकत्वस्यापि सत्वात्, तज्जनकत्वमादायैव प्रत्येकप्रतिज्ञासु लक्षणसमन्वयोबोध्यः । अत्र च स्वमतापेक्षया गौरवमेवाऽस्वरसबीजं बोध्यम् ।

---

मतान्तरमवतारयति । अनतिरिक्तविषयकत्वेति । पूर्ववदेवेति । तावद्बोधाऽनिवर्त्ययावत्संशयानिवर्तकत्वरूप एवेत्यर्थः । दर्शित हेत्विति । धूमादालोकत्वान्पर्वतोवन्हिमानित्यादिनेत्यादिः । बोधस्य । ज्ञानज्ञाप्यत्वं धूमीयमित्याकारकस्य । तेन । यत्किञ्चित्वनिवेशेन । यत्किंञ्चित्वनिवेशे नाव्याप्तिरित्याह । तावदिति । तत्रच । समूहालंबनबोधे च । तज्जनकत्वमादायैवेति । तादृशबोधजनकत्वमादायैवेत्यर्थः । अत्र च । अस्मिन्मते च । गौरवमेवेति ।

अथ धूमादालोकत्वान्पर्वतोवन्हिमान् धूमादित्यादौ प्रतिज्ञाहेतूभयजन्यसमूहालंबनबोधस्यापि तावद्बोधानिवर्त्ययावत्संशयाऽनिवर्त्तकत्वे सति तत्तद्विशिष्टार्थविषयकबोधान्यतमयत्किञ्चिद्बोधनिवर्त्यनिवर्तकत्वरूपऽन्यूनानतिरिक्तविषयकत्वविशिष्टत्वेन तन्निष्ठहेत्वर्थविषयकत्वावच्छिन्नजन्यतानिरूपितजनकताश्रये हेतावतिव्याप्तिसंभवे गौरवाभिधानं निर्बीजमिति चेन्न । निरुक्ताऽन्यूनाऽनतिरिक्तविषयकत्वव्यापकमुख्यविशेष्यत्वावच्छिन्नत्वस्य जन्यतायां विवक्षणे तादृशहेतौ नातिव्याप्तिः, तज्जन्यबोधीयमुख्यविशेष्यतायास्तादृशकेवलप्रतिज्ञाजन्यबोधसाधारणतादृशबोधत्वव्यापकत्वाभावात् । विशेष्यतायां मुख्यत्वनिवेशान्न प्रतिज्ञाजन्यबोधीयाऽऽलोकविशेषणतापन्नधूमज्ञानज्ञाप्यत्वविषयतामादाय हेतावतिव्याप्तिः । दर्शितावच्छेदकतायाः प्रकारतान्यत्वमते प्रतिज्ञाजन्यबोधीयाया धूमविशिष्टज्ञानज्ञाप्यत्वनिष्ठधर्मितावच्छेदकप्रकारतानिरूपितविषयताया इतरविशेषणतानापन्नत्वरूपमुख्यविशेष्यत्वाक्रान्तायास्तादृशबोधत्वव्यापकत्वेपि तस्या जन्यतानवच्छेदकतया तदवच्छिन्नजन्यताया अप्रसिद्धेर्न तामादाय हेतुवाक्येऽतिव्याप्तिरिति गौरवाभिधानं सबीजमिति ध्येयम् ।

ननु चैत्रः पचतीत्यादौ उपनयस्य दुर्वचत्वेन न्यायाभावाच्चैत्रः पचतीत्यस्य प्रतिज्ञात्वमेव न संभवतीति तत्र लक्षणसंगमनं दीधितिकृतामफलमेवे-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चैत्रः पचति, घटो नेतराणीति प्रतिज्ञायां साध्ये विषयत्वानुयोगित्वयोः संबन्धविधयैवानुप्रवेशात् यथोपदर्शितसाध्यगमतौपयिकव्याप्तिविशिष्टहेतुमत्वस्य च पक्षे उपनेयत्वात्तया चाऽयमित्याकारकः सुवच एव प्राचामुपनयः।

नव्यानां पुनरनन्यगतिकतया तद्व्याप्यहेतुमान् तद्वान्चेत्याकारो योग्यतावशाच्च तदा साध्यस्य तद्व्याप्यस्य वा परामर्शः।

ननु विषयतासंबन्धेन पाकाद्यवच्छिन्नकृत्यादेर्यत्र साध्यता तत्र कीदृशोपनयः, न तावत्पाककृतिव्याप्यवानित्याकारकः, तत्र तत्पुरुषघटकपाकादिपदस्य पाकादिविषयकादिलाक्षणिकतया पाकविषयकाभिन्न कृतित्वावच्छिन्नव्याप्तेरेव लाभात् प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपिताया व्याप्तेरलाभेनाऽर्थान्तरप्रसंगादित्यत आह। चैत्र इति। साध्ये। विशिष्टसाध्यशरीरे। विषयत्वाऽनुयोगित्वयोरिति। कृति—भेदांशे इत्यादिः। संबन्धविधयैवेत्येवकारेण विशेषणविधया व्यवच्छेदः। निपातार्थेन नामार्थस्य भेदान्वयधियोऽव्युत्पत्त्यविरुद्धतया नेतराणीत्यादौ प्रथमाया अनुयोगित्वार्थकत्वमसिद्धमिति हृदयम्। यथोपदर्शितेति। प्रतिज्ञोपस्थापितेत्यर्थः। उपनेयत्वात्। उपनयेन बोधनीयत्वात्। तादृशव्याप्तेरेवाऽऽकांक्षितत्वेन यः पाककृतिसामग्रीमान् स पचतीत्युदाहरणेन प्रतिपादनात्तादृशव्याप्तिविशिष्टस्य पक्षधर्मताकांक्षयैवोपनयप्रयोग इति भावः। सुवच एवेति। तथाशब्देन तादृशव्याप्तिविशिष्टहेतुमत एवोपस्थापनादिति भावः।

---

त्याशयेन शंकते। नन्विति। तत्र। उपनये। अर्थान्तरप्रसंगादिति। यद्रूपावच्छिन्नसाध्यबोधिका प्रतिज्ञा तद्रूपावच्छिन्नसाध्यव्याप्यस्यैव पक्षे उपनेयत्वादिति भावः। निपातार्थेनेति। निपातातिरिक्तनामार्थस्य तादृशनामार्थे भेदसंबन्धेनाऽन्वयोऽव्युत्पन्न इति नञो निपातेन तदर्थाभावे इतरपदार्थस्यभेदेनाऽन्वये बाधकाभावात्। व्युत्पत्त्यविरुद्धतयेति। नञो निपातत्वादितिभावः। हृदयमिति। अनुयोगितायाः संसर्गतावादिना नेतराणीतिवाक्यजन्यबोधसामग्र्याः अनुयोगिता नेतरीया इदं भेदानुयोगित्वाभाववदिति द्विविधप्रत्यक्षे प्रतिबन्धकत्वं वाच्यं, भिन्नविषयकत्वात्, अनुयोगितायाः प्रकारतावादिना तु अनुयोगितासंबन्धेनेतरभेदाभाववदित्येकविधप्रत्यक्षं प्रत्येवेति षष्ठ्यर्थस्वत्वस्य प्रकारत्वव्यवस्थापनदिशा अनुयोगितायाः प्रकारत्वे लाघवमस्वरसः। यः पाककृतिसामग्रीमान् सः पाककृतिमानित्युदाहरणोपदर्शितपाकविषयकाभिन्नकृतिव्याप्यत्वविशिष्टे पक्षधर्मत्वोपदर्शकः पाककृतिव्याप्य-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



केचित्तु वन्हिमान्नवेति विप्रतिपत्तौ संशये च वन्हिमत्तदन्योन्याभावयोस्तादात्म्यविशेषणत्वाभ्यां कोटित्वेन जिज्ञासितत्वादिति तादात्म्येन वन्हिमानेव साधयितुमुचितः, न तु वन्हिरजिज्ञासितत्वात् ।

ननु मणिकृता थालप्रत्ययार्थं वितर्क्यं तस्मात्तथेति निगमनस्य निराकरणीयतया तथापदघटितोपनयेपि तद्दोषग्रास इति अस्याननुमतस्तादृशोपनय इत्यत एतन्मतमनुसृत्याह । नव्यानामिति । ननु तत्पदेन यथोपदर्शितसाध्यस्येव तादृशसाध्यव्याप्तिविशिष्टहेतोरपि परामर्शसंभव इति व्याप्त्यादिपदप्रयोगवैयर्थ्यमित्याशयेनाह तद्वान्वेति । ननु पक्षादेरपि प्रक्रान्तत्वात्तस्यैव कथं नोपनयस्थतच्छब्देन परामर्श इत्यत आह । योग्यतेति । तात्पर्यवशादित्यर्थः । व्याप्तिविशिष्टहेतुमत्वस्यैवाकांक्षितत्वेन तत्परताया एव तत्र ग्रहादिति भावः । तदा । तच्छब्देन । साध्यस्येति प्रथमकल्पं, तद्वाप्यस्येति द्वितीयकल्पमभिप्रेत्य ।

पर्वतोवन्हिमानित्यादेर्न्यायस्य वन्हिसाध्यकत्वं निराकृत्य वन्हिव्याप्यधूमवांश्चायमित्याद्याकारकोपनयं निराकुर्वतां मतमाह । केचित्त्विति । विप्रतिपत्तौ कोटित्वं तज्जन्यस्मृतिविषयत्वं तज्जन्यप्रत्येकशाब्दबोधप्रकारत्वं, वा, न तु तदधीनसंशयप्रकारत्वं, अतो न संशये चेत्यस्य वैयर्थ्यम् । तत्प्रदर्शनं च संशये कोटितानिर्वाहकत्वेन तस्य स्वतोजिज्ञासायामतन्त्रत्वादित्यवधेयम् ।

---

वानित्युपनयः सुवच इत्याशंकां वारयितुमस्य तत्रानुदाहरणत्वं सूचयन्नाह । प्रतिज्ञोपस्थापितेति । अस्य साध्येऽन्वयः ।

वितर्क्येति । यदि तथाशब्दस्य प्रक्रान्तं यद्विशेष्यं स एवार्थस्तदोपनयजन्यबुद्धौ हेतुमत एव विशेष्यत्वेन प्रक्रान्तत्वात्तस्माद्धेतुमानित्यर्थः स्यात्, हेतुमति हेतौ वा हेतुज्ञानज्ञाप्यत्वान्वयो न संभवति, न हि हेतुमत्त्वादेव हेतुमत्वम्, अननुभवात् । यदि प्रक्रान्तप्रकारोर्थः तदोपनयजन्यबोधविशेष्यस्य पक्षस्य सामान्यतोऽन्वयव्याप्तौ प्रवेशेन प्रकारतया उक्त एव दोषः । यदि प्रक्रान्तसादृश्यं, तदाऽभिधेयं प्रमेयं ज्ञेयत्वादित्यादौ प्रक्रान्तं यदुपनयजन्यबोधविशेष्यमभिधेयं तद्भेदघटिततत्सादृश्याप्रसिद्धिरिति रीत्या वितर्क्येत्यर्थः । तादात्म्येन वन्हिमतः साध्यतायामेव पर्वतो वन्हिमानिति प्रतिज्ञा वन्हेः साध्यतायान्तु पर्वतस्तथा इत्याकारिका तथा च यादृशेत्यादिविवक्षां विनाऽन्यूनाऽनतिरिक्तविषयकत्वं यथाश्रुतमस्तीति स्वरसत एव दीधितिकृता केचित्तु इत्युक्तं तदवतारयति । पर्वत इति । एवं च तत्तद्विशिष्टार्थबोधगर्भलक्षणं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तथाचायमित्याकारको वन्हिमद्व्याप्यधूमवांश्चायमित्याकारको वा उपनयः। न तु वन्हिव्याप्यधूमवांश्चायमित्याकारकः, अर्थान्तरत्वादिति प्राहुः।

यद्यपि वन्हिमत उपस्थितिदशायां वन्हेरप्युपस्थिततया तादृशविप्रतिपत्तिवाक्याद् वन्हिकोटिकसंशयो भवितुमर्हति। तथापि स्वातन्त्र्येणकोट्युपस्थितिः संशयेप्रयोजिका इत्यभिप्रायेणेदमित्यवधेयम्। अथवा विप्रतिपत्तिवाक्याच्छाब्द एव संशय इति मतानुसारेणेदम्। वस्तुतो वन्ह्यभावस्य कोटितायामेव वन्हिकोटिकसंशय उपपद्यते, न तु वन्हिमद्भेदस्य, स्व—स्वाभावप्रकारकज्ञानस्यैव स्वसंशयत्वात्। प्रकृते च वन्ह्यभावो नोपस्थितः, अपि तु तद्वद्भेद एवेति वन्ह्यभावस्य कोटित्वाऽसंभवाद् वन्हिसंशयो न संभवतीत्यभिप्रायः। एतत्सूचनायैव वन्हिमद्भेदस्य कोटित्वमभिहितम्। तदभिधानस्य प्रयोजनान्तराभावात्।

यद्वा धर्मिणि तत्प्रकारकबोधौपयिकांक्षावत्पदजन्यतदुपस्थितिरेव धर्मिणि तत्कोटिकसंशयजनिका, पर्वतोवन्हिरभाव इत्यादितो वाक्याद्वन्ह्याद्युपस्थितौ पर्वतादौ वन्ह्यादिसंशयानुदयात्, तथा च पर्वतोवन्हिमानित्यादिवाक्यस्थवन्ह्यादिपदमपि न पर्वतादौ वन्ह्यादेर्भेदान्वयौपयिकाकांक्षावदिति न तादृशविप्रतिपत्तिवाक्याद् वन्ह्यादिकोटिक संशय इति परमार्थः। नवीनमतमनुसृत्याह। वन्हिमद्व्याप्येति। प्राहुरिति प्रशब्देनाऽत्राऽस्वरसाभावः सूचितः।

---

तु प्रतिज्ञार्थानां नानात्वे एवेत्याशयः। न्यायस्य। प्रतिज्ञायाः। निराकृत्येति। वन्हिमतः सिद्धौ अर्थत एव च वन्हिसिद्धेर्वन्ह्यभावसंशयनिवृत्तिसंभवात्। तज्जन्येति। विप्रतिपत्तिजन्येत्यर्थः। वाक्यद्वयाभिप्रायेणाह। तज्जन्येति। यथाश्रुतार्थे निरस्यति नत्विति। तदधीनेति। विप्रतिपत्त्यधीनेत्यर्थः। ननु विप्रतिपत्तौ कोटिप्रदर्शनं किमर्थमित्यत आह। तत्प्रदर्शनंचेति। विप्रतिपत्तौ कोटिप्रदर्शनं चेत्यर्थः। तथा च साधारणधर्माद्यसत्वेपि न क्षतिः। तस्य। विप्रतिपत्तिकोटित्वस्य। स्यातन्त्र्येणेति। तद्विशिष्टबुद्धौ तन्मुख्यविशेष्यकज्ञानत्वेन हेतुत्वादिति भावः। ननु शाब्दबोधजनकवन्हिपदार्थोपस्थितेरेव स्वातन्त्र्येण कोट्युपस्थितिरूपायाः सत्वात्कुतोन वन्हिकोटिकसंशय इत्यत आह। अथवेति। विप्रतिपत्तिकोटित्वं च तद्घटकपदजन्यस्मृतिकोटित्वम्, परोक्षज्ञानं निश्चयात्मकमेवेति सिद्धान्तमनुरुध्याह। वस्तुत इति। ननु तथापि वन्हिमद्भेदं कोटिं कृत्वा वन्हिकोटिकसंशयो नानुपपन्नोबाधकाभावादत आह। यद्वेति।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यत्र चाऽन्तरा तादृशबोधो न जनितस्तत्रापि तादृशाकांक्षायोग्यताशालित्वरूपं तज्जननयोग्यत्वमक्षतम् ।

फलोपधायकतारूपजनकतानिवेशशङ्कया प्रसक्तां तादृशशाब्दबोधानुपधायकप्रतिज्ञायामव्याप्तिं योग्यताविवक्षया निराकरोति । यत्र चेति । अन्तरेति । हेत्वर्थादिविषयकशाब्दबोधसामग्र्युत्तरमित्यर्थः । एतेन फलोपधानविवक्षणेऽवयवान्तरार्थविषयकशाब्दबोधमात्रोपधायकप्रतिज्ञायामव्याप्तिः प्रसज्यते अनतिरिक्तविषयकशाब्दबोधानुपधायकत्वादिति सूचितम् ।

तादृशेति । तादृशशाब्दबोधजनकज्ञानविषयेत्यर्थः । आकांक्षानिवेशात्पर्वतोवन्हिः संबन्धीत्यादिनिराकांक्षवाक्यव्युदासः । न च पर्वतोवन्हिमानित्यादिशाब्दं प्रति निराकांक्षतादृशवाक्यविषयकज्ञानत्वेनाऽजनकत्वात्तादृशशाब्दबोधजनकतावच्छेदकविषयताकत्वनिवेशेनैवोपपत्तौ आकांक्षानिवेशनमफलमिति वाच्यम् । पर्वतोवन्हिमानित्यादि वाक्यानुपूर्वीप्रकारकभ्रमात्मकतादृशनिराकांक्षविषयकज्ञानस्यापि तथाविधशाब्दधीजनकतया तदीयविषयताया अपि जनकतावच्छेदकत्वेन तज्जनकतावच्छेदकप्रकारताश्रयानुपूर्वीरूपाकांक्षाशालित्वनिवेशस्यावश्यकत्वात् तच्छालित्वं च तद्घटितवर्णसमुदायत्वं, तज्जनकतावच्छेदकीभूतभ्रमान्ययत्किंचिद्ज्ञानवृत्तिविषयितानिरूपकवर्णसमुदायत्वमिति तु पर्यवसितोर्थः । ह्रदोवन्हिमानित्यादिभ्रमानुमितिसमानविषयकतादृशबोधजनकवाक्यस्य वारणाय योग्यता निवेशनीया । योग्यत्वं चाबाधितार्थकत्वं प्रकृतसाध्यविशिष्टप्रकृतपक्षबोधकत्वमिति यावत् । वैशिष्ट्यं च वास्तवं न तु वैज्ञानिकम् ।

---

तादृशेति । प्रतिबन्धकवशादित्यादिः । ननु यया प्रतिज्ञयाऽवयवान्तरसहकारेणैव बोधोजनितस्तादृशप्रतिज्ञायामतिरिक्तविषयकबोधजनकत्वात्तत्राव्याप्तेर्दीधितावनुक्तत्वान्न्यूनतेत्याशंक्य तत्संग्रहार्थमन्तरापदस्यार्थमाह । हेत्वर्थेति । न्यूनतां स्फुटीकरोति । एतेन । अन्तरा कथनेन ।

निराकांक्षवाक्यव्युदास इति । ननु निराकांक्षवाक्यस्य न्यायान्तर्गतत्वमेव न संभवतीति आकांक्षापदं किमर्थमिति चेत्—उपनयघटकवह्निपदसंबन्धिपदाऽर्थपदानामेव न्यायान्तर्गततया तेष्वेवानुपूर्वीभ्रमस्याभिप्रेतत्वात् । तादृशानुपूर्वीरूपाऽऽकांक्षाशालित्वस्याऽन्तिमवर्णे एव विश्रान्तेराह । तच्छालित्वं चेति । आनुपूर्वीघटकवर्णत्वव्यापकसमुदायत्वं च न प्रत्येकं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तल्लाभश्च जातिविशेषोपस्थापकशाब्दवाक्यपदयोरुपसन्धानादेवेति ।

यद्यपि स्वातन्त्र्येण योग्यतानिवेशोनिरर्थकः, अन्यूनविषयकत्वावच्छिन्नजन्यताप्रतियोगिकजनकताया अवश्यं विवक्षणीयतया वास्तववैशिष्ट्यघटितसाध्यविशिष्टपक्षविषयकत्वरूपान्यूनविषयकत्वनिवेशाऽसंभवेपि अयोग्यवाक्यप्रतिपाद्यविशिष्टार्थाप्रसिद्ध्या संप्रदायसिद्धप्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधाऽनिवर्त्यसंशयाऽनिवर्तकत्वरूपाऽनतिरिक्तविषयकत्वघटितलक्षणस्य तत्राऽतिव्याप्त्यप्रसक्तेः । तथापि वास्तववैशिष्ट्यघटिताऽनतिरिक्तविषयकत्वनिवेशसूचनाय योग्यतोपादानम् । आदिपदात्तात्पर्यविशेषपरिग्रहः । तेन निस्तात्पर्यकस्य शुकाद्युच्चरितप्रतिज्ञासमानाकारकवाक्यस्याऽर्थान्तरपरतादृशवाक्यस्य च व्युदासः ।

ननु आकाङ्क्षादिनिवेशे शाब्दवाक्यपदयोर्वैयर्थ्यं आकांक्षोदेर्ज्ञानानान्तरीयकत्वविरहात् वाक्यातिरिक्ते असत्वाच्च अनुमितिजनकपरामर्शादौ शाब्दधीजनकयोग्यताज्ञानादौ अति प्रसंगानवकाशादित्यत आकांक्षादिमत्वलाभार्थकतया तादृशपदोपादानं सार्थकयति तल्लाभश्चेति । तल्लाभः—शाब्दबोधं प्रति आकांक्षादिमत एव वाक्यस्य जनकतया आकांक्षादिमत्वलाभः । तादृशपदद्वयोपादानादिति भावः । शाब्दपदस्य योगेन शब्दजन्यार्थकत्वे न तल्लाभः. आकांक्षादिरहितस्यापि शब्दस्य शब्दजन्यस्मृतिहेतुत्वादतो जातिविशेषोपस्थापकेति । रूढ्याऽनुभवनिष्ठशाब्दत्वरूपजात्यवच्छिन्नोपस्थापकार्थकम् । शाब्दबोधं प्रति आकांक्षादिरहितस्यापि योग्यताज्ञानादेर्हेतुतया वाक्यपदानुपादाने केवलशाब्दपदान्न तल्लाभ इति वाक्यपदोपादानाऽपेक्षा इति भावः ।

---

प्रतिज्ञासु तथासति यत्किंचिद्ज्ञानविषयवर्णत्वव्यापकत्वमेकदेशेपीत्यतः प्रतिज्ञाघटकवर्णे तद्घटकवर्णत्वभ्रमात्मकाकांक्षावारणाय भ्रमान्यत्वं प्रागुक्तरीत्या यत्किंचित्प्रकारतास्थाने विषयतां च निवेशयन् गुरुतरमाकाङ्क्षाघटकत्वं परित्यजति । तज्जनकेति । तथाविधशाब्दधीजनकेत्यर्थः । भ्रमावृत्तित्वनिवेशे विशिष्टप्रतिज्ञाविषयतायाः अपि भ्रमवृत्तित्वादसंभव इति भ्रमान्येति । तत्किंचित्वनिवेशव्यावृत्तिःपूर्ववत् ।

अन्यूनविषयकत्वदले वास्तववैशिष्ट्यनिवेशे भ्रमसाधारणप्रतिज्ञायामसंभवमाह । अन्यूनेति । अवश्यं विवक्षणीयतयेति । धूमादालोकवान्पर्वतोवह्निमान्धूमादित्यादौ प्रतिज्ञार्थविषयकबोधनिष्ठहेतुविशिष्टहेतुत्वविषयकत्वावच्छिन्नजन्यतानिरूपितजनकताश्रये हेतुवाक्येऽतिव्याप्तिवारणायेत्यादिः । निवेशाऽ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यत्तु तल्लाभश्चेति अन्यूनानतिरिक्तविषयकशाब्दत्वावच्छिन्नौपयिकाऽऽकांक्षादिमत्वलाभश्चेत्यर्थः । शाब्दपदस्यावयवशक्त्या शब्दजन्यज्ञानत्वावच्छिन्नार्थकत्वे शब्दजन्यतावच्छेदकजातिविशेषानुपस्थित्या तदवच्छिन्नजन्यताप्रतियोगिकजनकतालाभो न भवतीत्युक्तं जातिविशेषोपस्थापकेति । तथा च कार्यदिशि शाब्दपदेन शाब्दत्वजातेः, कारणदिशि च वाक्यपदेनाऽऽकांक्षादिमत्वस्य लाभात्तादृशशाब्दत्वावच्छिन्नौपयिकाऽऽकांक्षादिमत्वलाभ इति व्याख्यानम् । तदसत् । अवच्छेदकतापर्याप्त्यनिवेशान्निरुक्तान्यूनविषयकत्वावच्छिन्नजन्यतानिवेशमात्रेणै-वोपपत्त्या शाब्दत्वनिवेशने प्रयोजनाभावात्तदुपस्थितेरप्रयोजकत्वात् । न च तत्तदर्थविषयकत्वस्य शाब्दत्वनिष्ठजन्यतावच्छेदकतायामेवावच्छेदकतया जन्यतायां तदवच्छिन्नत्वविरहादन्यूनविषयकशाब्दत्वावच्छिन्नत्वेनैव जन्यता निवेशनीयेति वाच्यम् । विनिगमनाविरहेण शाब्दत्वविशिष्टतत्तदर्थविषयकत्वस्यापि जन्यतावच्छेदकत्वात् ।

---

सम्भवेऽपीति । पर्वतोवन्हिमानिति वाक्यस्य वन्ह्यादिशून्यपर्वतादौ वान्हिमत्वावगाहिबोधत्वावच्छिन्नजनकत्वानुरोधादिति भावः । तत्र अयोग्यवाक्ये । तादृशवाक्यस्य । प्रतिज्ञासमानाकारकवाक्यस्य ।

वाक्यपदेनाऽऽकांक्षादिमत्वलाभे शाब्दपदापेक्षा दीधितिकृदुक्ता तां स्फुटीकरोति । शाब्देति । आकांक्षादेः । तादृशबोधजनकतावच्छेदकप्रकारताश्रयानुपूर्वीरूपाऽऽकांक्षादिमत्त्वस्य । तादृशपदोपादानं । शाब्दवाक्यपदोपादानं ।

जात्युपस्थापकेतिवक्तव्ये विशेषपदोपादानफलं दर्शयति । शाब्दपदस्येति । आकांक्षादिकं चोचितानुपूर्वीकत्वघटकप्रतिज्ञायां विशेष्यदले वा निवेश्यम् । इदं तु बोध्यम् । प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वावच्छिन्नभेदप्रतियोगितावच्छेदकत्वं नोचितानुपूर्वीकत्वं किन्तु निगमनपूर्वोपनयपूर्वोदाहरणपूर्वहेतुपूर्वत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्व हेतुपूर्वत्वान्तं वा, प्रतिज्ञात्वाऽनिवेशलाघवात् । एवं च पर्वतो वन्हिः संबन्धीति निराकांक्षवाक्यव्युदास इति पंक्तिर्यथाश्रुतैव संगच्छते । न्यायान्तर्गततादृशवाक्येऽपि उचितानुपूर्वीकत्वसंभवात् । न च प्रागभावानुपगमे तत्पूर्वत्वं तदुत्पत्तिक्षणोत्पत्तिकध्वंसणवृत्तित्वमुत्यांतघटिततया गुरु इति वाच्यम् । संसर्गतया तन्निवेशेन लक्षणग्रहस्य तद्ग्रहं विनापि भावात् । सामान्यलक्षणायामुत्पत्त्यनुगमप्रकारस्य दर्शितत्वाच्च । तस्माद्विशेष्यदलनिवेशः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



७। अन्यूनानतिरिक्तपदं विहाय लिङ्गाविषयकत्वं वा ज्ञानविशेषणम्। तेनोदाहरणादिव्युदासः। निगमनं च न परामर्शहेतुः, अबाधितासत्प्रतिपक्षितत्वज्ञानजनकत्वात्। १४७

अन्यूनेत्यादि। तथा चोद्देश्यानुमितिसमानविषयक लिङ्गाविषयक शाब्दज्ञानजनकन्यायावयवत्वमर्थः। व्यतिरेकिणि ह्रदान्निर्धूम इत्यादौ निर्वह्नित्वहेतुके यथाह्रदभिन्नमिति दृष्टान्तवतो ह्रदावृत्तिधर्मशून्यत्वादिहेतुके वा उदाहरणस्य वारणाय समानविषयकान्तम् पक्षमुख्यविशेष्यकार्थकम्। उपनयवारणाय लिङ्गाविषयकेति।

ननु अन्यूनानातिरिक्तपदिपरित्यागे अनुमितिविषयकशाब्दधीजनकमवशिष्यते तथा च पर्वतोवह्निमानित्यादि प्रतिज्ञावाक्यस्यानुमित्यबोधकतया अव्याप्तिरित्याशङ्कां परिजिहीर्षुरनुमितेर्विषयोविषयोयस्येति मध्यमपदलोपिसमासाभिप्रायेण समुदितलक्षणपर्यवसितार्थं व्याचष्टे तथा चेति।

दृष्टान्तवतइति। अस्याग्रिमेणोदाहरणस्येत्यादिनाऽन्वयः। अन्वय्युदाहरणस्य लिङ्गबधोकत्वाद् व्यतिरेकिपर्यन्तानुधावनम्। यो यो धूमवान् स वह्निमानिति व्यतिरेक्युदाहरणस्य वन्ह्यभावादिरूपलिङ्गाबोधकत्वात् पक्षविषयकत्वमात्रनिवेशेनैव तादृशोदाहरणवारणसम्भवेन पक्षमुख्यविशेष्यकत्वपर्यन्तस्य विवक्षणीयस्य व्यावृत्तिदानाय यथा ह्रदभिन्नमित्यादिदृष्टान्तघटिततदनुसरणम्। दृष्टान्ताघटितेदाहरणे व्यावृत्तिमाह। ह्रदावृत्तीति। उपनयवारणायेति। पक्षतावच्छेदका-

---

स्वमते शाब्दपदवाक्यपदयोरुभयोरेवाकांक्षादिमत्वलाभार्थकत्वं यतु मते च वाक्यपदादाकांक्षादिलाभः, शाब्दपदाद्विजातीयशाब्दलाभः इति मतयोरुभयोर्भेद इति ध्येयम्।

उक्तरीत्या कारणानन्तर्यस्य जन्यतावच्छेदककोटिप्रवेशमतेऽन्यूनविषयकत्वस्यापि न जन्यतावच्छेदकत्वमित्यनुशयेनाह। मूले-अन्यूनानतिरिक्तपदं विहायेति। उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वमिति लक्षणवाक्ये इत्यादिः। अव्याप्तिरिति। अनुमितिर्ज्ञानमिति प्रतिज्ञायां लक्षणगमनान्नासंभव इति ध्येयम्। ननु न्यायावयवत्वे सति लिङ्गाविषयकशाब्दधीजनकवाक्यत्वमेव कथं नोक्तमित्यत आह। दीधितौ-व्यतिरेकिणीत्यादि। अन्वय्युदाहरणस्येति। योयोनिर्वन्हिः स स निर्धूमो यथा ह्रद इत्युदाहरणस्येत्यर्थः। व्यतिरेकिपर्यन्तानुधावनमिति। तथा च योयोधूमवान्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वच्छिन्नपक्षविशेष्यकत्वनिवेशस्य प्रयोजनान्तरविरहेऽप्येतदर्थमेव तन्निवेशोऽननुषङ्गपक्षे निगमनातिव्याप्तिर्न सम्भवतीत्यभिप्रायेण निगमनोपेक्षा

---

स स वन्हिमान् यथा ह्रदभिन्नमिति व्यतिरेक्युदाहरणस्य निर्वन्हित्वरूपलिङ्गाविषयकत्वमस्त्येवेति भावः एवं च लिङ्गाविषयकत्वरक्षार्थं व्यतिरेकिणीत्युक्तमिति ध्येयम्। **व्यतिरेक्युदाहरणस्येति** । व्यतिरेक्युदाहरणमात्रस्येत्यर्थः । दृष्टान्तरहितस्येति यावत् । एवं योयोधूमवान् स स वन्हिमान् यथा पर्वत इत्युदाहरणस्यापि बोध्यम् । **पक्षविषयकत्वमात्रनिवेशेनैवेति** । एवकारेण पक्षमुख्यविशेष्यकत्वव्यवच्छेदः । **तादृशोदाहरणवारणसंभवेनेति** । योयो धूमवान् स स वन्हिमानित्युदाहरणस्य योयो धूमवान् स स वन्हिमान् यथा पर्वत इत्युदाहरणस्य च वारणसंभवादित्यर्थः । तथा च पक्षमुख्यविशेष्यकत्वप्रवेशोऽव्यर्थ इति भावः। **व्यावृत्तिदानायेति** । **तदनुसरणमिति** । उदाहरणानुसरणमित्यर्थः। तथा च प्रतियागिविषयैव निरुक्तोदाहरणस्यापि पक्षविषयकत्वात् पक्षमुख्यविशेष्यकत्वमवश्यं वाच्यमिति भावः । दृष्टान्तप्रयोगस्याऽसार्वत्रिकत्वादाह । **दृष्टान्ताऽघटितेप्युदाहरणे इति** । दृष्टान्तमन्तर्भाव्यैवोदाहरणशरीरमिति मतेपीत्यादिः। **व्यावृत्तिमाहेति** । पक्षमुख्यविशेष्यकत्वव्यावृत्यर्थं स्थलान्तरमाहेत्यर्थः । तथा च ह्रदोनिर्धूमोह्रदावृत्तिधर्मशून्यत्वादित्यादौ यो यो धूमवान् स स ह्रदावृत्तिधर्मवानित्युदाहरणस्यापि लिङ्गाविषयकस्य ह्रदात्मकपक्षविषयकत्वात्तद्वारणार्थं पक्षमुख्यविशेष्यकत्वमवश्यं निवेश्यमिति भावः । **उपनयवारणार्थेति** । उपनयेऽतिव्याप्तिवारणायेत्यर्थः तस्य पक्षमुख्यविशेष्यकबोधजनकत्वादिति भावः । ननु निगमनस्यापि पक्षविशेष्यकबोधजनकत्वादुपनयमात्रोक्तिरयुक्ता तस्माद्वन्हिमानित्यादौ वन्हिमत्वेन पर्वतस्यैव विशेष्यत्वात्, पक्षतावच्छेदकविशिष्टविशेष्यकत्वं तु गौरवान्न विवक्षणीयम्, इतरेषां अन्वय्युदाहरणादीनां लिङ्गाविषयकत्वेनैव निरासादित्यत आह। **पक्षतावच्छेदकावच्छिन्नेति** । **प्रयोजनान्तरविरहेपीति** । लिङ्गाविषयकत्वनिवेशात्पश्चादिति शेषः। इदमापाततः—वस्तुत इत्यादिना वक्ष्यमाणोदाहरणेऽति व्याप्तिवारणरूपप्रयोजनसत्वादिति ध्येयम्। पक्षतावच्छेदकनिवेशेऽपि लिङ्गाविषयकोक्तव्यतिरक्युदारहणेऽतिव्याप्तेर्मुख्यत्वनिवेशस्यावश्यकत्वे तद्वैयर्थ्यात् । **एतदर्थमेव** निगमने तिव्याप्तिवारणायैव। एवकारेण उपनयातिव्याप्तेर्वारणव्यवच्छेदः। निगमने मतुवर्थसंबन्धित्वेन पक्षभानमभिप्रेत्येदम्। **तन्निवेशे** । पक्षतावच्छेदकनिवेशे । **अतिव्याप्तिर्नसंभवतीति** । पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकबोधाजनकत्वात् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तस्मात् इतरेभ्यो भिद्यत इत्यादिनिगमनस्य पक्षविशेष्यकबोधजनकत्वाभावान्निगमनस्य पक्षविशेष्यकबोधजनकत्वाभावान्निगमनसामान्ये नातिव्याप्तेरसम्भव इत्यभिप्रायेण वा। वस्तुतः पक्षमुख्यविशेष्यकत्व निवेशेऽपि गोत्वं सास्नाभाववत् गोत्वाभावादित्यत्र यत्र सास्ना तत्र गोत्वमित्युदाहरणे पक्षमुख्यविशेष्यकबोधजनकेऽतिव्याप्तिर्दुर्वारैव पक्षमात्रमुख्यविशेष्यकत्वनिवेशे च विश्वपक्षकस्थले मात्रार्थाप्रसिद्ध्याऽव्याप्तिरिति पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वमेव विवक्षणीयं तथा च निगमनेऽननुषङ्गपक्षेऽतिव्याप्तिर्न सम्भवत्येवेत्यवधेयं

---

निगमनविशेषेऽतिव्याप्तिसत्त्वेपि निगमनसामान्ये नातिव्याप्तिरित्यतोनिगमनमुपेक्षितमित्याह। तस्मादिति। गन्धवत्त्वादित्यर्थः। पक्षविशेष्यकबोधजनकत्वोभावादिति। आश्रयत्वं भेदवदित्याकारकस्तत्र बोधः। आख्यातार्थाश्रयत्वस्यैव मुख्यविशेष्यत्वात्। निगमनसामान्ये नातिव्याप्तिसंभव इति। उपनयस्य तु पक्षमुख्यविशेष्यकबोधजनकत्वादुपनयसामान्येऽतिव्याप्तिर्भवत्येवेति तन्मात्राभिधानमिति भावः। पक्षमात्रमुख्यविशेष्यकत्वनिवेशे चेति। तत्रातिव्याप्तिवारणेपीति शेषः। सास्नाया अपि मुख्यविशेष्यत्वादिति भावः। मात्रार्थाऽप्रसिद्ध्या। विश्वेतराऽप्रसिद्ध्या। हेतुत्वं प्रमेयं ज्ञेयत्वादित्यत्र हेत्ववयवेऽतिव्याप्तिः कथं नोक्तेति विभावनीयम्। तथा च। पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वनिवेशे च। निगमने। निगमनविशेषे। न संभवत्येवेति। अत्रापि संबन्धित्वेन रूपेण पक्षभानादिति भावः।

ननु तथापि यत्र गोत्वस्य पक्षत्वं समवायावच्छिन्नतदभावस्य साध्यत्वं कालिकसंबन्धावच्छिन्नतदभावस्य स्वरूपेण हेतुत्वं तत्र व्यतिरेक्युदाहरणे यत्र गोत्वं तत्र गोत्वमित्यत्रातिव्याप्तिः, तज्जन्यज्ञाने तादृशमुख्यविशेष्यत्वानिरूपकत्वसत्त्वादिति चेन्न — मुख्यविशेष्यताद्वयानिरूपकत्वस्य विवक्षणीयत्वात्। न च निगमनपरित्यागे बीजाभाव इति वाच्यम्। पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकत्वस्यापि निवेशनीयत्वादिति।

केचित्तु स्वनिरूपकत्व स्वभिन्नस्वावच्छेदकावच्छिन्नविशेष्यतानिरूपकत्वोभयसंबन्धेन पक्षतावच्छेदकावच्छिन्नविशेष्यताविशिष्टं यत्तदन्यत्वं ज्ञाने विशेषणीयम्, उक्तस्थले च समवायावच्छिन्नाधेयत्व, कालिकसंबन्धावच्छिन्नाधेयत्वरूपप्रकारताभेदेन गोत्वत्वावच्छिन्नविशेष्यतयोर्भेदान्निरुक्तोभयसंबन्धेन गोत्वत्वावच्छिन्नविशेष्यतावत्त्वान्नातिव्याप्तिः।

न्यायावयवत्वे सति लिङ्गाविषयकत्वे सति पक्षमुख्यविशेष्यकाब्दधीजनकवाक्यत्वं प्रतिज्ञालक्षणम्। केवलान्वयितयेति।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यद्यपि प्रकृतलिंगाविषयकत्वं पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात् (गन्धवती तथा गन्धादित्यादावव्यापकम्। न चात्रोपनयासम्भवः इदमा गन्धवत्त्वेन परामृष्टे हेतुभूतगन्धवत्वान्वयायोगादिति वाच्यम्। साध्याभाव-व्यापकगन्धाभावाभावत्त्वेनान्वयात्।

लिङ्गत्वस्य केवलान्वयितया सामान्यतो लिङ्गाविषयकत्वं ज्ञानेऽप्रसिद्ध-मिति प्रकृतलिङ्गाविषयकत्वं विवक्षणीयं तथापि न निस्तार इत्याशयेनाह यद्यपि प्रकृतेति। लिङ्गतावच्छेदकावच्छिन्नाविषयकत्वविवक्षणे पृथिवी इतरेभ्यो भिद्यत इत्यादिप्रतिज्ञाया नासंग्रहः तज्जन्यबोधे स्वरूपत एव पृथिवीत्वादिरूपलिङ्गभानादित्याशयेन स्थलान्तरे दोषमाह। गन्धवतीति। तथेति। तथा-इतरेभ्यो भिद्यते। न चात्र उपनयासम्भव इति। तथा च तादृशप्रति-ज्ञादिघटितन्याय एव न सम्भवतीति क्वाव्यातिशङ्केति भावः। इदमा-इदंशब्देन। गन्धवत्त्वेनेति। उपनयस्थेदं शब्दस्य प्रतिज्ञोपदर्शितपक्ष-तावच्छेदकावच्छिन्नपरत्वादिति भावः। गन्धवत्वान्वयेति गन्धवद्भेदा-न्वयस्येत्यर्थः। अयोगादिति उद्देश्यत्वविधेयत्वयोरवच्छेदकयोरैक्ये अभेदान्वयबोधस्याव्युत्पन्नत्वात्। अन्यथा घटो घटइत्यादावन्वय बोधप्रसङ्गादिति भावः। साध्याभावेति। साध्याभावव्यापको यो गन्धा भावः तदभावत्वेनेत्यर्थः। तथाच भिन्नरूपेण गन्धादेरुद्देश्यत्वविधेयत्वा-वच्छेदकगर्भेऽन्तर्भावान्नान्वयबोधानुपपत्तिरिति भावः।

---

वस्तुमात्रस्यैव लिंगत्वादिति भावः। तथापि प्रकृतपदप्रक्षेपेऽपि। दीधितौ तथा इतरभेदवती। अव्यापकमिति। अव्याप्तमित्यर्थः, प्रतिज्ञाद्वयस्य क्रमेण पृथि-वीत्व गन्धरूपलिङ्गविषयकत्वादिति भावः। तज्जन्यबोधे। पृथिवी इतर-भेदवतीति प्रज्ञिज्ञाजन्यबोधे। स्वरूपत एवेति एवकारेण लिंगतावच्छेदकीभूतपृ-थिवीत्वत्वादेर्व्यवच्छेदः। स्थलान्तरे दोषमाहेति। लिंगतावच्छेदकीभूतं यद्-गन्धत्वं ताद्रूप्येणैव लिङ्गस्य (गन्धस्य) प्रतिज्ञाजन्यबोधे भानादिति भावः। ननूक्तस्थले न्यायाऽसंभवात्प्रतिज्ञैव न संभवतीति कुत्राव्याप्तिरित्यत्त्रशंक्य निराचष्टे। दीधितौ-नचेति। परामृष्टे। पक्षे। दीधितौ-गन्धवत्वान्व-यायोगादिति। इतरभेदव्याप्यगन्धवत्वाऽन्वयायोगादित्यर्थः। अव्युत्पन्नत्वा-दिति। गन्धवत्वेनोपस्थितस्य (इदंपदार्थस्य) गन्धवत्वान्वये निराकांक्षत्वा-दिति भावः। तथाचेति। इतरभेदाभावव्यापकीभूतस्य गन्धाभावस्याभावव-ती चेयमित्युपनयशरीरे चेत्यर्थः। भिन्नरूपेण। गन्धत्वेन-गन्धाभावाभावत्वेन नान्वयबोधानुपपत्तिरिति। गन्धवत्वेनोपस्थिते गन्धवत्वेनान्वये निराकांक्ष-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अत एव व्यतिरेकिणिनच नेयं पृथिवीत्यादिकः प्राचां प्रयोगः ।

ननु हेत्वभावाभावत्वेन हेतूपस्थापकपदाभावात्कथमुपनयवाक्यात्तेन रूपेण पक्षे हेतुभानमत आह । अतएवेति साध्याभावव्यापकतावच्छेदकहेत्वभावत्वाद्यवच्छिन्नाभावत्वेन हेत्वन्वयानुरोधादेवेत्यर्थः । न च नेयंपृथ्वीति । नञ्द्वयेना भावाभावत्वेन हेतुबोधनादिति भावः । यद्यपि पृथिवीत्वहेतुकस्थले तादृशोपनयप्रयोगो न युज्यते पृथिवीपदात्स्वरूपत एवोपस्थितस्य पृथिवीत्वरूपपदार्थतावच्छेदकस्य नञर्थाभावे अन्वयासम्भवेन हेत्वभावाभावत्वेन हेत्वलाभात् । न च हेतुमद्भेदाभावोऽपि हेतुरेवान्योन्याभावाभावस्य प्रतियोगितावच्छेदकरूपत्वात् एवं (च) हेतुमद्भेद एव साध्याभावव्यापकता—यत्र नेतरभेदस्तन्न पृथिवीत्युदाहरणेन बोध्या इति पृथिवीभेदाभावत्वेन पृथिवीत्वबोधकस्तादृशोपनयो युज्यत एवेति वाच्यम् ।

---

त्वम्, न तु गन्धाभावाभावत्वेनापि प्रकारभेदादिति भावः । हेतूपस्थापकपदाभावादिति । उपनयघटकतथाशब्दस्य सर्वत्र हेतुतावच्छेदकरूपेणैव हेतुपरत्वादिति भावः । शंकते यद्यपीति तादृशोपनय प्रयोग इति । "इतरभेदाभावव्यापकीभूत" पृथिवीत्वाभावस्याभाववती चेयमित्यर्थकनचनैयंपृथिवीत्याकारकोपनयप्रयोग इत्यर्थः नयुज्यतेइति । अयुक्तत्वेहेतुमाहपृथ्वीपदादिति । पृथिवीत्वजातेरन्वयितावच्छेदकरूपेणानुपस्थिततया तस्याः अभावांशेऽनुयोगितासंबन्धेनाऽन्वयो न संभवतीति सूचनायाह स्वरूपतएवेति । पृथिवीत्वरूपपदार्थतावच्छेदकस्येति । एतेन एकत्रान्वितस्यापरत्रान्वयोनसंभवतीतिसूचितम् । हेत्वभावाभावत्वेन । पृथिवीत्वाभावाभावत्वेन । हेत्वलाभात् । पृथिवीत्वालाभात् इतरभेदाभावव्यापकीभूतपृथिवीत्वाभावस्याभाववती चेयमित्यु पनयप्रयोगोन युज्यतेइतिभावः । शंकते । नचेति । हेतुमद्भेदएवेति । पृथिवीत्ववद्भेदएवेत्यर्थः । एवकारेण पृथिवीत्वाभावव्यवच्छेदः । साध्याभावव्यापकता । इतरभेदाभावव्यापकता । बोध्यते इति । इतरभेदाभावव्यापकः पृथिवी भेदइतिबोध इति भावः । पृथिवीत्वबोधक इति । इतरभेदाभावव्यापकीभूतस्य पृथिवीभेदस्याभाववतीचेयं इति बोधजनकइत्यर्थः । तादृशोपनय इति । नच नेयं पृथिवीत्युपनयइत्यर्थः । साध्याभावव्यापकताया एवेति । इतरभेदाभावव्यापकताया एवेत्यर्थः । एवकारोभिन्नक्रमः । तद्रूपविशिष्टवद्भेदत्वावच्छिन्ने एवेत्यर्थः । पृथिवीत्वत्वविशिष्टवद्भेदत्वावच्छिन्ने एवेति यावत् । एवकारेण पृथिवीभेदव्यवच्छेदः । तस्या एवेति । पृथिवीत्वत्वविशिष्टवद्भेदत्वावच्छिन्ने-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एवमपि पृथिवीत्वादि हेतुवाक्योपस्थितपृथिवीत्वत्वविशिष्ट हेतुकानुमित्यौपयिकतद्रूपविशिष्टवद्भेदत्वावच्छिन्ने साध्याभावव्यापकताया एवाकांक्षिततया तस्या एव यत्रेतरभेदाभावस्तन्न पृथिवीत्युदाहरणेनोपदर्शनीयतया तद्रूपविशिष्टवद्भेदत्वावच्छिन्नाभावत्वेन हेतुमत्ताया एवोपनेयत्वात्तादृशोपनयासङ्गतेः अन्यथा पृथिवीतरेभ्यो भिद्यते गन्धसमवायिकारणतावच्छेदकरूपवत्वादित्यादावपि तथोपनयप्रयोगापत्तेरिति । तथापि तादात्म्येन पृथिवी हेतुकस्थलाभिप्रायेणेदम् । आदिपदान्न च नेयं गन्धवतीत्याकारकस्य नच नात्र गन्ध इत्याकारकस्यापनयस्य परिग्रहः । अत्र हेत्वभावादौ साध्याभावव्यापकत्वाभानेऽपि न क्षतिः प्राचीनमते उदाहरणादेव व्याप्तिलाभेन पक्षधर्मतामात्रस्योपनेयत्वादत एव प्राचामित्युक्तम् । साध्याभावव्यापकेत्यादौ च व्यापकान्तमुपलक्षणार्थकम् ।

---

इतरभेदाभावव्यापकताया एवेत्यर्थः । तद्रूपविशिष्टवद्भेदत्वावच्छिन्नाभावत्वेन । पृथिवीत्वत्वविशिष्टवद्भेदत्वावच्छिन्नाभावत्वेन । हेतुमत्ताया एवेति । पृथिवीत्ववत्ताया एवेत्यर्थः । एवकारेण पृथिवीभेदत्वावच्छिन्नाभावत्वेन पृथिवीत्वस्य व्यवच्छेदः । उपनेयत्वादिति । उपनयजन्यबोधविषयत्वादित्यर्थः । तादृशोपनयाऽसंगतेरिति पृथिवीत्वत्वानुपस्थापकोपनयाऽसंगतेरित्यर्थः । इतरभेदाभावव्यापकीभूतस्य पृथिवीभेदस्याभाववती पृथिवीत्युपनयाऽसंगतेरिति यावत् अन्यथा । येन रूपेण यस्य हेतुवाक्यादुपस्थितिस्तद्रूपावच्छिन्नत्वाविशेषिततदवच्छिन्नभेदे साध्याभावव्यापकताया एवाकांक्षितत्वोपगमे । तथोपनयप्रयोगापत्तेरिति । इतरभेदाभावव्यापकीभूतपृथिवीभेदाभाववती चेयमित्युपनयप्रयोगापत्तेरित्यर्थः । यत्र नेतरभेदस्तन्नपृथिवीत्युदाहरणद्वारापत्तिर्बोध्या । तथापीति । पृथिवीत्वहेतुकस्थले इतरभेदाभावव्यापकीभूतपृथिवीत्वाभावाभाववती चेयमित्युपनयप्रयोगाऽसंभवेपीत्यर्थः । पृथिवीहेतुकस्थलाभिप्रायेणेति । इदमपि प्रतियोगितावच्छेदकवत्प्रतियोग्यपि अन्योन्याभावाभाव इति मतेन । अन्यथा पृथिवीभानानुपपत्तेः । इदम्-उपनयप्रयोगाभिधानम् । गन्धवद्धेतुकमुपनयं प्रदर्श्यगन्धहेतुकं तमाह । न च नात्रेति । नन्वेवमपि नच नेयं पृथिवीत्युपनयोऽसंगतः, साध्याभावव्यापकतायाः तद्बोधकशब्दाभावेनाऽभानादित्यतआह । अत्रेति । साध्याभावव्यापकहेतुमद्भेदाभाववती चेयमित्युपनये इत्यर्थः । प्राचीनमते इति । यथाऽन्वय्युपनेयं पक्षधर्मतामात्रं, तथा व्यतिरेक्युपनेयमपि तदेवेति भावः । ननु दीधितौ—साध्याभावव्यापकेत्यसंगतमित्यतआह । साध्याभावव्यापकेत्यादौ चेति । आदिना साध्यव्याप्यस्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यदि च दण्डवान् रक्तदण्डवानित्यस्यान्वयो नानुपपन्नः तद्विशिष्टे शुद्धत द्विशिष्टान्वयस्यैवाव्युत्पन्नत्वादित्युच्यते। तदा नानुपपत्तिगन्धोऽपि।

ननु नच नेयं पृथिवीत्यादिकः प्राचीनानुमतोपनयोऽसङ्गतः नञर्थाभावस्य प्रतियोग्यनुयोग्युपरागेणैव शाब्दानुभवभानादन्योन्याभावबोधे समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहारस्य, संसर्गाभावबोधे च सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहारस्यापेक्षितत्वात् प्रकृते चानुयोगिवाचकपदाभावेन पृथिवीभेदगन्धाभावादिबोधासम्भवादिति नवीनानुमत इतरव्यापकीभूताभावप्रतियोगि गन्धवती चेयमित्याद्याकारकोपनय एवादरणीयः तत्र हेतोः पक्षतावच्छेदकत्वे दर्शितव्युत्पत्तिविरोधो दुष्परिहर एवेत्यालोच्य नव्यमते समाधानमाह। यदिचेति उच्यतइत्यग्रिमेणान्वयः तद्विशिष्ट इति तद्धर्मधर्मितावच्छेदकीकृत्य इतराविशेषिततद्धर्मावच्छिन्नाभेदान्वयबोधस्यैव व्युत्पत्तिविरुद्धत्वादित्यर्थः। नानुपपत्तीति। प्रकृते उद्देश्यतावच्छेदकाघटकव्याप्ते विधेयतावच्छेदकघटकतया भानादिति भावः। तथा च गन्धवतीतरेभ्यो भिद्यते गन्धादित्यादिन्यायस्यापि निष्प्रत्यूहतया लिङ्गविषयकतादृशन्यायान्तर्गतप्रतिज्ञायासत्याप्रतिर्दुवारैवेति भावः।

---

संग्रहः। व्यापकान्तमिति। एवं व्याप्यान्तमित्यपि वोध्यम्। न च पृथिवी नेयमिति योजना। तत्र न च पृथिवीत्यत्रन पृथिवीभेदोर्थः, प्रथमान्तानुयोगिताचकपदाभावात्। नेयमिति नञर्थोनाऽत्यन्ताभावः, सप्तम्यन्तानुयोगिवाचकपदाभावादित्त्याशंकते। नन्विति। तथाच। दर्शितोपनयजन्यबोधे च। हेतोः–पृथिवीत्वस्य-गन्धस्य च। दर्शितव्युत्पत्तिविरोध इति। तद्धर्मावच्छिन्न प्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधंप्रति तद्धर्मभेदः कारणमिति व्युत्पत्तिविरोध इत्यर्थः। इतराविशेषितेति। विशेषणान्तरानवच्छिन्नेत्यर्थः। तद्धर्मावच्छिन्नान्वयबोधस्यैवेति। एवकारेण धर्मान्तरविशेषिततद्धर्मावच्छिन्नाभेदान्वयबोधस्य व्यवच्छेदः। व्युत्पत्तिविरुद्धत्वादिति। तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदः कारणमित्येवं व्युत्पत्तिरिति भावः। उक्तव्युत्पत्तिविरोधो नास्तीत्याह। प्रकृते इति। विधेयतावच्छेदकघटकतयेति। विधेयांशेऽधिकावगाहित्वादित्यर्थः। गन्धविशिष्टे। "विशेषणान्तरावच्छिन्न" व्यतिरेकव्याप्तिविशिष्टगन्धस्य वान्वयेन व्युत्पत्त्यविरोधादिति भावः। दीधितौ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षाविशेषणत्वेन तदविषयकत्वञ्चायं वन्हिमामग्रीमान् वन्हेरित्यादौ

ननु पक्षाविशेषणतया यल्लिङ्गविषयत्वं तच्छून्यत्वं विवक्षणीयमतो नोक्ताव्याप्तिरुक्तस्थले पक्षाविशेषणतयैव लिङ्गविषयतासत्त्वेन विशिष्टाभावसत्त्वादित्यत आह। पक्षाविशेषणत्वेनेति। अयं वह्निसामग्रीमान्वह्नेरित्यादाविति। अव्यापकमित्यग्रिमेणान्वयः। अथ पक्षाविशेषणत्वं पक्षनिरूपितविशेषणताभिन्नत्वं तस्य लिङ्गविषयताविशेषणत्वे चायं वह्निसामग्रीमान्वन्हेरित्यादावव्याप्त्याशङ्कानवकाशः तत्रापि पक्षविशेषणतापन्नसाध्यनिरूपितविशेषणतात्मकलिङ्गविषतायाः परम्परया पक्षनिरूपितत्वात् गन्धवतो पृथिवीतरेभ्यो भिद्यत इत्यादावपि मत्वर्थसम्बन्धांशे विशेषणीभूतगन्धविषयतायाः गन्धसमानकालीनरूपवती पृथिवीतरेभ्यो भिद्यत इत्यादौ तद्विषयतायाः साक्षात्पक्षनिरूपितविशेषणत्वानात्मकत्वेन साक्षात्परम्परासाधारणनिरूपितत्वस्यैव निवेशनीयत्वादिति चेन्न।

---

नानुपपत्तिगन्धोऽपीति। यथा दण्डवान् रक्तदण्डवानित्यत्रनानुपपत्तिस्तथा प्रकृते गन्धविशिष्टे व्याप्तिविशिष्टगन्धवत एवान्वयादिति भावः। तथाचेति। तादृशोपनयस्य न्यायत्वे चेत्यर्थः। अव्याप्तिर्दुर्वारैवेति। प्रतिज्ञाया लिङ्गाविषयकबोधजनकत्वाभावादिति भावः।

गन्धवती इतरेभ्योभिद्यते गन्धादित्यत्र प्रतिज्ञायामव्याप्तिं परिहर्तुं प्रक्रमते। नन्विति। विवक्षणीयमिति। पक्षनिरूपितविशेषणत्वाभिन्ना या लिङ्गविषयता तच्छून्यत्वं विवक्षणीयमित्यर्थः। उक्तस्थले। गन्धवती इतरेभ्यो भिद्यतइत्यत्र। पक्षविशेषणतयैवेति। एवकारेण पक्षाऽविशेषणत्वस्य व्यवच्छेदः। तथा च विशेषणाभावसत्वं सूचितम्। एवं च पक्षनिरूपितविषयताभिन्ना या लिंगविषयता तच्छून्यबोधजनकवाक्यत्वं प्रतिज्ञात्वं फलितम्। विशिष्टाभावसत्वादिति। विशेषणाभावप्रयुक्तेत्यादि। अव्यापकमिति। अव्याप्तमित्यर्थः। पक्षीभूतेदंपदार्थे साक्षादविशेषणतया "साध्यघटक" लिंगविषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधे विरहादिति भावः। अत्र साक्षात्पक्षनिरूपितत्वं यदि निवेश्यते तदा गन्धवती इतरेभ्योभिद्यते इत्यत्र प्रतिज्ञायाः असंग्रहः स्यात् गन्धविषयतायाः साक्षात्पक्षनिरूपितत्वाभावात्' मत्वर्थ संबन्धविषयतानिरूपितत्वात्। परंपरया पक्षनिरूपितविषयताभिन्नत्वं यदि निवेश्यते तदा अयं वन्हिसामग्रीमान् वन्हे रित्यादौ प्रतिज्ञायां अव्याप्त्यसंगतिस्स्यात् परंपरया पक्षनिरूपितत्वाद्वन्हिविषयतायाः, अतः पक्षाऽविशेष-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षाविशेषणत्वं यद्युक्तार्थकं तदा निगमनातिव्याप्तिः। नच निगमने अयं पदाननुषङ्गपक्षे उक्तयुक्तया पक्षतावच्छेदकानवच्छिन्न मुख्यविशेष्यताकान्यत्वपर्यन्तस्यैतदनुरोधेनैव वा पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यकत्वस्य विषयकान्तार्थस्य विवक्षणीयतया नातिव्याप्तिरिति वाच्यम्। एवमप्यनुषङ्गपक्षे तत्रातिव्याप्ते र्दुर्वारत्वात् अतः पक्षतावच्छेदक प्रकारतानिरूपकविशेष्यतानिरूपित-प्रकारतान्यत्वमेव तदर्थो वाच्यः पक्षतावच्छेदकप्रकारतान्तःपातिनी सर्वैव प्रकारता तादृशविशेष्यतानिरूपिता इयांस्तु विशेषः काचित्साक्षात्काचित्परम्परया तथेति। विधेयकोटिप्रविष्टपदार्थप्रकारता च धर्मितावच्छेदकप्रकारतानिरूपितविशेष्यतानिरूपिता विधेयनिरूपितविशेष्यताया धर्मितावच्छेदकावच्छिन्नतया धर्मितावच्छेदकप्रकारतानिरूपितविशेष्यतायाश्च स्वस्य स्वधर्मितानवच्छेदकत्वेन तदनवच्छिन्नतया विधेयतद्धर्मितावच्छेदकप्रकारतानि रूपकविशेष्यतयोर्भेदादिति निगमनादिजन्यबोधीयविधेयकोटिप्रविष्टलिङ्ग विषयता न पक्षतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपितविशेषणात्मिकेति न निगमनाद्यतिव्याप्तिः एवंच वह्निसामग्रीमान्वह्ने रित्यादावव्याप्तिः प्रसज्यत एवेति।

---

णत्वं परिष्करोति। तस्य। तादृशभेदस्य। अव्याप्तिं निराकरोति। तत्रीपीति। अयं वन्हिसामग्रीमानित्यत्रापीत्यर्थः। पक्षांशे-अयं पदार्थे। साध्यनिरूपितेति। सामग्रीनिरूपितेत्यर्थः। **परंपरया पक्षनिरूपितत्वादिति**। तथा च पक्षाऽविशेषणतया लिंगविषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधे सत्वेनाऽव्याप्तिविरहादिति भावः साक्षात्पक्षनिरूपितविशेषणताभिन्नत्वनिशेऽव्याप्तिसंगमने तु अव्याप्तिमाह। **गन्धवतीत्यादि**। मतुपोनिरर्थकत्वपक्षेप्याह। **गन्धसभानेति**। **तद्विषतायाः**। गन्धविषयतायाः। **साक्षात्पक्षनिरूपितविशेषणत्वानात्मकत्वेनेति**। तादृशविशेषणताभिन्नत्वेनेत्यर्थः। तथा च साक्षात्पक्षनिरूपितविषयताभिन्नलिंगविषयताशून्यत्वविरहादव्याप्तिवारणायेति भावः। **साक्षात्परंपरासाधारणनिरूपितत्वस्यैवेति**। एव कारेण साक्षात्पक्षनिरूपितत्वस्य व्यवच्छेदः। **निवेशनीयत्वादिति**। तथा च अयं वन्हिसामग्रीमान् इति प्रतिज्ञायामव्याप्तिरसंगतैवेति भावः। **यद्युक्तार्थकमिति**। साक्षात्परंपरासाधारणपक्षनिरूपितविशेषणताभिन्नार्थकमित्यर्थः। **निगमनातिव्याप्तिरिति**। निगमनजन्यबोधीयलिंगविषयतायाः "वन्हिमत्वेन" पक्षनिरूपितत्वादिति भावः। **उक्तयुक्त्या**। यत्र सास्ना तत्र गोत्वमित्यत्रातिव्याप्तिभयेन।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षाविशेषणत्वेन साध्याविशेषणत्वेन तद्विषयकत्वञ्च,

दधि द्रव्यं दध्नः प्रमेयत्वमभिधेयं प्रमेयत्वात् गात्वाभावो न सास्नादिमान् गत्वाभावादित्यादावव्यापकमतिव्यापकञ्चोपनयस्य ।

एतेन पर्वतो वह्निमान् धूमादित्यादिप्रसिद्धन्यायान्तर्गतोपनयेऽतिव्याप्तिप्रसंजकत्वेन नैतद्विलक्षणं शङ्कापथमारोहति। न चायं दोषोऽतिव्यापकं चोपनयस्येत्येनन स्वयमेव वक्ष्यत इति नानुपपत्तिरिति वाच्यम् । उपनयवारणार्थकतयैव लिङ्गाविषयकत्वविशेषणस्य स्वयं प्रागव्याख्याततया उपनयमात्र एव यादृशविवक्षायामतिव्याप्तिस्तादृशविवक्षायां सन्दर्भावरोधस्य जागरूकत्वादित्यपि समाहितं । न चैवमतिव्यापकञ्चोपनयस्येति ग्रन्थासङ्गतिः । तादृशग्रन्थस्य धूमवान् वह्निमान् धूमादित्यादिन्यायान्तर्गतोपनयविशेषपरत्वात् तत्र हेतावेव पक्षतावच्छेदकतया पक्षतावच्छेदकावच्छिन्नांशे यद्विशेषणत्वं तस्यापि पक्षतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपितत्वात् । एवं व्यापकत्वनिरूपकतया हेतुविषयताया अपि स्वात्मकपक्षतावच्छेदकप्रकारतनिरूपकाधिकरणनिष्ठविशेष्यतानिरूपितप्रकारतात्मकतया अतिव्याप्ति सङ्गतिः । यत्तु पक्षतावच्छेदकहेतुकव्यतिरेक्युपनयपर्यन्तपरतया तादृशग्रन्थसंगमनमप्यन्वय्युपनयजन्यबोधे व्याप्तिघटकतया लिंगविषयत्वसत्वेनातिव्याप्तिर्नसम्भवतीत्यभिमानेन केषाञ्चिन्मतम्। तदेतेन न श्रद्धेयम् ।

---

विषयकान्तार्थस्येति । उद्देश्यानुमितिसमानविषयकान्तार्थस्येत्यर्थः । नातिव्याप्तिरिति । पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यताकान्यत्वविरहादिति एवमपि । पक्षतावच्छेदकानवच्छिन्नमुख्यविशेष्यताकान्यत्वविवक्षणेपि । भावः । तत्र । निगमने ।अतिव्याप्तेर्दुर्वारत्वादिति । पक्षमुख्यविशेष्यकत्वस्य सत्वादिति भावः । जतः । अतिव्याप्तिवारणाय । तदर्थोवाच्य इति । पक्षाऽविशेषणतयेत्यस्यार्थो वाच्य इत्यर्थः । तथेतीति । पक्षतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपितेत्यर्थः । तदनवच्छिन्नतया । धर्मितावच्छेदकानवच्छिन्नतया । विधेयतद्धर्मितावच्छेदकप्रकारतानिरूपकविशेष्यतयोरिति । विधेयनिष्ठप्रकारतानिरूपकविशेष्यतायाः'धर्मितावच्छेदकप्रकारतानिरूपकविशेष्यतायाश्चेत्यर्थः । अव्याप्तिः प्रसज्यतएवेति । लिंगविषयतायाः पक्षतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपतप्रकारताभिन्नत्वादिति भावः ।

पक्षाविशेषणत्वं यथाश्रुतमेवेत्यभिमानेन केषांचिद्दूषणमुद्धरति । एतेनेति । पक्षतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपितप्रकारतान्यत्व-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षाविशेषणत्वेन साध्याविशेषणत्वेन चेति। पक्षतावच्छेदकप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारताभिन्नत्वे सति साध्यतावच्छेदकप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारताभिन्नं यल्लिङ्गविषयत्वं तच्छून्यत्वमित्यर्थः। साध्यविशेषणतयेत्यस्य यथाश्रुतार्थकत्वे निगमने परम्परया साध्यविशेषणतयैव लिङ्गभानादतिव्याप्त्यापत्तेः। नचैवमपि ज्ञानविषयवान् धूमादित्यादिन्यायान्तर्गतनिगमनेतिव्याप्तिस्तदवस्थैव ज्ञानविषयत्वरूपसाध्यतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपितत्वस्य हेतुप्रकारतायां सत्त्वात्, एवं वह्निसाध्यक निगमनजन्यबोधीयहेतुज्ञानज्ञाप्यत्वविशिष्टवह्नित्वादिप्रकारघटकविषयतातायां साध्यतावच्छेदकावच्छिन्नादिनिरूपितप्रकारतात्वस्याधिकं त्वित्यादिन्यायेनाक्षततया तादृशप्रकारघटकहेतुविषयतायाः निरुक्तविशेष्यतानिरूपितप्रकारताकान्यत्वविरहात्तत्राप्यतिव्याप्तिताद - वस्थ्यमिति वाच्यम्। शुद्धसाध्यतावच्छेदकप्रकारतानिरूपकविशेष्यताया एव विवक्षणीयत्वात्। ननु पक्षधर्मलिगा-

---

निवेशेनेत्यर्थः। अतिव्याप्तिप्रसञ्जकत्वेनेति। सर्वत्रैवोपनये लिंगस्य पक्षविशेषणतयैव भानादिति भावः। एतद्विवक्षणमिति। साक्षात्परंपरासाधारणपक्षनिरूपितविशेषणतान्यत्वविवक्षणमित्यर्थः। समाहितमिति। उक्तरीत्या प्रसिद्धोपनयवारणात्। ननु निरवच्छिन्नविशेष्यतास्वीकारेऽतिव्यापकं चैत्युपनयातिव्याप्तिप्रदर्शकदीधित्यसंगतिरित्याशंकते। नचैवमिति। पक्षतावच्छेदकेति। विधेयतात्मकेत्यादिः। तथा च विधेयीभूतधूमस्य पक्षतावच्छेदकतया पक्षतावच्छेदकनिष्ठप्रकारतेत्यनेन धूमनिष्ठविधेयताया-ग्रहणसंभवादिति भावः। एवमुपनयार्थघटकव्यापकताघटकसामाधिकरण्यघटकधूमप्रकारतायाः पक्षतावच्छेदकनिष्ठप्रकारताशब्देनोपादानमाह। एवमिति। यथाश्रुतार्थकत्वे इति। साक्षात्साध्यनिरूपितविशेषणताभिन्नत्वोक्तौ वन्हिकालीनद्रव्यसामग्रीमान् वन्हेरित्यादावव्याप्तेः। शंकते। नचेति। एवमपि। साध्यतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपितप्रकारताभिन्नत्वनिवेशेपि। हेतुप्रकारतायां सत्वादिति। न च पंचम्यर्थ "जन्य" ज्ञानविषयत्वांशे धूमस्य विधेयतया उक्तयुक्त्या "जन्य" ज्ञानविषयवत्त्वप्रकारतानिरूपकविशेष्यतानिरूपितत्वं हेतुप्रकारतायां न संभवतीति वाच्यम्। धूमज्ञानज्ञाप्यत्वप्रकारतानिरूपकविशेष्यतानिरूपितत्वे बाधकाभावाद् धूमानन्वितपञ्चम्यर्थाऽभानाच्चाऽतिव्याप्तिसंगतिः। एवं जन्यज्ञानविषयसाध्यकेपि वोध्यम्। साध्यता-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विषयकत्वविवक्षणे दधि द्रव्यं दध्न इत्यादौ नाव्याप्त्यवकाशः दधि द्रव्यमिति बोधस्य दधिद्व्यणुकविषयकस्य दधिसमवेतदध्यविषयकत्वसम्भवादतः स्थलान्तरमाह प्रमेयत्वमिति । ननु प्रमेयत्वं प्रमाविषयत्वं तच्च विषयभेदाद्भिन्नं, एवं च घटादिनिष्ठप्रमेयत्वाविषयकस्य प्रमेयत्वमभिधेयमितिबोधस्य प्रमेयत्वरूपपक्षनिष्ठप्रमेयत्वाविषयकस्य सम्भवान्न तत्राव्याप्तिरतः स्थलान्तरमनुसरति । गोत्वाभाव इति । ननु पक्षतावच्छेदकविशिष्टपक्षविषयतानन्तःपातिलिङ्ग विषयताशून्यत्वनिवेशे नोपदर्शितहेतुपक्षकप्रतिज्ञाया असंग्रहः । तदन्तःपातित्वं च पक्षतावच्छेदकप्रकारतानिरूपितसंसर्गतानिरूपकत्वं पक्षता वच्छेदकप्रकारता पक्षविशेष्यतासाधारणमित्यालोच्य अतिव्याप्तिमाह-अतिव्यापकं चेति ।

---

वच्छेदकादिप्रकारतात्वस्येति । विधेयकोटिप्रविष्टत्वेपि साध्यतावच्छेदकवृत्तिप्रकारताशब्देन विशिष्टवन्हित्वग्रहो भवत्येवेति सूचनायेदम् । शुद्धसाध्यतावच्छेदकेति । उक्तस्थले ज्ञानविषयात्मकसाध्यांशे धूमादित्यन्तार्थधूमज्ञानजन्यज्ञानविषयत्वरूपधूमादिविशिष्टसाध्यतावच्छेदकप्रकारतानिरूपकविशेष्यतानिरूपित्वस्य हेतुप्रकारतायां सत्वान्न दोषः ।

दीधितौ—पक्षाविशेषणत्वेनेति । तथा च गन्धवती इतरेभ्यो भिद्यते गन्धादित्यत्र प्रतिज्ञायां पक्षविशेषणतयैव लिङ्गस्य विषयत्वान्नाव्याप्तिः । साध्याविशेषणत्वेनेति । तदविषयत्वंचेति । लिङ्गाविषयत्वं चेत्यर्थः । तथा च अयं वन्हिसामग्रीमान् वन्हेरित्यत्र प्रतिज्ञायां साध्यविशेषणतयैव लिङ्गस्य विषयत्वान्नाव्याप्तिः । दधि द्रव्यं दध्न इत्यत्र प्रतिज्ञायां विशेष्यत्वेनैव लिङ्गस्य भानात्पक्षसाध्ययोरविशेषणत्वेन यल्लिङ्गविषयत्वं तच्छून्यत्वविरहाद् भवत्यव्याप्तिः । एवमुत्तरत्र । अतिव्यापकं चेति । उपनयजन्यबोधे लिङ्गविषयतायाः पक्षविशेषणतयैव भानादिति भावः । ननु पक्षाविशेषणत्वेन साध्याविशेषणत्वेन पक्षधर्मलिङ्गाविषयकत्वं विवक्षणीयम्, द्रव्यत्वव्याप्यव्याप्यजातेः परमाणावनंगीकारेण दधिद्व्यणुकस्य दधिसमवेताभावात्पक्षधर्मलिङ्गपदेन दधित्रसरेण्वादीनामेव ग्रहणम्, तथा च "प्रतिज्ञाजन्य" द्व्यणुकविषयकबोधस्य पक्षधर्मलिङ्गाविषयकत्वान्नाव्याप्तिरित्याशंकते । नन्विति । बोधस्य । प्रतिज्ञाजन्यबोधस्य । दधिसमवेतदध्यविषयकत्वसंभवादिति । दधित्वाश्रयद्व्यणुकसमवेतत्रसरेणुरूपदध्यविषयकत्वसंभवादित्यर्थः । पक्षधर्मलिङ्गाविषयकत्वादितियावत् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तथापि पक्षतावच्छेदकविशिष्टपक्षे यत्साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वं तद्बहिर्भावेन लिंगविषयत्वस्याभावो वाच्यः।

पक्षतावच्छेदकविशिष्टेइति । पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपितवैशिष्ट्यविषयता तद्बहिर्भूतलिङ्गविषयताशून्यत्वमित्यर्थः। अथ तद्बहिर्भूतत्वं न साक्षात्परम्परासाधारण तन्निरूपकत्वशून्यत्वम्। पक्षतावच्छेदकप्रकारताया उक्तयुक्त्या तदनिरूपकत्वात् कथंचिन्निरूपकत्वोपपादनेऽपि यत्र संयोगेन वह्नेस्साध्यता वह्निसंयोगत्वेन हेतुता तत्रत्यप्रतिज्ञायामव्याप्तिः। हेतुभूतवैशिष्ट्यविषयतायाः स्वनिरूपकत्वविरहात्, एवं साक्षात्परम्परासाधारणानुगतनिरूप्यनिरूपकभावोऽपि दुर्वचः परम्परया निरूपितत्वस्य तन्निरूपितनिरूपितत्वाद्यात्मकत्वात् ।

---

अतः । पक्षधर्मलिंगाविषयकत्वात् । प्रमेयत्वरूपपक्षनिष्ठप्रमेयत्वाविषयकस्येति । पक्षधर्मलिंगाविषयकस्येत्यर्थः ।

केचित्तु नीलधूमत्वेनेव प्रमेयत्वत्वेन हेतूकृत्यापि न न्यायो,व्यर्थविशेषणत्वात्, विषयतात्वस्यैव व्याप्यतावच्छेदकत्वादिति कुतस्तत्प्रतिज्ञायामव्याप्तिरत आह। गोत्वाभाव इति। अत्र च गोत्वाभावस्य स्वरूपसंबन्धेन स्वस्मिन्नपि सत्वान्न पक्षधर्मताहानिरिति प्राहुः ।

उपदर्शितप्रतिज्ञाया इति । गोत्वाभावो न सास्नादिमान् इति प्रतिज्ञाया इत्यर्थः । नाऽसंग्रह इति । लिङ्गविषयतायाः पक्षतावच्छेदकविशिष्टपक्षविषयतान्तःपातित्वान्नाव्याप्तिरित्यर्थः । पक्षतावच्छेदकावच्छिन्नेति । गोत्वाभावपक्षकोक्तप्रतिज्ञायाः संग्रहाय तद्वैशिष्ट्यनिवेशः । तन्निरूपकत्वशून्यत्वमिति । वैशिष्ट्यविषयतानिरूपकत्वशून्यत्वमित्यर्थः । गोत्वाभाव-पृथिवीत्वहेतुकोक्तप्रतिज्ञयोः संग्रहाय साक्षात्परंपरयेत्युभयोपादानम् । उक्तयुक्त्या । स्वस्य स्वधर्मितावच्छेदकत्वापत्त्या । पक्षतावच्छेदकनिष्ठावच्छेदकताख्यविषयताया एव निरूपकत्वेनेति यावत् । तदनिरूपकत्वादिति वैशिष्ट्यविषयत्वानिरूपकत्वादित्यर्थः । तथा च स्वस्य स्वधर्मितावच्छेदकतावारणायाऽतिरिक्तप्रकारता स्वीकरणीया । तस्याः सांसर्गिकविषयत्वानिरूपकत्वेन हेतुधर्मितावच्छेदककप्रतिज्ञायामव्याप्तिरिति भावः । कथंचिदिति । धर्मितावच्छेदकत्वप्रकारत्वयोरभेदाभ्युपगमेनेत्यर्थः । तच्चाग्रे व्यक्तीभविष्यति । स्वनिरूपकत्वविरहादिति । स्वस्मिन्परंपरयापि स्वनिरूपकत्वानंगीकारादिति भावः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एतेन तादृशवैशिष्ट्यविषयतानिरूपकविषयत्वानिरूपितत्वं तादृशविषयताबहिर्भूतत्वं तच्च वैशिष्ट्यविषयतासाधारणं तन्निरूपकप्रकारताविशेष्यतानिरूपितत्वमादाय तन्निरूपकविशेष्यताप्रकारतासाधारणं चेत्युक्तावपि न निस्तार इति चेन्न। तथाविधवैशिष्ट्यविषयताशालिनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकत्वमेव—तद्बहिर्भूतत्वम्। निगमनजन्यबोधीयहेतुविषयता च यादृशप्रतिबन्धकतावच्छेदककोटौ निवेश्यते तादृशी न कापि प्रतिबंधकता तथाविधनिश्चयत्वव्यापिका हेत्वविषयकतादृशवैशिष्ट्यविषयताशालिज्ञानसाधारण्यात्

---

तादृशविषयत्वानिरूपकप्रकारताशून्यत्वनिवेशे दोषमाह। एवमिति। तन्निरूपितनिरूपितत्वाद्यात्मकत्वादिति। उभयसाधारणानुगतरूपाभावादिति भावः।

पर्वतो वन्हिमान् वन्हिसंयोगादित्यत्राव्याप्तिमुद्धरतां मतमाह। एतेनेति। साक्षात्परंपरासाधारणनिरूप्यनिरूपकभावस्य दुर्वचत्वेनेत्यर्थः। तच्च। तादृशवैशिष्ट्यविषयतानिरूपकत्वं च। न निस्तार इति। विषयत्वाऽनिरूपितेत्यत्र निरूपितनिरूपित्वादिप्रवेशे गोत्वाभावादिपक्षकप्रतिज्ञायां, साक्षान्निरूपितत्वप्रवेशे गन्धसमानकालीनरूपवदादिपक्षक प्रतिज्ञायामव्याप्तिरित्यर्थः।

तथाविधेति। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितेत्यर्थः। तद्बहिर्भूतत्वमिति। तथाविधवैशिष्ट्यविषयताबहिर्भूतत्वमित्यर्थः। तथा च पक्षमुख्यविशेष्यकत्वे सति न्यायावयवत्वे सति पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितवैशिष्ट्यविषयताया तच्छालिनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकलिंगविषयताशून्यबोधजनकवाक्यत्वं प्रतिज्ञात्वम्। पर्वतोवन्हिमान्नवेतिसंशयनिरूपिता प्रतिबन्धकता ग्राह्या। तादृशप्रतिबन्धकतानवच्छेदकीभूता या लिंगविषयता तच्छून्यत्वस्य बोधे सत्वाल्लक्षणसमन्वयः। उक्तव्यतिरेक्युदाहरणेऽतिव्याप्तिवारणाय प्रथमसत्यन्तम्। उदासीनेऽतिव्याप्तिवारणाय द्वितीयं तत्। उपनयेऽतिव्याप्तिवारणाय शून्यान्तम्। निश्चयत्वसमनियतत्वं निश्चयत्वव्यापकत्वे सति निश्चयत्वव्याप्यत्वम्, तत्र व्यापकत्वनिवेशस्य प्रयोजनमाह। निगमनजन्येति। निगमनजन्यो यो बोधः धूमज्ञानज्ञाप्यवन्हिमदभिन्नःपर्वत इत्याकारकः "अनुषङ्गपक्षे" तदीयायाः हेतुविषयतायाः धूमज्ञानज्ञाप्यवन्हिमान्न वा पर्वत इति संशयप्रतिबन्धकता-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अतस्तथाविधहेतुविषयतायास्तद्बहिर्भूतत्वोपपत्तिरित्यनुषङ्गपक्षेऽपि न निगमनातिव्याप्तिः तादृशनिश्चयत्वव्यापकत्वमात्रस्य प्रतिबन्धकताविशेषणत्वे धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यत्र हेत्ववयवेऽतिव्याप्तिः, तादृशहेतुनिष्ठायाः हेतुत्वं धूमीयं न वेतिसंशयप्रतिबन्धकतावच्छेदकतादृशबोधविषयताया निरुक्तविषयताबहिर्भूतत्वानुपपत्तेः अतस्तादृशनिश्चयत्वव्याप्यत्वमपि प्रतिबन्धकता विशेषणम् ।

---

वच्छेदककोटिप्रविष्टतया ( तादृशनिश्चयत्वव्याप्यतया च तादृशप्रतिबन्धकतायाः ) तदनवच्छेदकीभूतलिंगविषयताशून्यबोधमादाय निगमनेऽतिव्याप्तिरतोव्यापकत्वनिवेशः, एवं च तादृशप्रतिबन्धकता न पक्षे साध्यवैशिष्ट्यावगाहिनिश्चयत्वव्यापिकेत्याह । हेत्वविषयकेति । तस्मादिति । पञ्चम्यन्तार्थाविषयकेत्यर्थः । तादृशवैशिष्ट्यविषयताशालिज्ञानसाधारण्यादिति । पक्षे साध्यवैशिष्ट्यावगाहिनिश्चयवृत्तित्वादित्यर्थः । प्रतिज्ञाजन्यबोधवृत्तित्वादिति यावत् । अतः । तादृशनिश्चयत्वव्यापकत्वविरहात् । तथाविधहेतुविषयताया इति । निगमनजन्यबोधीयहेतुविषयताया इत्यर्थः । तद्बहिर्भूतत्वोपपत्तिरिति । पक्षे साध्यवैशिष्ट्यावगाहिविषयताशालिनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकत्वोपपत्तिरित्यर्थः । अननुषङ्गपक्षे पक्षमुखप्रविशेष्यकत्वविरहेणाऽतिव्याप्त्यभावादाह । अनुषङ्गपक्षेऽपीति । नातिव्याप्तिरिति । निगमनजन्यबोधस्य तादृशप्रतिबन्धकतानवच्छेदकलिंगविषयताशून्यत्वाभावादितिभावः । तादृशनिश्चयत्वव्याप्यत्वस्य व्यावृत्तिमाह । तादृशनिश्चयत्वव्यापकत्वमात्रस्येति । पक्षे साध्यवैशिष्ट्यविषयताशालिनिश्चयत्वव्यापकत्वमात्रस्येत्यर्थः । मात्रपदेन निश्चयत्वव्याप्यत्वस्य व्यवच्छेदः । हेत्ववयवे । धूमादितिभागे । अतिव्याप्तौ हेतुमाह । तादृशहेतुनिष्ठाया इति । धूमनिष्ठाया इत्यर्थः । तादृशबाधविषयताया इति । हेतुत्वं धूमीयमिति बोधविषयताया इत्यर्थः । निरुक्तविषयताबहिर्भूतत्वानुपपत्तेरिति । हेतुविषयतायाः पक्षे साध्यवैशिष्ट्यविषयताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानवच्छेदकत्वानुपपत्तेरित्यर्थः । तादृशप्रतिबन्धकतावच्छेदकत्वादिति यावत् । तथा च तादृशप्रतिबन्धकतानवच्छेदकलिंगविषयताशून्यबोधजनकत्वादतिव्याप्तिरिति भावः । अतः । हेत्ववयवेऽतिव्याप्तिवारणाय । तादृशनिश्चयत्वव्याप्यत्वमपीति । पक्षे साध्यवैशिष्ट्यविषयताशालिनिश्चयत्वव्याप्यत्वमपीत्यर्थः । प्रतिबन्धकताविशेषणमिति । तथा च हेतुत्वं धूमीयं न वेतिसंशय-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न च पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताकत्वनिवेशस्यावश्यकतया नैतादृशातिव्याप्तिसम्भावनेति व्यर्थं व्याप्यत्वनिवेशनमिति वाच्यम्। तथाप्यनुषंगपक्षे धूमाद्वह्निमतस्सधर्मा पर्वतो वाह्निमान् धूमादित्यादिन्यायस्थलीयनिगमने हेतुत्वं प्रमेयाद्वाच्यत्ववत् प्रमेयादित्यादिन्यायस्थलीयहेत्ववयवे चातिव्याप्तेर्दुर्वारत्वात्तन्निवेशस्यावश्यकत्वादिति। न च धर्मितावच्छेदकनिष्ठं प्रकारत्वं न प्रतिबन्धकतावच्छेदकमपि तु तत्तन्निष्ठविशेष्यतावच्छेदकत्वमेव तथा च गन्धवतीतरेभ्यो भिद्यते इत्यादिप्रतिज्ञाजन्यबोधीयहेतुप्रकारतायास्तद्बहिर्भूतत्वादव्याप्तिरिति वाच्यम्। विशेष्यतावच्छेदकताया एव प्रकारतात्वोपगमेन तादृशबोधे तदन्यप्रकारतानभ्युपगमात्। एवं सति प्रसक्तस्य भूतलं घटवदित्यादिज्ञानस्य भूतलत्वांशे तद्धर्मितावच्छेदकत्वस्य प्रकारान्तरेण वारणसम्भवात्।

---

प्रतिबन्धकतायाः हेतुत्वं धूमीयमिति केवलहेतुजन्यबोधेपि सत्वेन तादृशनिश्चयत्वव्याप्यत्वविरहादिति भावः।

नचेति आवश्यकतयेति। अन्यथोक्तव्यतिरेक्युदाहरणेऽतिव्याप्तिःस्यादिति भावः। नैतादृशातिव्याप्तिसंभवावनेति। हेतुत्वं धूमीयमिति हेत्ववयवजन्यबोधस्य पक्षमुख्यविशेष्यकत्वविरहादिति भावः। तथापीति। पक्षमुख्यविशेष्यकत्वनिवेशेपीत्यर्थः। निगमने। इति। अतिव्याप्तेर्दुर्वारत्वादित्यनेनाऽस्यान्वयः। निगमनजन्यबोधस्य तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानवच्छेदकलिंगविषयिताशून्यत्वात् पक्षमुख्यविशेष्यकत्वाच्चेति भावः। नचेति धर्मितावच्छेदकनिष्ठं प्रकारत्वं न प्रतिबन्धकतावच्छेदकमिति। केवलगन्धवतीति ज्ञानस्य कुत्राप्यप्रतिबन्धकत्वात्। तथा चेति। धर्मितावच्छेदकनिष्ठप्रकारतायाः प्रतिबन्धकतानवच्छेदत्वे चेत्यर्थः। तद्बहिर्भूतत्वादिति। प्रतिबन्धकतानवच्छेदकत्वादित्यर्थः। तदन्येति। विशेष्यतावच्छेदकतान्येत्यर्थः। प्रकारतानभ्युपगमादिति। तथा च न तस्याः बहिर्भूतत्वमितिभावः। एवंसति। प्रकारताया विशेष्यतावच्छेदकतात्मकत्वे। तद्धर्मितावच्छेदकत्वस्य। भूतलत्वधर्मितावच्छेदकत्वस्य। प्रकारान्तरेणेति प्रकारान्तरं च स्वधर्मितावच्छेदकत्वं स्वप्रकारतानिरूपितविशेष्यतानिरूपितत्वान्यवृत्त्यवच्छेदकत्वम्, स्वप्रकारतानिरूपितविशेष्यतानिरूपितत्व-अवच्छेदकतात्वाश्रयत्वं वा। निरूपितत्वस्याव्यासज्यवृत्तित्वेन स्वनिष्ठप्रकारतात्वेनैव तादृशविशेष्यतानिरूपितत्वंनत्ववच्छेदकतात्वेन। स्वप्रकारतानिरूपितत्वेन स्वावच्छिन्नविशेष्यतात्वस्य नावच्छेद्यावच्छेदकभावइति वा।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अस्तु वा विशेष्यतावच्छेदकताख्य, विषयता प्रकारतातोऽन्यैव, तथापि न क्षतिः। तादृशविषयताबहिर्भूत-विषयताशून्यत्वं विशेषणमुपेत्य तादृशबहिर्भूतविषयतानवच्छिन्नजन्य-तानिरूपितजनकताया वाक्यविशेषणत्वोपगमेन विशेष्यतावच्छेदकता-भिन्नगन्धादिविषयतायाः प्रतिज्ञाजन्यबोधे सत्त्वेऽपि तस्याः प्रतिज्ञाजन्य तावच्छेदककोटिनिवेशे प्रयोजनाभावेन तन्निष्ठधर्मितावच्छेदकताया एव-तत्र निवेशनीयतया अव्याप्त्यनवकाशात् । तादृशबहिर्भूतविषयता-सामान्यशून्यत्वनिवेशे अनुमितिसमानविषयकत्वनिवेशनस्य मूलो-पात्तस्य वैयर्थ्यप्रसङ्ग इति ईदृशलिङ्गविषयताशून्यत्वनिवेशनम् । अखण्डाभावस्य घटकतया न लिङ्गांशवैयर्थ्यम्। उक्तरीत्या बहिर्भूत-त्वनिर्वचनायासविद्वेषात्कल्पान्तरमाश्रयते । वस्तुतइति । लिङ्ग

---

ननु स्वस्य स्वधर्मितावच्छेदकत्वे को दोष इति चेत्—भूतले भूतलत्व-प्रकारकानुव्यवसायापत्तेः । तथापि । अन्यत्वेपि। नक्षतिः। न गन्धवती इतरेभ्यो भिद्यते इत्यादिप्रतिज्ञायामव्याप्तिः । तादृशबहिर्भूतेति । पक्षे साध्यवैशिष्ट्यविषयताबहिर्भूतेत्यर्थः। तादृशविषयताशालिनिश्चयत्वसमनियत-प्रतिबन्धकतावच्छेदकेत्यर्थः । तस्याः । गन्धप्रकारतायाः । तत्र । प्रतिज्ञाजन्य-तावच्छेदककोटौ। अव्याप्त्यनवकाशादिति । तादृशप्रतिबन्धकतानवच्छेद-कीभूतगन्धप्रकारत्वानवच्छिन्नजन्यतानिरूपितजनकतासत्वादिति भावः । ननु निरुक्तविषयताबहिर्भूतविषयताशून्यत्वोक्त्यैव सामंजस्ये लिंगपदं व्यर्थमतआह । निवेशे इति । अनुमितिसमानविषयकत्वनिवेशनस्येति । पक्षमुख्यविशे-ष्यकत्वार्थकस्येत्यर्थः। वैयर्थ्यप्रसंग इति । ह्रदो धूमाभाववान् वन्ह्यभावादित्यत्र यत्र धूमस्तत्र वन्हिरित्युदाहरणजन्यबोधस्य निरुक्तप्रतिबन्धकतानवच्छेदकविष-यताशालित्वेन वारणसंभवात् । इति । अतः । ईदृशेति । निरुक्तप्रतिबन्ध-कतानवच्छेदकेत्यर्थः । लिंगविषयताशून्यत्वनिवेशनमिति । तथा च तादृशलिंगविषयिताशून्यत्वादुक्तातिव्याप्तिवारणाय अनुमितिसमानविषयकत्व-सार्थक्यम् । लिंगनिवेशस्य तु न वैयर्थ्यमित्याह अखंडेति ।

कल्पान्तरमवतारयति । उक्तरीत्येति । अस्य आयासेऽन्वयः। विद्वेषा-दिति । अस्मिन्कल्पे बहिर्भूतत्वानिवेशादिति भावः । ननु लिंगत्वं व्याप्यत्वम्, एवं च व्याप्यवान्पर्वतोवन्हिमान् इत्यत्र प्रतिज्ञायामव्याप्तिरत आह । व्याप्ति-रिति । तथा न्यायावयवत्वे सति व्याप्त्यविषयकबोधजनकत्वं प्रतिज्ञात्वम् । एवं सति उदाहरणेऽतिव्याप्तिः, तज्जन्यबोधे व्यापकत्वावगाहनेपि व्याप्त्यविषय-कत्वात्, एतत्कल्पे पक्षमुख्यविशेष्यकत्वस्याऽसत्वादत आह तद्घटकव्यापक

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वस्तुतो लिंगं लिंगत्वम् ।

त्वमिति—व्याप्तिरित्यर्थः । नन्वत्राननुगतयोरन्वयव्यतिरेकव्याप्त्योस्तद्घटकव्यापकतयोर्वा एकतरमात्रविषयताया उपादाने अन्यतरबोधकोपनयादावतिव्याप्तिरित्याशङ्कया तादृशव्याप्तिघटकव्यापकताद्वयविषयत्वयोरनुगतरूपेणाभावं निवेशयति । तथा चेति । प्रकृतहेतुतावच्छेदकावच्छिन्नस्येति गमकत्वान्वितम् । व्याप्तिविषयकत्वमित्यत्र व्याप्तिपदं व्यापकत्वविषयतानिष्ठसाध्यतावच्छेदकादिविषयताव्यावृत्तविलक्षणौपयिकतानिवेशसूचनाय । अथ किमिदं तादृशगमकतौपयिकत्वं न तावत्प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानुमितित्वावच्छिन्नजनकतावच्छेदकत्वम्, पक्षधर्मत्वाविषयकोदाहरणजन्यबोधीयव्यापकत्वादिविषयताया अनुमितिजनकतावच्छेदककोट्यप्रविष्टतया तत्रातिव्याप्तेः । न च हेतुव्यापकत्वादिविषयतात्वेनैव तद्विषयतानां जनकतावच्छेदककोटौ निवेशादनुमित्यजनकस्यापि तादृशज्ञानस्य विषयतानां तादृशरूपाक्रान्तानां तथात्वमक्षतमेवेति वाच्यम् ।

---

त्वयोर्वेति । एकतरमात्रविषयताया उपादाने । अन्वयव्याप्तिघटकव्यापकत्वविषयताया उपादाने । अन्यतरबोधकोपनयादावतिव्याप्तिरिति । व्यतिरेकव्याप्तिघटकव्यापकत्वबोधकोपनयादावतिव्याप्तिरित्यर्थः । अन्वयव्याप्तिविषयताशून्यबोधजनकत्वादिति यावत् । एवं व्यतिरेकव्याप्तिघटकव्यापकत्वविषयताया उपादाने अन्वयव्याप्तिघटकव्यापकत्वबोधकोपनयेऽतिव्याप्तिर्बोध्या । तादृशव्याप्तिघटकेति । अन्वयव्यतिरेकव्याप्तिघटकेत्यर्थः । व्यापकत्वविषयताद्वयोरिति । साध्ये हेतुव्यापकत्वविषयतायाः, हेत्वभावे साध्यभावव्यापकत्वविषयतायाश्चेत्यर्थः ।

गमकत्वमनुमितिजनकत्वम्, औपयिकत्वमवच्छेदकत्वमित्याशयेनाह । न तावदिति । तथा च न्यायावयवत्वे सति प्रकृतहेतुकप्रकृतसाध्याकानुमितिजनकतावच्छेदकविषयताशून्यबोधजनकवाक्यत्वं प्रतिज्ञात्वम् । तत्र । उदाहरणे । अतिव्याप्तेरिति । उदाहरणस्य तादृशजनकतावच्छेदकविषयताशून्यबोधजनकत्वादिति भावः । एतत्कल्पे पक्षमुख्यविशेष्यकत्वस्यानिवेशादिति ध्येयम् । अतिव्याप्तिं परिहरति नचेति । विषयतात्वेनैवेति । एवकारेण पक्षविषयतात्वस्य व्यवच्छेदः । तद्विषयतानां । हेतुव्यापकत्वादिविषयतानां । तादृशज्ञानस्य । उदाहरणजन्यबोधस्य । विषयतानां । हेतु-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तादृशविषयतात्वेन पक्षविशेषणतापन्न हेतुविशेषणतापन्न सामानाधिकरण्यविशेषणतापन्नसाध्यादिविषयतानिरूपितव्यापकत्व विषयताया एव कारणतावच्छेदकघटकत्वादतादृश्यास्तदवच्छेदकत्वाभावात्। यद्रूपावच्छिन्नविषयिता जनकतावच्छेदिका तद्रूपावच्छिन्नविषयताशून्यत्वनिवेशे च साध्यतावच्छेदकाद्यवच्छिन्नविषयताया अप्यनुमितिजनकतावच्छेदककोटिप्रविष्टतया तादृशविषयताशून्यत्वस्य तादृशप्रतिज्ञाजन्यबोधेऽप्यसत्त्वादसम्भवः। यद्रूपावच्छिन्ननिरूपितव्यापकत्वविषयिता जनकतावच्छेदिका तद्रूपावच्छिन्ननिरूपितव्यापकत्वानवगाहित्वनिवेशे च किञ्चिद्रूपावच्छिन्नव्यापकत्वं साध्यस्य पक्षस्य वा घटकं यत्र तत्स्थलीयप्रतिज्ञाया असंग्रहः। यत्त्वतत्त्वनिवेशादनुगमानवकाशश्चेति चेन्न—

---

व्यापकत्वादिविषयतानां। **तादृशरूपाक्रान्तानां**। अनुमितिजनकतावच्छेदरूपाक्रान्तानां। **तथात्वं**। अनुमितिजनकतावच्छेदकोटिप्रविष्टत्वम्। **अन्नतमेवेति**! तथा चोदाहरणस्याऽनुमितिजनकतावच्छेदकविषयताशून्यबोधजनकत्वाभावान्नातिव्याप्तिरिति भावः।

**व्यापकत्वविषयताया एवेति**। निरूप्यनिरूपकभावापन्नव्यापकत्वविषयताया एवेत्यर्थः। एवकारव्यवच्छेद्यमाह। **अतादृश्या** इति। पक्षादिविशेषणतानापन्नव्यापकत्वविषयताया इत्यर्थः। **तदवच्छेदकत्वाभावादिति**। तादृशजनकतावच्छेदकत्वाभावादित्यर्थः। तथा चाऽतिव्याप्तिस्तदवस्थैवेति भावः। **व्यापकत्वानवगाहित्वनिवेशे चेति**। अतिव्याप्तिवारणेपीति शेषः। **तत्स्थलीयप्रतिज्ञाया असंग्रह इति**। पर्वत आलोकव्यापकद्रव्यकालीनवन्हिमान्, आलोकव्यापकद्रव्यवान् पर्वतोवन्हिमानित्यादिप्रतिज्ञाया असंग्रह इत्यर्थः। आलोकत्वावच्छिन्ननिरूपितव्यापकत्वावगाहित्वादितिभावः।

अत्र पञ्चमविषयतायामवच्छेदकत्वंद्विविधम्–कोटिप्रविष्टस्यावच्छेदकत्वम्, स्वातन्त्र्येण विनिगमनाविरहप्रयुक्तं च। तत्रप्रथमेविषयतानिष्ठावच्छेदकतावच्छेदकदकोधर्मः व्यापकत्वविषयतानिरूपित्वं, साध्यतावच्छेदकसंबन्धाच्छिन्नसाध्यतावच्छेदकावच्छिन्नविषयतात्वंचेत्युभयमेव। द्वितीयेचतुर्थविषयतानिरूपितत्वसहितमितिभेदः। मध्यवर्तिविषयतयोरभेदे यथाश्रुतएवनिरूप्यनिरूपकभावः,अन्यथामुख्यविशेष्यतानिरूपितविषयत्वावच्छिन्नविषयतानिरूपितविषयत्वावच्छिन्नविषयत्वावच्छिन्नविषयतानिरूपितविषयत्वावच्छिन्नविषयतानिरूपितविषयत्वांशेइतिवक्तव्यम्। न च तादृशावच्छे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितविषयतानिरूपिता या विषयता तन्निरूपितविषयतानिरूपितविषयतांशे विशेषणविधया प्रकृतानुमितिजनकतावच्छेदकतावच्छेदकतायाः पर्याप्त्यधिकरणधर्मवत्त्वेन हेतुव्यापकताविशिष्टसाध्यविषयत्व साध्याभावव्यापकत्वविशिष्टहेत्वभावविषयत्वेऽनुगमय्य तदभावस्य निवेशनेनानुपपत्त्यभावात् । तथाहि प्रकृतानुमितिजनकतावच्छेदिकायाः अन्वयिपरामर्शीयहेतुव्यापकत्वावच्छिन्नसाध्यविषय-

---

ताविच्छेदकभावनिवेशे व्यतिरेकिपरामर्शीयसाध्याभावव्यापकत्वविशिष्टहेत्वभावविषयताया असंग्रहः, संसर्गताख्यद्वितीयविषयत्वावच्छिन्नविषयताया अप्रसिद्धेः । एवं प्रतियोगित्वनिष्ठसांसर्गिकविषयत्वावच्छिन्नविषयताया अपीति वाच्यम् । पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितविषयताविशिष्टविषयताविशिष्टविषयताविशिष्टविषयताविशिष्टविषयत्वांशे इत्यादिरीत्या निवेशनीयत्वात् । वै० स्वानिरूपितत्व,स्वनिरूपितविशेष्यतानिरूपितविषयत्वावच्छिन्नविषयत्वानिरूपितत्वोभयसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसं० द्वितीयविषयताहि-संसर्गता — प्रकारता वा-तस्या एव पक्षविशेष्यतानिरूपितत्वात् । अत्र च संसर्गतायाः स्वपदेनोपादाने तन्निरूपित- ( हेतु ) प्रकारतायां स्वाऽनिरूपितत्वासत्वेन निरुक्तोभयसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन प्रकारतायाः संसर्गताविशिष्टत्वात् । प्रकारतोपादाने च तदवच्छिन्नविशेष्यतानिरूपित" प्रकारतायां स्वानिरूपितत्वसत्वेपि द्वितीयसंबन्धविरहादेव स्ववैशिष्ट्यसत्वाद्विषयतानामनुगमः । स्वावच्छिन्नविषयतानिरूपितत्व स्वनिरूपितत्वैतदन्यतरसंबन्धेन वा वैशिष्ट्यं बोध्यम् ।

अत्रकल्पे प्रकृतपक्षसाध्यकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणं यत्पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितविषयतानिरूपितविषयतानिरूपितविषयतानिरूपितविषयतात्वं तद्रूपविशिष्टविषयताशून्यबोधजनकन्यायावयवत्वं प्रतिज्ञात्वम् ।

अनुगमस्तु पक्षतावच्छेदकविशिष्टविषयताशून्यबोधजनकन्यायावयवत्वम् । वै० स्वावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नजनकतावच्छेदकतावच्छेदकतापर्याप्तिमद्विषयतात्ववत्व, स्वावच्छिन्नविशेष्यतानिरूपितविषयतानिरूपितविषयतानिरूपितविषयतानिरूपितत्वोभयसं । कल्पमाह पक्षतावच्छेदकावच्छिन्नेति । पर्याप्त्यधिकरणधर्मवत्वेनेत्यस्य अनुगमय्येत्यनेनान्वयः । तदभावस्येति । हेतुव्यापकताविशिष्टसाध्यविषयित्वाभा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तायाः पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुविषयतानिरूपिताऽऽधेयत्वविषयतानिरूपिताऽधिकरणविषयतानिरूपितत्ववत् व्यतिरेकिपरामर्शीयसाध्याभावव्यापकत्वावच्छिन्नहेत्वभावविषयताया अपि तादृशविशेष्यतानिरूपितसंसर्गीयविषयतानिरूपितहेतुविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितसाध्याभावव्यापकताविशिष्टहेत्वभावविषयतात्वस्यापि हेतुव्यापकताविशिष्टसाध्यविषयतात्ववन्निरुक्तविषयत्वे विशेषणविधया अनुमितिजनकतावच्छेदकतावच्छेदकतायाः पर्याप्त्यधिकरणत्वात् । यद्यपि यथा परम्परया पक्षविशेष्यतया अनिरूपितोदाहरणजन्यबोधीयविशिष्टसाध्यादिविषयता नानुमितिजन-

---

वस्य । साध्याभावव्यापकताविशिष्टहेत्वभावविषयित्वाभावस्येत्यर्थः । अनुपपत्त्यभावादिति । उक्ताव्याप्तेरभावादित्यर्थः ।

ननु संसर्गविषयतायाः पञ्चमविषयतामध्येऽनिवेशे व्यतिरेकपरामर्शीयसाध्याभावव्यापकहेत्वभावविषयतायाः पञ्चमीत्वानुपपत्तिः, तन्निवेशेऽन्वयपरामर्शीयहेतुव्यापकसाध्यविषयतायाः असंग्रह इत्यत आह । तथाहीति अन्वयपरामर्शीयेति । अन्वयपरामर्शश्च धूमव्यापकवन्हिसमानाधिकरणधूमवान् पर्वत इत्याकारकोऽनुमितिकारणम् । व्यतिरेकिपरामर्शीयेति । व्यतिरेकिपरामर्शश्च वन्ह्यभावव्यापकीभूताभावप्रतियोगिधूमवान्पर्वत इत्याकारकोऽनुमितिजनकः । साध्याभावव्यापकताविशिष्टहेत्वभावविषयतात्वस्यापीति । अस्य च पर्याप्त्यधिकरणत्वादित्यनेनान्वयः । हेतुव्यापकताविशिष्टसाध्यविषयतात्ववदिति । व्यतिरेकिपरामर्शीयपंचमविषयतायाश्चतुर्थविषयतानिरूपितत्वेऽन्वयपरामर्शीयविषयतानिरूपितत्वं दृष्टान्तः । निरुक्तविषयत्वे साध्याभावव्यापकताविशिष्टहेत्वभावविषयतायां । तथा च व्यतिरेकिपरामर्शस्थले धूमपर्वतयोर्यः संयोगस्तन्निष्ठाविषयतामन्तर्भाव्य पर्वतविषयतानिरूपितसंयोगविषयतानिरूपितधूमविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितसाध्याभावव्यापकहेत्वभावविषयता पंचमी । अन्वयपरामर्शस्थले तु संयोगविषयतामनन्तर्भाव्य पर्वतविषयतानिरूपितधूमविषयतानिरूपिताऽऽधेयत्वविषयतानिरूपिताऽधिकरणविषयतानिरूपितहेतुव्यापकताविशिष्टसाध्यविषयता पंचमी । तथा च विनिगमनाविरहेण पक्षविशेष्यतानिरूपितसांसर्गिकविषयतानिरूपितहेतुविषयतेत्यादिक्रमेण, पक्षविशेष्यतानिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नहेतुविषयतेत्यादिक्रमेण च कार्यकारणभावाद् द्वयोरपि पञ्चमीत्वोपपत्तिः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कतावच्छेदिका तथा तन्निरूपितव्यापकत्वादिविषयतापि न तथेति तदीयसाध्यादिविषयताविशेषणतया व्यापकत्वादिविषयतानिरूपितत्वस्यानुमितिजनकतावच्छेदकतावच्छेदकेप्रवेशो न सम्भवति जनकतावच्छेदकविषयतावृत्तेरेव धर्मस्य तादृशविषयताविशेषणतया

---

न च विशेषणविषयेति किमर्थम्, तादृशविषयतात्वं प्रकृतानुमितिजनकतावच्छेदकतापर्याप्तिमदित्यस्यैव सम्यक्त्वादिति वाच्यम्। तथा सति पक्षविषयतानिरूपितत्वसहितहेतुव्यापकसाध्यविषयतात्वस्यैव तादृशजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणतयोदाहरणेऽतिव्याप्तेर्दुर्व्वारत्वात्। अस्माकं तु चतुर्थविषयतानिरूपितत्वविशिष्टे (हेतुव्यापकसाध्यविषयत्वे) विशेषणतापन्नत्वलाभान्न दोषः। चतुर्थविषयता निरूपितत्व हेतुव्यापकताविशिष्टसाध्यविषयतात्वयोर्धर्मितावच्छेदकप्रकारभावन्नयोरेव भानात्।

उक्तरीत्याऽनुगमेपि उदाहरणेऽतिव्याप्तिमाशंकते। **यद्यपीति उदाहरणजन्यबोधीयेति।** उदाहरणजन्यबोधश्च धूमवान् धूमव्यापकवन्हिमानित्याकारकः। **नानुमितिजनकतावच्छेदिकेति।** धूमव्यापकवन्हिसमानाधिकरण धूमवान्पर्वत इत्येव जनकं ज्ञानं, तत्र परंपरया पक्षविषयतानिरूपिता या हेतुव्यापकत्वविशिष्टसाध्यविषयतामेव जनकतावच्छेदिका, अतो महानसं धूमवत् धूमव्यापकवन्हिमच्च महानसान्यद् धूमवद् धूमव्यापकवन्हिमच्चेत्युदाहरणधन्यबोधीया या विषयता सा नावच्छेदिका पक्षविषयत्वाऽनिरूपितत्वादिति भावः। **तन्निरूपितेति।** "पक्षविषयत्वाऽनिरूपित" साध्यविषयतानिरूपितेत्यर्थः। तथा च यथा परंपरया पक्षविषयत्वानिरूपितहेतुव्यापकताविशिष्टसाध्यविषयता न जनकतावच्छेदिका तथा "पक्षविषयत्वानिरूपित" साध्यविषयतानिरूपितव्यापकत्वविषयतापि न जनकतावच्छेदिकेति भावः। **तदीयेति।** धूमव्यापकोवन्हिरित्युदाहरणजन्यबोधीयेत्यर्थः। **तथा च।** तत्साधारण्याभावे च। **निरुक्तेति।** प्रकृतपक्षसाध्यकानुमितीत्यर्थः। **पर्याप्त्यधिकरणधर्मावच्छिन्नेति।** तादृशपर्याप्त्यधिकरणो यो धर्मः हेतुव्यापकसाध्यविषयतात्वं तदवच्छिन्नेत्यर्थ। **प्रतिबन्धकतेति।** साध्यं हेतुव्यापकमितिनिश्चयनिष्ठा प्रतिबन्धकतेत्यर्थः। **संग्रहोबोध्य इति।** तथा च प्रतिबन्धकतावच्छेदकविषयताशालित्वेनोदाहरणे नातिव्याप्तिरिति भावः। एवं च प्रकृतपक्षसाध्यानुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणं यत्पक्षमुख्यविशेष्यतानिरूपितविषयतानिरूपितविषयतानिरूपित विषयतानिरूपित विषयतात्वं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



जनकतावच्छेदकतावच्छेदकत्वसम्भवादिति निरुक्तपक्षविषयता पञ्चमविषयतांशे विशेषणतया अवच्छेदकताऽवच्छेदकत्वपर्याप्त्यधिकरणं यत्साधनादिव्यापकत्वविषयतानिरूपितत्वसहितं साध्यादिविषयतात्वं तन्नोदाहरणजन्यबोधीयसाध्यादिविषयतासाधारणं तथाचोदाहरणेतिव्याप्तिर्दुर्वारैव । तथापि निरुक्तजनकतावच्छेदकतावच्छेदकता पर्याप्त्यधिकरणधर्मावच्छिन्नविषयत्वावच्छिन्ना या प्रतिबन्धकता तदवच्छेकविषयतात्वेनोदाहरणजन्यबोधीयहेतुव्यापकसाध्यादिविषयतायाः सङ्ग्रहो बोध्यः । अनुमितिजनकतावच्छेदकपरामर्शीयसाध्यादिविषयतायाः हेतुव्यापकत्वादिविषयतानिरूपितसाध्यादिविषयतात्वेन साध्यं हेतुव्यापकं नवेत्यादिसंशयप्रतिबन्धकतावच्छेदकत्वात् तादृशप्रतिबंधकतायां तादृशरूपेणोदाहरणजन्यबोधीयसाध्यादिविषयताया अप्यवच्छेदकत्वात् ।

---

तदवच्छिन्नविषयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयताशून्यबोधजनक - न्यायावयवत्वं प्रतिज्ञात्वं फलितम् । उदाहरणजन्यबोधीयविषयतायाः संग्रहमेवप्रतिपादयति । अनुमितीति । तादृशप्रतिबन्धकतायामिति । तादृशसंशयीयप्रतिबंधकतायामित्यर्थः । तादृशरूपेणेति हेतुव्यापकत्वविषयतानिरूपितसाध्यविषयतात्वेनेत्यर्थः । न च तादृशपञ्चमविषयत्वावच्छिन्नत्वमेव प्रतिबन्धकतायां निवेश्यताम् किं तादृशधर्मवद्विषयत्वावछिन्नत्वेनेति वाच्यम् । तथासति मुख्यत्वसत्वेपि गोत्वाभावः प्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभाववान् गोत्वाभावादित्यादौ प्रतिज्ञायामव्याप्तिः । तत्र गोत्वाभावव्यापकतादृशसास्नाभावसमानाधिकरणगोत्वाभाववान् गोत्वाभाव इति परामर्शीयसास्नाभाववृत्तिपंचमविषयतानिष्ठा सास्नाभावः प्रमेयत्वव्यापकवाच्यत्ववान्नवेति संशयनिरूपितप्रतिबन्धकतावच्छेदकतापि भवतीति तादृशविषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधेऽसत्वादित्यतः प्रतिबन्धकतायां तादृशधर्मवद्विषयत्वावच्छिन्नत्वं निवेशितम् । तथा च तादृशोधर्मः गोत्वाभावव्यापकताविशिष्टतादृशसास्नाभावविषयतात्वं तद्वद्विषयत्वावच्छिन्ना या तादृशसास्नाभावो गोत्वाभावव्यापको नवेति संशयनिरूपितप्रतिबन्धकता तदवच्छेदकीभूतगोत्वाभावव्यापकताविशिष्ट तादृशसास्नाभावविषयता तच्छून्यत्वस्य प्रतिज्ञाजन्यबोधे सत्वान्नाव्याप्तिरिति भावः ।

प्रमेयत्वव्यापकवाच्यत्वसमानाधिकरणधर्मवान्पर्वतोवन्हिमान् धूमादित्यादौ प्रतिज्ञायामव्याप्तिः, धूमव्यापकवन्हिसमानाधिकरणधूमवान् तादृशपर्वत इति परामर्शीयपक्षतावच्छेदककोटिप्रविष्टपञ्चमविषयत्वांश विशेषणविषयाः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मुख्यविशेष्यतानिवेशाद् गोत्वाभावः प्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभाववान् गोत्वाभावादित्यत्र तादृशविशिष्टसाध्यकप्रकृतानुमितिजनकपरामर्शीय स्वात्मकपक्षविशेषणतापन्नगोत्वाभावविषयतानिरूपिताधेयत्वविषयतानिरूपिताधिकरणविषयतानिरूपितसास्नाभावविषयतानिरूपितवाच्यत्वविषयतांशे विशेषणविधया अवच्छेदकतावच्छेदकतायाः पर्याप्त्यधिकरणधर्मवत् प्रमेयत्वव्यापकवाच्यत्वविषयतावद्विषयतायाः प्रतिज्ञाजन्यबोधेसत्त्वेऽपि न क्षतिः। (जनकता च साध्यव्याप्यत्वावच्छिन्नधर्मिताकान्यपरामर्शीया ग्राह्या। तेन तद्धर्मिकपरामर्शमादायापि नोक्तप्रतिज्ञायामव्याप्तिः)। नच साध्याभावव्यापकहेत्वभावप्रतियोगिहेतुमानितिपरामर्शीयपक्षविशेष्यतानिरूपितहेतुविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिताभावविषयतानिरूपितव्यापकत्वविषयताया अपि निरुक्तविषयतात्वात् तादृशविषयत्वविशेषणतयाऽवच्छेदकीभूतं साध्याभावव्यापकविषयतात्वमपीति वह्न्यभावव्यापकप्रमेयत्ववान्पर्वतो वह्निमानित्यादिप्रतिज्ञायामव्याप्तिरिति वाच्यम्।

---

अनुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणं यत्प्रमेयत्वव्यापकवाच्यत्वविषयतात्वं तद्वद्विषयतायाः प्रतिज्ञाजन्यबोधे सत्वादिति पक्षतावच्छेदकावच्छिन्नत्वनिवेशः। तत्रापि पक्षतावच्छेदकनिष्ठावच्छेदकत्वमादाय तद्दोषतादवस्थ्यवारणाय पक्षविषयतानिरूपिताऽवच्छेदकत्वान्यविषयतालाभार्थं तन्निवेशः।

मुख्यत्वनिवेशप्रयोजनमाह। मुख्यविशेष्यतानिवेशादित्यादिना। परामर्शीयेति। गोत्वाभावव्यापकतादृशसास्नाभावसमानाधिकरणगोत्वाभाववान् गोत्वाभाव इति परामर्शनिरूपितेत्यर्थः। स्वं गोत्वाभावः। पक्षात्मकेत्यर्थः। अत्र गोत्वाभावरूप हेतुविषयतामादाय पञ्चमी ग्राह्या। तथा च हेतुभूतगोत्वाभावविषयतानिरूपितवृत्तित्वविषयतानिरूपिताधिकरणविषयतानिरूपितसास्नाभावविषयतानिरूपित "प्रमेयत्वव्यापक" वाच्यत्वविषयतात्वं अनुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्तिमत् तद्वद्विषयत्वावच्छिन्ना या "वाच्यत्वं प्रमेयत्वव्यापकं न वेति संशयनिरूपितप्रतिबन्धकता तदवच्छेदकविषयितायाः प्रतिज्ञाजन्यबोधे सत्वाद व्याप्तिरिति भावः। प्रमेयत्वव्यापकवाच्यत्वविषयताया इति। तथा च परामर्शीयायास्तस्याः प्रतिबन्धकतावच्छेदकत्ववत् प्रतिज्ञाजन्यबोधीयप्रमेयत्वव्यापकवाच्यत्वविषयताया अपि प्रतिबन्धकतावच्छेदकत्वमित्याशयः। न च

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



किञ्चिद्व्यापकत्वविशिष्टविषयतांशे विशेषणतयाऽवच्छेदकतावच्छेदत्वस्यैव निवेशनीयत्वात् ।

साध्यतावच्छेदकांशे एव हेतुव्यापकतावच्छेदकत्वावगाहिपरामर्शस्यैव जनकतया नाव्याप्तिरिति मुख्यत्वनिवेशोऽव्यर्थः । एकव्यक्तिसाध्यके भेदघटितव्यापकताभिप्रायेण तदुक्तेः । एवं लिंगविशेष्यकपरामर्शस्यापि हेतुत्वे मुख्यत्वनिवेशेप्यनिस्तारात्पक्षविशेष्यकपरामर्श एव हेतुरिति नव्यमतेनायमनुगमोऽबोध्यः । प्रमेयत्वव्यापकवाच्यत्ववत् सास्नाभावव्याप्यगोत्वाभाववान् गोत्वाभाव इति परामर्शीयगोत्वाभावरूपलिंगविषयताया उपादानेपि न क्षतिः । हेत्वंशे विशेषणीभूतव्याप्तेः प्रकारतावच्छेदकतया तद्विषयतायामवच्छेदकत्वान्यत्वाभावात् । विशेष्यतावच्छेदकताभिन्नत्वं वा निवेशनीयमित्याह । जनकता चेति । तेन । साध्यव्याप्यत्वावच्छिन्नधर्मिताकान्यत्वनिवेशनेन । तद्धर्मिकेति । साध्यव्याप्यत्वावच्छिन्नधर्मिकेत्यर्थः । उक्तप्रतिज्ञायां । गोत्वाभावः तादृशसास्नाभाववानित्यत्र । परन्तु पर्वत आलोकव्यापकवन्हिमान् धूमादित्यत्र प्रतिज्ञायामव्याप्तिः, धूमव्यापकतादृशवन्हिसमानाधिकरणधूमवान्पर्वत इतिपरामर्शीय पर्वतत्वावच्छिन्नमुख्यविशेष्यतेत्यादिक्रमेण या पञ्चमी आलोकव्यापकवन्हिविषयता तदंशे विशेषणविधया जनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणं यदालोकव्यापकवन्हिविषयतात्वं तद्वद्विशेष्यताशून्यत्वस्य प्रतिज्ञाजन्यबोधेऽसत्वादिति विभावनीयम् । व्यतिरेकपरामर्शे द्वितीयषियतापदेन संसर्गविषयताग्रहणे किं गमकमित्याशंकते । न चेति । व्यापकत्वविषयताया अपीति । अपिना तादृशव्यापकत्वविषयतानिरूपितहेत्वभावविषयतायाः समुच्चयः । निरुक्तविषयतात्वादिति । पक्षमुख्यविशेष्यतानिरूपितविषयतानिरूपितविषयतानिरूपितविषयतानिरूपितविषयतात्वादित्यर्थः । तादृशविशेषणतयाऽवच्छेदकीभूतं । तादृशव्यापकत्वविषयत्वांशे विशेषणतयावच्छेदकीभूतं । साध्याभावव्यापकविषयतात्वमपीति । अपिना साध्याभावव्यापकहेत्वभावविषयतात्वस्य समुच्चयः । अव्याप्तिरिति । वन्ह्यभावव्यापकाभावप्रतियोगिधूमवान् तादृशपर्वत इति परामर्शीयपर्वतविशेष्यतानिरूपितधूमविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिताभावविषयतानिरूपितव्यापकत्वविषयत्वांशे विशेषणविधयाऽवच्छेदकीभूतं यत्तादृशव्यापकत्वविषयतात्वं तद्वद्विषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधेऽसत्वादिति भावः । किंचिद्व्यापकत्वेविशिष्टविषयतांशे इति । किंचिद्व्यापकत्वविषयतानिरूपितविषयतांशे इत्यर्थः । एवं च हेतुपक्षयोः संसर्गविषयतामन्तर्भाव्यैव पञ्चमीति नाव्याप्तिः । ननु पक्षमुख्यविशेष्यतामारभ्य

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तथा च प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं यद्व्याप्तिविषयकत्वं तच्छून्यत्वमर्थः ।

तच्च हेतौ साध्यव्याप्यत्वावगाहित्वं, हेतुभूताभावप्रतियोगितावच्छेदकावच्छिन्ने साध्याभावव्यापकत्वावगाहित्वञ्च : द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयं द्रव्यत्ववान् गुणात् । गुणव्याप्यरूपवानयं स्पर्शवान् रूपादित्यादौ प्रतिज्ञासङ्ग्रहायावच्छेदकद्वयोपादानम् ।

व्यतिरेकिपरामर्शीयपक्षविषयतपाञ्चमव्यापकत्वविषयताश्चातथात्वात् । वस्तुतस्तु चतुर्थविषयतायां अभावनिष्ठप्रकारताभिन्नत्वस्य निवेशनीयत्वान्न कोऽपि दोषः । अन्वयव्यतिरेकव्याप्तिघटकव्यापकताद्वयविषयताया विशिष्टाभावद्वयनिवेशपरो नायं ग्रन्थः, तथाच सति प्रकृतहेतुतावच्छेदकेत्यनुगतशब्देनोभयोत्कीर्तनवैयर्थ्यापातात् । विशिष्यापि तदुभयावगाहित्वस्य तच्चेत्यादिना दर्शनीयतया प्रथमत एव विशिष्य तदुभयानवगाहित्वार्थकत्वोपवर्णनानौचित्यात् । तच्चेति—तादृशगमकत्वौपयिकविषयत्वं चेत्यर्थः । हेताविति । हेतुव्यापकताविशिष्टसाध्यविषयकत्वमित्यर्थः । अतो नोक्तानुगमविरोधः । हेतूभूताभावप्रतियोगितावच्छेदकेति । तादृशप्रतियोगितावच्छेदकञ्च धूमादिमात्रहेतुकस्थले धूमाभावत्वादिकं वह्न्यभावादिहेतुकस्थले च वह्नित्वादिकं । एतदसङ्ग्रहभयेनैव हेत्वभावत्वावच्छिन्न इति नोक्तम । तथासति अयं निर्धूमो निर्वह्नित्वादित्यादौ

---

चतुर्थी या विषयता तदंशे विशेषणविधया जनकतावच्छेदकतावच्छेदकता पर्याप्त्यधिकरणत्वेन धर्मोनुगमनीयः, स च हेतुव्यापकसाध्यवद्विषयतात्वं—साध्याभावव्यापकहेत्वभावविषयतात्वं चेत्युदाहरणस्यापि वारणम्, एवं च किंचिद्व्यापकत्वविशिष्टनिरूपितत्वमपि न देयमिति चेन्न । एवं सति योयो धूमवान् स स वन्हिमानित्युदाहरणे धूमवान् धूमव्यापकवन्हिमानिति बोधस्य प्राचांमते सिद्धतया तद्वारणेपि यत्र धूमस्तत्र वन्हिरित्युदाहरणे धूमव्यापकोवन्हिर्महानसादौ इति बोधस्य तादृशविषयताशून्यस्य जनकेऽतिव्याप्तिः । लाघवादाह । वस्तुतस्त्विति । निवेशनीयत्वादिति । न चाऽभावोऽभावत्ववान्पटाभावत्वादित्यत्रपटाभावत्वव्यापकाभावत्वसमानाधिकरणपटाभावत्ववानभाव इत्यन्वयपरामर्शीयाऽधिकरणनिष्ठचतुर्थविषताया अभावमात्रनिष्ठत्वेनाऽव्याप्तिरिति वाच्यम् । अभावत्वानवच्छिन्नत्वस्य विषयतायां निवेशनीयत्वात् । न चैवं मुख्यत्वदलं व्यर्थम्,

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यत्र धूमस्तत्र वह्निर्धूमव्यापकवन्ह्यभाववांश्चायमित्याद्याकारकयोरेवोदाहरणोपनययोः प्रयोगाद्वन्हित्वाद्यवच्छिन्न एव साध्याभावव्यापकतायास्ततः प्रतीतिर्न तु वन्ह्यभावाद्यभावत्वाद्यवच्छिन्न इति तत्रातिव्याप्त्यभावाप्रतिपादनेन न्यूनतापत्तेः, हेतुतावच्छेदकसाध्यतावच्छेदकनिवेशनप्रयोजनमाह द्रव्यत्वेति। प्रतिज्ञासंग्रहायेति। प्रथमोपदर्शितप्रतिज्ञाविषयसंयोगत्वावच्छिन्ननिरूपितव्यापकताया अपि संयोगत्वेन गुणहेतुकद्रव्यत्वत्वाद्यवच्छिन्नानुमितेर्द्वितीयप्रतिज्ञाविषयगुणत्वाद्यवच्छिन्नव्यापकताया गुणत्वेन स्पर्शसाध्यकरूपत्वावच्छिन्नहेतुकानुमितेः प्रयोजकतयाऽवच्छेदकद्वयानुपादाने तत्र तत्राव्याप्तेरिति भावः।

---

सास्नाभावनिष्ठचतुर्थविषयताया अभावत्वावच्छिन्नत्वादिति वाच्यम्। एवमपि प्रमेयत्वव्यापकवाच्यत्ववद् ज्ञेयत्वसाध्यकस्थले निरुक्तरीत्याऽव्याप्तेस्तत्सार्थक्यात्। सास्नाभावसाध्यकस्थले प्रयोजनदर्शनं च प्रथमकल्पाभिप्रायेण। अतथात्वात्। अभावनिष्ठप्रकारताभिन्नत्वाभावात्। पञ्चमविषयतायाएवेति। एवकारेण चतुर्थविषयताव्यवच्छेदः।

तादृशेति। प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकप्रकृतसाध्यतावच्छेदकवच्छिन्नसाध्यकानुमितीत्यर्थः। तथा च तादृशानुमितिजनकतावच्छेदकविषयत्वं चेति समुदितार्थः। यथाश्रुतार्थपरित्यागे बीजमाह। अतः। एतादृशार्थकरणादित्यर्थः। दीधितौ हेतुभूतेति। हेतुभूतो योऽभावः "हेत्वभावाभावः" तत्प्रतियोगितावच्छेदकं यद्धेत्वभावत्वादि तदवच्छिन्नेइत्यर्थः एतदसंग्रहभयेनैवेति। वन्ह्यभावहेतुकस्थलाऽसंग्रहभयेनैवेत्यर्थः। तथासति। हेत्वभावत्वावच्छिन्ने इत्युक्तौ च। इत्याकारकयोरेवेति। एवकारेण यत्र धूमाभावाभावः तत्र वन्ह्यभावाभावः—एवं धूमाभावाभावव्यापकवन्ह्यभावाभावाभाववांश्चायमित्युदाहरणोपनययोर्व्यवच्छेदः वन्हित्वावच्छिन्नेएवेति। एवकारव्यवच्छेद्यं स्पष्टयति। नत्विति। तत्रातिव्याप्त्यभावाप्रतिपादनेनेति। धूमाभाववान् वन्ह्यभावादित्यादौ यत्र धूमस्तत्र वन्हिरित्युदाहरणेऽतिव्याप्त्यकथनेनेत्यर्थं। न्यूनतापत्तेरिति। अन्यथा वन्ह्यभावाभावत्वावच्छिन्ने धूमव्यापकतानवगाहित्वेनाऽतिव्याप्त्यापत्तेरिति भावः, इदमुपलक्षणम्। साध्याभावोपि साध्यीभूताभावप्रतियोगितावच्छेदकावच्छिन्नत्वेनोपादेयः। तेन धमाभावाभावत्वेन साध्याभावाप्रवेशेपि नोक्तस्थलीयोदाहरणेऽतिव्याप्तिः।

संयोगत्वावच्छिन्ननिरूपितव्यापकताया अपीति। अपिना गुणत्वावच्छिन्ननिरूपितव्यापकतायाः संग्रहः। द्रव्यत्वत्वावच्छिन्नानुमितेरिति।



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अस्य प्रयोजकतया इत्यनेनाऽन्वयः । हेतुतावच्छेदकावच्छिन्नहेतुकत्वानुपादाने तु हेतुतावच्छेदकीभूतं यद्गुणत्वं तदवच्छिन्ने द्रव्यत्वव्याप्यत्वलाभान्नाव्याप्तिरितिभावः । अत्र द्रव्यत्वव्याप्यसंयोगवानित्युक्तौ संशयाद्यसंभवात्संयोगवद्वृत्तीत्युक्तम् । साध्यतावच्छेदकनिवेशनप्रयोजनमाह । द्वितीयेति । **गुणत्वावच्छिन्नव्यापकताया** इति । रूपत्वावच्छिन्ननिरूपिताया इत्यादिः । **अवच्छेदकद्वयानुपादाने** । हेतुतावच्छेदक-साध्यतावच्छेदकाप्रवेशे । तत्र तत्र । **क्रमेणोक्तप्रतिज्ञाद्वये** । **अव्याप्तेरिति** । साध्यतावच्छेदकनिवेशे तु अत्र स्पर्शत्वावच्छिन्नं यत्प्रकृतसाध्यं तद्व्याप्यत्वलाभान्नाव्याप्तिरिति भावः ।

इदन्तु बोध्यम् । उक्तस्थलद्वयेऽव्याप्त्यभिधानं च प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं यद्व्याप्तिविषयकत्वं तच्छून्यमिति कल्पाभिप्रायेण । अथ पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतेत्याद्यनुगमस्य भट्टाचार्योक्तस्य दीधितिकृदभिप्रेतत्वे एतद्दीधित्यसंगतिः । प्रथमे द्रव्यत्वव्याप्यगुणवान् "गुणव्यापकद्रव्यत्वसमानाधिकरणगुणवान्" द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवान् अयमिति परामर्शीयजनकतायामवच्छेदकीभूता पञ्चमी विषयता गुणत्वावच्छिन्ननिरूपितव्यापकत्वविशिष्टद्रव्यत्वविषयतैव न तु संयोगत्वावच्छिन्ननिरूपितव्यापकत्वविशिष्टद्रव्यत्वविषयता तच्छून्यत्वं च प्रतिज्ञाजन्यबोधस्येति हेतुतावच्छेदकपदं व्यर्थम्, एवं द्वितीये स्पर्शव्याप्यरूपवान् "रूपव्यापकस्पर्शसमानाधिकरणरूपवान्" गुणव्याप्यरूपवानयमिति परामर्शीयजनकतायामवच्छेदकीभूता रूपव्यापकता वशिष्टस्पर्शत्वावच्छिन्नविषयतैव, न तु रूपव्यापकताविशिष्टगुणत्वावच्छिन्नविषयतेति साध्यतावच्छेदकपदमपि व्यर्थम् । न च संयोगत्वावच्छिन्नहेतुकायाः गुणत्वावच्छिन्नहेतुकायाश्च द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयं द्रव्यत्ववानित्यनुमितेरेकाकारतया तादृशा नुमितिजनकसंयोगत्वावच्छिन्न (गुण) प्रकारकपरामर्शीयपञ्चमविषयतामादायाव्याप्तिवारणाय हेतुतावच्छेदकपदम् । तथा गुणत्वावच्छिन्नप्रकारकपरामर्शीयपञ्चमीविषयतामादाय नाव्याप्तिरिति वाच्यम् । संयोगत्वावच्छिन्नहेतुकतादृशानुमित्यप्रसिद्धेर्द्रव्यत्वव्याप्यसंयोगवद्वृतिधर्मवानयंद्रव्यत्ववानयं द्रव्यत्ववान् संयोगादित्यादिन्यायप्रयोगाभावात् । अत एव दीधितिकृता वन्हिव्याप्यधूमवान्पर्वतोवन्हिमानित्यादिर्न न्यायप्रयोग इत्युक्तम् । अत्रोच्यते न्यायप्रयोगाऽसंभवेन परार्थानुमित्यप्रसिद्धया तादृशानुमितिजनकपरामर्शीयनिरुक्तपञ्चमविषयताया अप्रसिद्धत्वेन तच्छून्यबोधजनकत्वस्य प्रतिज्ञालक्षणस्योक्त

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अन्यूनानतिरिक्तपदमिति च मूलमुद्देश्यानुमित्यन्यूनानतिरिक्तविषयभागपरम् । हेतुत्वमभिधेयं प्रमेयत्वादित्यादौ पंचम्यर्थपक्षकहेतुवारणाय पञ्चम्यन्तान्यत्वस्य हेत्वन्यत्वस्य वा ऽवश्यं वाच्यत्वात् ।

नन्वेवं लिङ्गत्वाविषयकत्वविशेषणेनैवोदाहरणस्यापि वारणे पूर्वोक्तानुमितिसमानविषयकत्वविशेषणस्य व्यावृत्तिर्न संगच्छते इति सत्यन्तोत्तरविषयान्तभागत्यागस्यैवावश्यकत्वेनान्यूनानतिरिक्तपदमात्रपरित्यागपरमूलविरोध इत्यालोच्य तादृशमूलस्य च तथाविधसमुदायपरित्यागपरत्वमेवाह । अन्यूनेति । नन्वेतत्कल्पे हेतुवारणायैव पक्षविशेष्यकत्वपर्यवसितं तादृशविशेषणोपादानमावश्यकं तज्जन्यबोधस्य व्यापकत्वाविषयकत्वेन लिङ्गत्वाविषयकत्वदानेनाऽवारणादितिकथं समुदायपरित्याग इत्यत आह । हेतुत्वमिति । पञ्चम्यर्थपक्षक इति । तथा च पक्षमुख्यविशेष्यकत्वमपि तादृशहेतुजन्यबोधे अक्षतमिति न तेन तद्वारणसंभव इति भावः । पञ्चम्यन्तान्यत्वस्य निवेशे घटोदण्डात्पटोनदण्डादित्यादिप्रतिज्ञाया असंग्रहमालोच्य कल्पान्तरमाह । हेत्वन्येति । अवश्यं वाच्यत्वादिति । तथा च अत एव सकलहेतुवारणे समुदायदलपरित्यागो न क्षतिमावहतीति भावः ।

---

प्रतिज्ञायामव्याप्तेस्तदुपादानम् । तथा चाऽनुमित्यप्रसिद्धावपि गुणत्वावच्छिन्नहेतुकतादृशपरामर्शानुमितिप्रसिद्ध्या तामादायैव लक्षणगमनान्नाव्याप्तिः ।

एवं । लिङ्गत्वस्य व्याप्त्यर्थकत्वे । पूर्वोक्तेति । उद्देश्यानुमितिविषयकत्वार्थकेत्यर्थः । व्यावृत्तिर्नसंगच्छते । इति । उदाहरणस्य लिङ्गत्वाविषयकशाब्दबोधजनकत्वाभावादिति भावः । सत्यन्तोत्तरविषयान्तेति । उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकान्तेत्यर्थः । तादृशमूलस्य चेति । अन्यूनानतिरिक्तपदं विहायेतिमूलस्य चेत्यर्थः । तथाविधसमुदायेति । उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकसमुदायेत्यर्थः । दीधितौ–अन्यूनाऽनतिरिक्तेति च मूलमिति । अन्यूनानतिरिक्तपदं विहायेत्यत्रेत्यादिः । तेन जनकत्वे सतीत्यस्य न परित्यागः । तथा च न्यायावयवत्वे सति लिंगत्वाविषयकबोधजनकवाक्यत्वं लक्षणम् । एतत्कल्पे । लिंगत्वविषयकत्वघटितलक्षणे । तादृशेति । अनुमितिसमानविषयकेत्यर्थः । तज्जन्यबोधस्य । हेतुजन्यबोधस्य । हेतुत्वं धूमीयमित्याकारकस्य । तादृशेति । प्रमेयत्वादितीत्यर्थः । हेतुजन्यबोधे । हेतुत्वं प्रमेयत्वीयमित्याकारके । तेन । पक्षमुख्यविशेष्यकत्वनिवेशेन । तद्वारणसंभवइति । पञ्चम्यर्थपक्षकहेतुवारणसंभवः इत्यर्थः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यत्वेनैवाऽन्वयात्। प्रातिपदिकार्थयोः क्रियाप्रातिपदिकार्थयोश्च साक्षाद्भेदेनाऽन्वयस्याऽव्युत्पत्तेर्वक्ष्यमाणत्वात्।

ननु ज्ञापकत्वं पञ्चम्यर्थः, स च प्रकृत्यर्थस्य विशेषणतयैव भासते न तु विशेष्यतया तथा च कथं पञ्चम्यर्थपक्षक न्यायान्तर्गतहेतोः पक्षमुख्यविशेष्यकबोधजनकत्वमत आह। संख्येति। विभक्त्यर्थस्यैकत्वादेः प्रकृत्यर्थे विशेषणतया बोध आनुभविकः, तस्य विशेष्यत्वे घटमित्यादितः एकत्वं कर्मत्वं च घटीयमित्याकारकस्य सर्वानुभवविरुद्धसमूहालंबनबोधस्यापत्तेरतः संख्यातिरिक्तेति सुबर्थविशेषणम्। लिङर्थस्येष्टसाधनत्वादेः प्रकृत्यर्थे विशेषणतया भानात् प्रत्ययार्थसामान्योपेक्षा। विशेष्यत्वेनैवेत्यत्र युक्तिमाह। प्रातिपदिकार्थयोरिति। समानविभक्तिकनामार्थयोः क्रियाविशेषणीभूतद्वितीयान्तनामार्थधात्वर्थयोश्चाऽभेदेनान्वयबोधोत्पत्त्या भेदेनेति। तयोरपि विभक्त्यर्थमन्तराकृत्य परंपरया भेदान्वयबोधात्साक्षादिति। अव्युत्पत्तेर्वक्ष्यमाणत्वादिति।

---

घटो दण्डादितिप्रतिज्ञानुपगमे त्वाह। हेत्वन्यस्येति। तथा च। हेत्वन्यत्वविशेषणे च। अतएव। हेत्वन्यत्वाभावादेव। उक्तसमुदायदलेति। उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकेत्यर्थः। दीधितौ–संख्यातिरिक्तसुबर्थस्येति। संख्यातिरिक्तप्रत्ययार्थस्येत्युक्तौ तु आह। लिङर्थस्येति। स्वर्गकामोयजेतेइत्यादौ लिङर्थोविधिः स च इष्टसाधनत्वम् तस्य च प्रकृतिभूतधात्वर्थे भानम्। याग इष्टसाधनमिति बोधः। प्रातिपदिकार्थयोरिति। निपातातिरिक्तसमानविभक्तिकेत्यादिः साक्षाद्भेदेनेति। तादात्म्यातिरिक्तसंबन्धेनेत्यर्थः। निपातातिरिक्तत्वविशेषणाद् घटःपटोनेत्यत्र नञर्थभेदे पटस्य तादात्म्यातिरिक्तप्रतियोगितासंबन्धेनाऽन्वयेपि नान्वयव्यभिचारः। एव मुक्तस्थले एव नञर्थभेदस्य स्वरूपेण घटेऽन्वयेपि न क्षतिः। भेदेनेत्यस्य फलमाह। समानविभक्तिकनामार्थयोरिति। नीलोघट इत्यादौ नीलघटाद्योरित्यर्थः। अस्याऽभेदेनाऽन्वयबोधोत्पत्त्या इत्येनेनाऽन्वयः। क्रियाविशेषणीभूतद्वितीयान्तनामार्थधात्वर्थयोरिति। स्तोकं पचतीत्यादौ स्तोकपाकाद्योरित्यर्थः। तयोरपि। नामार्थधात्वर्थयोरपि। विभक्त्यर्थमन्तराकृत्य। राज्ञः पुरुष इत्यादौ ङस्विभक्त्यर्थसंबन्धं द्वारीकृत्य भेदान्वयबोधात्, राज्ञोनिरूपितत्वसंबन्धेन षष्ठ्यर्थसंबन्धे स्वत्वे तस्य च स्वरूपसंबन्धेन पुरुषेन्वयादित्यर्थः। तथा च निरूपितत्वसंबन्धेन राजविशिष्ट स्वत्ववान्पुरुष इति बोधः। एवं तण्डुलं पचतीत्यादावपि वोध्यम्। तथा च विशेष्यतासंबन्धेन

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भूतलं घटइत्यादौ आधाराधेयभावादिसंबन्धेन घटभूतलाद्योः, तण्डुलः-पचतीत्यादौ च क्रियाकर्मादिभावेन तण्डुलपाकाद्योरन्वयबोधानुदयादिति भावः ।

तथा च संख्यातिरिक्तसुबर्थस्य प्रातिपदिकार्थविशेषणत्वे विभक्त्यर्थस्याऽन्ततऽभानेन प्रातिपदिकार्थस्य भूतलतण्डुलादेः घटपाकादौ आधाराधेयत्वकर्मत्वादिसंबन्धेन साक्षादेवाऽन्वयबोधस्य भूतले घटः-तण्डुलं पचतीत्यादितः स्वीकरणीयतया तादृशव्युत्पत्तिविरोध इत्याशयः ।

---

निपातातिरिक्तनामार्थप्रकारताकशाब्दबोधं प्रति विशेष्यतासंबन्धेन निपातातिरिक्तनामपदजन्योपस्थितिः कारणमिति भावः । दीधितौ—अव्युत्पत्तेर्वक्ष्यमाणत्वादिति बोधाभावस्य वक्ष्यमाणत्वादित्यर्थः । भेदेनान्वयबोधाभावमाह । भूतलंघटइत्यादाविति । आदिना राजा पुरुष इत्यादेः परिग्रहः । अस्याऽन्वयबोधानुदयादित्यनेनाऽन्वयः । तथाचाऽऽधेयतासंबन्धेन आधारतावद्भूतलविशिष्टोघट इति बोधाभावादिति भावः । एवं स्वत्वसंबन्धेन राजविशिष्टः पुरुष इत्यपि बोध्यम् । आधारतासंबन्धेन घटविशिष्टं भूतलमित्यपि बोध्यम् । प्रातिपदिकार्थे प्रातिपदिकार्थस्य तादात्म्यातिरिक्तसंबन्धेनान्वये आपत्तिमुक्त्वा प्रातिपदिकार्थे धात्वर्थस्य तेन संबन्धेनान्वये आपत्तिमाह । तण्डुलः पचतीत्यादौ चेति । तण्डुलपाकाद्योरिति । कर्मत्वसंबन्धेन तण्डुले पाकस्येत्यर्थः, एवं कर्मकत्वसंबन्धेन धात्वर्थे पाके प्रातिपदिकार्थस्य तण्डुलस्येत्यपि बोध्यं । अन्वयबोधाभावादिति तथा च तदापत्तिभिया प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन सममेव भेदेनान्वयबोधो जायते इति स्वीकार्यम् । एवं च विशेष्यतासंबन्धेन नामार्थनिष्ठभेदसंबन्धावच्छिन्नप्रकारताकशाब्दबोधं प्रति विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभाव आवश्यकः । तथा च तण्डुलः पचतीत्यत्र स्वकर्मकत्वसंबन्धेन धात्वर्थपाके न तण्डुलान्वयः, तत्र पाके विशेष्यतया प्रत्ययजन्योपस्थितेरभावात् । न च तण्डुलगतकर्मत्वस्यानुक्तत्वात्तण्डुलपदाद् द्वितीयाया अनुशासनादयं प्रयोगो न युक्त इति वाच्यम् । प्रातिपदिकार्थे प्रति कर्मत्वस्य विशेष्यतयाऽन्वयबोधतात्पर्ये एव "कर्मणिद्वितीये" त्यादिना प्रातिपदिकाद्द्वितीयादेरनुशासनात् । प्रकृते च कर्मत्वस्य संसर्गतया भाने तात्पर्यात् । तथा च भूतलं घटः-तण्डुलं पचतीत्यादौ आधेयतासंबन्धेन आधारतावद्भूतलविशिष्टोघटः एवं कर्मकत्वसंबन्धेन कर्मत्ववत्तण्डुलविशिष्टपाकानुकूलकृतिमानिति बोधविरहे च । तादृशव्युत्पत्तिविरोध इति । तादृशेति । निपातातिरिक्तनामार्थयोः क्रियातादृशनामार्थयोश्च

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न च भूतले घटइत्यादौ घटाधिकरणं भूतलमित्याद्याकारक एवान्वयबोध उपेयते नात उपदर्शित व्युत्पत्तिविरोध इति वाच्यम्। तथा सति शाब्दबोधे अनुभवसिद्धस्य प्रथमान्तार्थमुख्य विशेष्यकत्वस्य भङ्गप्रसंगात्।

ननु विभक्त्यर्थः संसर्गतयैव भासते न तु विशेष्यतया घटादौ आधेयत्वादिसंबन्धेन भूतलादिप्रकारकबोधे च सप्तम्यादि विभक्त्यन्त भूतलादिवाचकपदसमभिव्याहारस्य नियामकत्वान्नोक्तातिप्रसंगः। न चैवं भूतले-धूमादित्यादिभागमात्रस्याननुभावकत्वप्रसंगः। इष्टत्वात्।

---

भेदेनान्वयस्याव्युत्पन्नत्वादितीत्यर्थः। एवं च प्रकृते हेतुत्वमभिधेयं प्रमेयत्वादित्यत्र हेतावतिव्याप्तिः, पत्तमुख्यविशेष्यकबोधजनकत्वादतोहेत्वन्यत्वविशेषणमावश्यकम्, तथा च समुदायदलपरित्यागो युक्त एवेति ध्येयम्।

सप्तम्यर्थोऽधिकरणत्वमेव तत्र घटान्वयः, घटान्विताधिकरणत्वस्य भूतले इति प्रत्ययार्थाधिकरणत्वस्य विशेषणतया "भेदेन" अन्वयस्वीकारेऽपि न व्युत्पत्तिविरोध इत्याशंकते। नचेति तथा सति। भूतलस्य विशेष्यत्वे सति।

भूतले घट इत्यादौ आधेयतासंबन्धेनैव घटादौ भूतलाद्यन्वयबोधः स्वीक्रियते। न च विशेष्यतासंबन्धेन नामार्थप्रकारकभेदान्वयबोधं प्रति विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितिः कारणमिति व्युत्पत्तिविरोध इति वाच्यम्। उक्तव्युत्पत्तेर्निर्युक्तिकत्वात्। एवं च नीलोघट इत्यादौ विशेषणवाचकपदसमभिव्याहृतविभक्तेरिव सर्वविभक्तीनां साधुत्वमात्रार्थकत्वस्यैवोचितत्वादित्याशंकते। नन्विति संसर्गतयैवेति—एवकारव्यवच्छेद्यमाह। नत्विति। ननु भूतलं घटइत्यादिवाक्यात्कथं न तादृशो बोध इत्यत आह। घटादाविति। नोक्तातिप्रसंग इति। न भूतलं घट इत्यादिवाक्याद् भूतलवान् घट इति बोधप्रसंगः, आधेयतासंबन्धेन भूतलप्रकारकघटविशेष्यकशाब्दबोधे सप्तम्यन्तभूतलपदसमभिव्याहृतघटपदज्ञानस्यैव हेतुत्वादिति भावः। एवं। विभक्तेः साधुत्वमात्रार्थकत्वे।

प्रकृत्यर्थे विशेषणतयैव विभक्त्यर्थो भासते। तथा च भूतले इत्यादिभागमात्रादपि अधिकरणतावद् भूतलमिति बोधः। एवं धूमादित्यादौ ज्ञापकतावान् धूमइत्याकारको बोधः। भूतले घटः—धूमाद्वह्निमानित्यादिपदान्तरसमभिव्याहारस्थले अधिकरणत्व—ज्ञापकत्व विशिष्टधूमादेस्तुल्यवित्तिवेद्याऽऽधेयत्वज्ञाप्यत्वादिसंबन्धेन घटवन्ह्यादौ अन्वयबोधः। तथा च निपातातिरिक्तनामार्थयोः क्रियातादृशनामार्थयोश्च तुल्यवित्तिवेद्यसंबन्धातिरिक्तभेदसंवन्धेन साक्षान्ना-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चैत्रस्येदं न मैत्रस्य, मैत्रस्येदं न चैत्रस्य, द्वयोरिदं नेदमेकस्यापीत्यादौ चैत्रादिसंबन्धाभावबोधस्य विभक्त्यर्थविशेष्यतां विनाऽनुपपत्तेः ।

अस्तु वा विभक्त्यर्थाधिकरणत्व ज्ञापकत्वादिविशेषितस्यैव प्रकृत्यर्थस्य तुल्यवित्तिवेद्याऽऽधेयत्वज्ञाप्यत्वादिसम्बन्धेनान्वयः इत्यतोऽविभक्त्यर्थस्याविशेष्यत्वे नेदं मैत्रस्येत्यादौ मैत्रादिविशेषितस्वत्वादिरूपस्याभावप्रतियोगिनोऽवान्तरवाक्यादनुपस्थितया नञर्थान्वयबोधानुपपत्तिमाह । चैत्रस्येदमित्यादि । मैत्रादेरभावो नञा बोध्यत न तु स्वत्वस्येत्याशंकां निराचिकीर्षुणा तदुपगमे चैत्रीयधनेपि संयोगसमवायादिना चैत्राद्यभावसत्वाद्यत्र चैत्रस्येदमिति व्यवहारस्तत्र न चैत्रस्येत्यपि व्यवहारः स्यादिति सूचयितुं चैत्रस्येत्युक्तम् । ननु चैत्रप्रतियोगिकाभावबोधने प्रथमान्तचैत्रपदसमभिव्याहार एव नियासक इत्यतआह । मैत्रस्येदमित्यादि । न च स्वत्वादिसम्बन्धेनैव प्रकृत्यर्थस्याभावोदशितस्थले नञा बोध्यते, तथा च नोक्तातिप्रसंग इति वाच्यम् । वृत्यनियामकतया स्वत्वादेरभावप्रतियोगितावच्छेदकसम्बन्धत्वाभावात् नामार्थप्रतियोगिकस्याभावस्यानुयोगिनि सप्तमीं बिना नञा बोधयितुमशक्यत्वाच्च ।

वृत्यनियामकसंबन्धस्याऽभावप्रतियोगितावच्छेदकत्वोपगमेपि स्वत्वादिसंबन्धावच्छिन्नाभावस्य षष्ठ्याद्यन्तसमभिव्याहृतनञा बोधने अनुयोगिनि सप्तम्या अनपेक्षणेपि द्वयोरिदं नेदमेकस्येत्यादावगतेश्च । तथाहि—स्वत्वस्य विशेष्यत्वे स्वनिरूपकनिष्ठभेदाप्रतियोगिनिरूपितं यत्स्वत्वं तदभावो धननिष्ठस्तत्र प्रतीयते, अप्रतियोग्यन्तमेकपदार्थः,

---

न्वय इतिव्युत्पत्तिरित्याशयेनाक्षिपति । अस्तुवेति । अभावप्रतियोगिन इति । अस्याग्रे नञर्थान्वयानुपपत्तौ अन्वयः । तदुपगमे मैत्रादेरभावोपगमे नियामक इति । एवं च संयोगादिना चैत्रात्यन्ताभावस्य चैत्रीयधने सत्वेपि नेदं चैत्रस्येति न प्रयोग इति भावः । दीधितौ-मैत्रस्येदमित्यादि । तथाचोक्तस्थले एव चैत्रात्यन्ताभावबोधस्वीकारे प्रथमान्तत्वव्युत्पत्तौ व्यभिचार इत्यवश्यं चैत्रस्वत्वाभाव एव बोधनीयः, अन्यथोक्तातिप्रसंगादिति । स्वत्वादिसंबन्धेनैवेति । एव कारेण संयोगसमवायादिव्यावृत्तिः । तथा च स्वत्वादिसंबन्धेन प्रकृत्यर्थाभाव बोधने च । नोक्तातिप्रसंग इति । यत्र चैत्रस्येदमिति व्यवहारः न तत्र नेदं चैत्रस्येति व्यवहार इत्यर्थः । स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकचैत्राभावविरहादिति भावः । स्वत्वस्य षष्ठ्यर्थत्वे द्वयोरिदं नैकस्येत्यादौ बोधमुपपादयति । तथाहीति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सर्वत्र समभिव्याहृतपदार्थसंसर्गिनिष्ठभेदाप्रतियोगित्वरूपसजातीयद्वितीयरहितत्वस्यैकपदार्थत्वात्, स्वत्वं षष्ठ्यर्थः, तथाविधं चैकमात्रनिरूपितं स्वत्वं, नतूभयनिरूपितं, तन्निरूपकस्यैकपुरुषस्य तन्निरूपकपुरुषान्तरनिष्ठभेदप्रतियोगितया तथाविधभेदाऽप्रतियोग्यप्रसिद्धेरिति तादृशस्वत्वाभाव उभयधनेऽबाधितः। स्वत्वसंबधेन एकपदार्थस्याभावो यदि नञा बोध्यते तदा तु स्वस्वामिनिष्ठभेदाप्रतियोगी एकपदार्थो वाच्यः, तत्र यदि स्वमभावस्यानुयोगिधनं तदाऽप्रसिद्धिः, प्रमेयमात्रस्यैवोभयस्वामिकं यद्धनं तत्स्वामिनिष्ठभेदप्रतियोगित्वात्, यदि धनान्तरमेकमात्रनिरूपितस्वत्ववत् तदा तस्य समभिव्याहृतपदार्थत्वाभावादेकपदस्य तादृशार्थसंबन्धिनिष्ठभेदाप्रतियोगिव्युत्पत्तिभंगः। एकमात्रस्वत्ववद्धनान्तरस्वामिचैत्रमैत्रोभयधने नेदमेकस्येति व्यवहारानुपपत्तिश्च। एतदभिप्रायेणैव द्वयोरिदमित्याद्यनुसृतम्।

---

स्वनिरूपकेति। स्वं विशेष्यीभूतं स्वत्वम्। तत्र उभयस्वामिकधने। सर्वत्र। अयमेकोगच्छतीत्यादौ। समभिव्याहृतपदार्थो गमनकर्तृत्वं तत्संसर्गी इदं पदार्थः तन्निष्ठभेदाप्रतियोगित्वस्य चैत्रे सत्वादित्यर्थः। तथा च स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवन्निष्ठभेदाऽप्रतियोगित्वावच्छिन्ने एकपदस्य शक्तिरिति भावः। स्वं एकपदम्। तथाविधंचेति। स्वनिरूपकनिष्ठभेदाप्रतियोगिनिरूपितं चेत्यर्थः। तन्निरूपकस्येति। स्वत्वनिरूपकस्येत्यर्थः। एवमग्रेपि। तथाविधेति स्वनिरूपकनिष्ठेत्यर्थः। तादृशेति। एकमात्रनिरूपितेत्यर्थः। अबाधित इति। तथा चोभयनिरूपितस्वत्ववदिदं स्वनिरूपकनिष्ठभेदाप्रतियोगिनिरूपितस्वत्वाभाववदिति "द्वयोरिदंनेदमेकस्येतिवाक्याद्बोधः स्वत्वस्य विशेष्यत्वपक्षे। अगतिंदर्शयति। स्वत्वसंबन्धेनेत्यादिना। स्वस्वामिनिष्ठेति। निरूपकस्थाने स्वामिपदं योजनीयम्। तत्र एकपदार्थे। प्रमेयमात्रस्यैवेति अस्य प्रतियोगित्वादित्यनेनाऽन्वयः। यदीति स्वमित्यनुवर्तते तस्य धनान्तरस्य। व्युत्पत्तिभङ्ग इति। इदमा तस्याऽबोधनात्। यदि संबन्धभूतस्वत्वाश्रयस्वामिनिष्ठभेदाप्रतियोगी एकपदार्थस्तदाप्याह। एकमात्रेति व्यवहारानुपपत्तिश्चेति। यत्किञ्चिद्धनं न प्रत्येकसाधारणं किंचिच्चासाधारणं तत्र यदसाधारणं तत्स्वामिनिष्ठभेदाप्रतियोगी एकोपि भवति स्वत्वसंबन्धेन तदभावो नोभयधने इति भावार्थः।

अथात्र त्रयाणामिदं न द्वयोरित्यत्र कीदृशो बोधः, सजातीयतृतीयराहित्यस्यदुर्वचत्वादिति चेन्न। तस्य तत्र स्वनिरूपकनिष्ठभेदप्रतियोगितानवच्छेदकी-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चैत्रो न पचतीत्यादौ तिङर्थस्येव विनाप्यनुयोगिनि सप्तमीं सुबर्थस्याप्यभावान्वयात् ।

इदमत्रावधेयम् । नेदमेकस्येत्यत्र स्वनिरूपकनिष्ठभेदाप्रतियोगिनिरूपितयत्किंचित्स्वत्वस्याभावबोधने एकमात्रधनेपि तथाविधधनान्तरनिष्ठस्वत्वाभावसत्वात्तादृशप्रयोगप्रसंगः, तादृशस्वत्वसामान्यस्य चैकाभावो न सम्भवति प्रतियोगितावच्छेदकस्य स्वत्वघटितत्वेनानुपगमात्, अभावकूटस्य चाऽसर्वज्ञदुर्ज्ञेयत्वमित्येकत्वसंख्यावच्छिन्न एकपदार्थः, तदन्वितस्वत्वस्य चोभयस्वत्वानिरूपितविशेषणताविशेषेण स्वत्वस्य समवेतत्वे तादृशसमवायेन वा अभावः प्रतीयते इत्युपगन्तव्यम्, तथाचोभयानिरूपितस्वत्वसंबन्धेन प्रकृत्यर्थाभावबोधोपि संभवति । उभयाऽनिरूपितत्वं च स्वनिरूपितत्व, स्वभिन्ननिरूपितत्वोभयसंबन्धेन किंचिद्विशिष्टं यत्तदन्यत्वमिति ।

ननु स्वत्वस्य विशेष्यत्वेपि नेदं मैत्रस्येत्यादितः कथ स्वत्वसंसर्गाभावबोधः, संसर्गाभावबोधमात्रे एव नञाऽनुयोगिनि सप्तम्यपेक्षणादित्यतआह । चैत्रो न पचतीति । नामार्थप्रतियोगिकाभावबोधे एवाऽनुयोगिनः सप्तम्यपेक्षणादिति भावः ।

---

भूतप्रकृत्यर्थतावच्छेदकरूपत्वात् । एतदभिप्रायेणैवेति सजातीयद्वितीयराहित्यमेकपदार्थ इत्यभिप्रायेणैवेत्यर्थः । ननु एतावता षष्ठ्यर्थस्य प्रकृत्यर्थविशेष्यतया भानसिद्धावपि पञ्चम्यर्थहेतुत्वस्य विशेष्यत्वं नायातमतआह । दीधितौ इत्यादाविति तथा च पर्वतोवन्हिमानधूमान्न तु जलादित्यादौ वन्ह्यादेर्जलादिज्ञाप्यत्वाभावानुरोधादेव तथात्वमिति भावः । चैत्रादिसंबन्धाभावबोधस्येति । अत्र मैत्रादिसंबन्धाभावबोधस्येति पाठः सम्यक्, तस्यैव पूर्वमुक्तत्वात् । चैत्रादिसम्बन्धाभावेति पाठस्तु चैत्रादिसंबन्धस्य सान्निध्यात्तदभावस्य बोधग्रहेण संगमनीयः । केचित्तु चैत्रस्येदं न किन्तु मैत्रस्येति योजनया चैत्रसंबधाभावस्यैव बोध प्रक्रान्तः इति प्राहुः ।

अत्र सजातीयद्वितीयान्तर्गतैकनिरूपितस्वत्वाभावपरतयापि द्वयोरिदं नैकस्येतिव्यवहार आनुभविकस्तन्निर्वाहाय वक्ष्यमाणप्रकारादरे च दीधितिकारीयस्वत्वसंसर्गतामतदूषणस्याप्युद्धारोभवतीत्याशयेन दूषयति इदमत्रावधेयमिति द्वयोरिदं नेदमेकस्येति वाक्यद्वयसमूहालंवनाभिप्रायेण । नामार्थप्रतियोगिकाभावबोधेएवेति । एवकारेण विभक्त्यर्थप्रतियोगिकाभावबोधस्य व्यवच्छेदः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हेतुविषयकज्ञानजनकत्वव्याप्याऽवयवतावच्छेदकरूपशून्यत्वे सति उदाहरणान्यन्यायावयवत्वं तत्त्वम् । तादृशावच्छेदकं हेतुत्वादिकमिति केचित् ।

यथाश्रुतलिङ्गाविषयकत्वनिवेशे गन्धवती इतरेभ्योभिद्यते गन्धादित्यादावव्याप्तिं प्रकारान्तरेण वारयतां मतमाह । हेतुविषयकेति । कासांचित्प्रतिज्ञानां हेतुविषयकज्ञानजनकत्वेपि प्रतिज्ञात्वस्य हेतुविषयकज्ञानजनकत्वाऽनियतत्वात्तन्नियतन्यायावयवतावच्छेदकानि हेतुत्वोपनयत्वनिगमत्वान्येव न तु प्रतिज्ञात्वमिति नाव्याप्तिः ।

हेतुबोधकप्रतिज्ञानिष्ठतत्प्रतिज्ञात्वादेस्तादृशज्ञानजनकत्वनियतत्वादव्याप्तितादवस्थ्यमतोऽवयवतावच्छेदकेति । अभावहेतुकव्यतिरेक्युदाहरणस्य लिङ्गाविषयकज्ञानजनकस्य संभवादुदाहरणस्य तादृशज्ञानजनकत्वाऽनियतत्वादुदाहरणेऽतिव्याप्तिवारणाय उदाहरणान्येति ।

प्रतिज्ञात्वादेर्हेतुपक्षसाध्यभेदेन भिन्नत्वाद् गन्धवतीतरेभ्योभिद्यते गन्धादित्यादावव्याप्तिः तदवस्थैव तादृशप्रतिज्ञानिष्ठप्रतिज्ञात्वस्य हेतुविषयकज्ञानजनकत्वानियतत्वात्, हेत्वादिभेदेन प्रतिज्ञात्वाद्यभेदे तु प्रकृतहेतुविषयकज्ञानजनकत्वनियतावयवतावच्छेदकस्यैवाऽप्रसिद्धिर्नानाहेतुकहेत्ववयवादिसाधारणहेतुत्वादेरप्यतथात्वादित्यस्वरससूचनाय केचिदिति ।

---

सप्तम्यपेक्षणादिति अन्यथा घटःपटोनेत्यादावपि पटात्यन्ताभावप्रतीतिप्रसंगादितिभावः । यथाश्रुतलिङ्गाविषयकत्वनिवेशे इति उपनयवारणायेत्यादिः । दीधितौ–हेतुविषयकेत्यादि । हेतुविषयकज्ञानजनकत्वव्याप्यं यदवयवतावच्छेदकं तच्छून्यत्वे सतीत्यर्थः । हेतुविषयकज्ञानजनकत्वसमानाधिकरणप्रतिज्ञात्वमादायाऽसंभवः स्यादतोव्याप्यपदमित्याह । कासांचित्प्रतिज्ञानामिति । गन्धवती इतरेभ्यो भिद्यते इत्यादिप्रतिज्ञानामित्यर्थः । अनियतत्वात् अव्याप्यत्वात् । तन्नियतेति । हेतुविषयकज्ञानजनकत्वनियतेत्यर्थः । तादृशेति । हेतुविषयकेत्यर्थः । अभावहेतुकव्यतिरेक्युदाहरणस्येति । गोत्वं सास्नाभाववदित्यत्र यत्र सास्ना तत्र गोत्वमित्युदाहरणस्येत्यर्थः । तादृशेति । हेतुविषयकेत्यर्थः । अनियतत्वादिति । अव्याप्यत्वादित्यर्थः । हेतुविषयकज्ञानजनकत्वव्याप्यावयवतावच्छेदकरूपशून्यत्वादिति यावत् । उदासीनव्युदासाय न्यायावयवेति । दीधितौ–तादृशावच्छेदकं चेति । हेतुविषयकज्ञानजनकत्वव्याप्यावयवतावच्छेदकमित्यर्थः । अतथात्वादिति । हेतुविषयकज्ञानजनकत्वाऽनियतत्वादित्यर्थः । अव्याप्तिमाशंक्येति । जिज्ञासानुपधायकप्रतिज्ञायामव्याप्तिमा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



15। हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वं वा ।

लिङ्गाविषयकलिङ्गिविषयकज्ञानजनकन्यायावयववाक्यत्वं वा । इतरावयवानां लिङ्गविषयकज्ञानजनकत्वादिति । 19A

हेत्वभिधानेति । जिज्ञासाजनकत्वं—तद्योग्यता । वाक्यत्वं—न्यायावयवत्वम् । लिङ्गेत्यादि । लिङ्गाविषयकेति पूर्वोपदर्शितार्थकम् । अभावहेतुकव्यतिरेक्युदाहरणवारणाय लिङ्गीति । लिङ्गी—साध्यं—तद्विषयकं—तद्वद्विशेष्यकम् ।

जिज्ञासाफलोपधायकत्वस्याऽव्याप्तिमाशंक्याह । जिज्ञासेति । उदासीनातिव्याप्तिवारणाय न्यायावयवत्वस्यावश्यं निवेशनीयतया वाक्यभिन्नातिव्याप्त्यप्रसक्तेर्वाक्यपदोपादानमनर्थकमित्याह । वाक्यत्वमिति ।

गन्धवतीतरेभ्योभिद्यते गन्धादित्यादावव्याप्तिवारणाय लिङ्गाविषयकेतीति । पूर्वोपदर्शितार्थकमिति । साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षविषयतावहिर्भूतलिङ्गविषयताशून्यार्थकमित्यर्थः । अभावहेतुकेति । वन्ह्यभावहेतुकेत्यर्थः । यो यो धूमवान् स स वन्हिमानित्युदाहरणस्य लिङ्गाविषयकत्वादिति भावः । भावहेतुकव्यतिरेक्युदाहरणस्य हेत्वभावत्वेनैव व्यतिरेकबोधकतया न लिङ्गाविषयकत्वसंभवः एवमभावहेतुकाऽन्वयव्यतिरेक्युदाहरणस्य न तथात्वसंभवः, इत्यभावहेतुकव्यतिरेकित्वानुधावनम् । लिङ्गि—साध्यमिति । लिङ्गमस्यास्तीति व्युत्पत्त्या लिङ्गिपदस्य लिङ्गत्वनिरूपकार्थकत्वादिति भावः ।

---

शंक्येत्यर्थः । दीधितौ-न्यायावयवत्वमिति । एतेन वाक्यपदोपादानेपि प्रतिज्ञैकदेशस्यापि तादृशवाक्यत्वात्तत्रातिव्याप्तिरिति निरस्तम् । न तथात्वसंभवः । न लिङ्गाविषयकत्वसंभवः । लिङ्गिपदस्य पक्षपरत्वे पूर्वस्मादभेदापत्तिरतोव्याचष्टे । दीधितौ-लिङ्गि-साध्यमिति । यद्यपि लिङ्गिविषयक मित्यनेन लिङ्गवद्विशेष्यकमित्येव व्याख्यातुमुचितं तावतैवाग्रिमदोषव्युदासात्तथापि अग्रिमव्याख्यायां लिङ्गिपदस्य साध्यपरत्वार्थं ग्रन्थगौरवापत्तिभियैवाऽत्र लिङ्गि साध्यमित्युक्तम् ।

दीधितौ । तेन । साध्यवन्मुख्यविशेष्यकत्वविवक्षणेन । अन्यथा इदं जलमित्यादिस्थलीयस्य यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषय इत्युदाहरणस्यापि जलत्वं साध्यं जलं च साध्यवत्तमवगाहमानत्वात्तत्रातिप्रसं-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तेनेदं जलं निःस्नेहत्वप्रकारकप्रमाविषयशून्यत्ववत्वात् इदं द्रव्यं जलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वादित्यादौ यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषयः- इत्युदाहरणे नातिप्रसंगः। लिङ्गाविषयकेत्यस्य पूर्वोक्तव्याप्यत्वाविषयकार्थकत्वे तु हेतुवारणायलिङ्गीति।

तद्वद्विशेष्यकं—तद्वन्मुख्यविशेष्यकं। निःस्नेहशून्यत्वं स्नेह एव तद्धेतुत्वे उदाहरणजन्यबोधस्य न लिङ्गाविषयकत्वसंभव इति तत्प्रकारकप्रमाविषयत्वशून्यत्वानुधावनम्। तच्च भावप्रतियोगिकतया अतिरिक्तमिति हृदयम्। जलत्वसन्देहदशायां जलान्यत्वस्य सन्दिग्धतया तत्प्रतियोगिकप्रमाविषयत्वमपि सन्दिग्धमिति तच्छून्यत्वस्य हेतुतया उपन्यासो न संभवतीति प्रथमसाध्ये तदुपेक्षितम्। उत्पत्तिकाले जलस्यापि निःस्नेहतया द्रव्यत्वसाध्यकजलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वहेतुकस्थलान्तरमनुसृतम्। अत्रोक्तयुक्त्या जलत्वसाध्योपेक्षा। यत्तु जलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वमपि लाघवाज्जलत्वस्वरूपमेवेति जलत्वस्य साध्यत्वे नोदाहरणजन्यबोधस्य साध्यविषयकस्य लिङ्गाविषयकत्वस्य संभव इति द्रव्यत्वसाध्यकानुधावनमिति। तन्न।

---

गापत्तेरितिभावः। स्नेहवत्त्वप्रकारकप्रमाविषयत्वस्य हेतुत्वे उदाहरणस्य लिङ्गाविषयकत्वदलेनैव वारणसंभवान्निःस्नेहत्वप्रकारकप्रमाविषयत्वाभावो हेतुरुक्तः। तच्च तत्प्रकारकप्रमाविषयत्वशून्यत्वं च। तत्प्रकारकेति। जलान्यत्वप्रकारकेत्यर्थः। तच्छून्यत्वस्य। जलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वस्य। प्रथमसाध्ये जलत्वसाध्ये। तदुपेक्षितमिति। जलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वमुपेक्षितमित्यर्थः। निःस्नेहतयेति तथाचोत्पत्तिकालावच्छेदेन जले निःस्नेहत्वप्रकारकप्रमाविषयत्वाभावरूपहेतोरभावाद् भागासिद्धिरितिस्थलान्तरानुसरणमिति भावः। केचित्तु शीतस्पर्शादिसमवायिकारणतावच्छेदकतया सिद्धजलत्वजातेर्द्व्यणुकपर्यन्तस्थायित्वमते जलारम्भकपरमाणौ उक्तहेतोः साध्यव्यभिचारादाह। इदं द्रव्यमितिप्राहुः। उक्तयुक्त्या। साध्यभूतजलत्वस्य सन्दिग्धत्वे जलान्यत्वस्यापि सन्दिग्धतया सन्दिग्धो हेतुरिति युक्त्या। द्रव्यत्वसाध्यानुसरणे बीजान्तरमाह। यत्त्विति। अन्यत्वप्रतियोगितावच्छेदकतयेति। भेदप्रतियोगितावच्छेदकतयेत्यर्थः। असंगतेरिति अतिव्याप्तिदानाऽसंगतेरित्यर्थः। लिंगाऽविषयकत्वविरहादिति भावः। अपरे तु निःस्नेहत्वप्रकारकप्रमाविषयत्वाभावो जलत्वमेव स्नेहानामनन्तत्वेन तथात्वायोगात्, तथा च यन्न जलमित्युदाहरणस्य जलत्वलिंगविषयकत्वादेव नातिप्रसंगः अतः स्थलान्तरमाह। इदं द्रव्यमितीत्याहुः। तच्चिन्त्यम्। निःस्नेहत्वप्रका-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



लिङ्गिविषयकत्वं च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयता-बहिर्भावेण वाच्यम् ।

जलाद्यन्यत्वप्रकारकप्रमाविषयत्वशून्यत्वस्य जलत्वस्वरूपत्वे यन्न द्रव्यं तज्जलान्यत्वप्रकारकप्रमाविषयः इत्युदाहरणजन्यबोधस्याप्यन्यत्वप्रतियोगितावच्छेदकतया लिङ्गविषयकत्वेनाऽसंगतेः । पूर्ववद् व्याप्त्यविषयकत्वस्य लिङ्गाविषयकपदार्थत्वे उदाहरणस्य व्याप्तिबोधकतया तत्र लिङ्गिविषयकत्वविशेषणव्यावृत्तिर्न संभवतीत्याशयेन तन्मते स्थलान्तरे व्यावृत्तिमाह । लिङ्गेति । पूर्वोक्तेति । अनुगतरूपावच्छिन्नेत्यर्थः । हेतुवारणायेति । इतरेषां त्रयाणां व्याप्तिविषयकत्वेनैव वारणादिति भावः ।

प्रकृतेति । हेतुतावच्छेदकहेतुहेतुत्वविषयतानां भेदनिवेशे साध्यस्य हेतुतावच्छेदकादिरूपत्वे हेतुतावच्छेदकादिविषयताभिन्नसाध्यविषयत्वाऽप्रसिद्ध्याऽव्याप्तिरिति विशिष्टविषयतावहिर्भावनिवेशः । तादृशविषयतावहिर्भावः पूर्ववन्निर्वाच्यः ।

---

रकप्रमाविषयत्वाभावस्यातिरिक्तत्वात् । अन्यथा तुल्यन्यायेन जलान्यत्वप्रकारकप्रमाविषयत्वाभावस्यापि जलत्वरूपत्वे यन्न द्रव्यं तज्जलान्यत्वप्रकारकप्रमाविषय इत्युदाहरणस्यापि जलत्वरूपलिंगविषयकत्वेनैव वारणसंभवादित्युक्तमेवोपरिष्टात् । दीधितौ–नातिप्रसंग इति । तथा चोक्तस्थलीयस्य यन्न द्रव्यं तज्जलान्यत्वप्रकारकप्रमाविषय इत्युदाहरणस्य द्रव्यत्वरूपसाध्यविषयकबोधजनकत्वेपि तद्वन्मुख्यविशेष्यकत्वाभावादिति भावः । तत्र उदाहरणे । लिंगिविषयकत्वविशेषणेति । साध्यवत्पक्षमुख्यविशेष्यकत्वविशेषणेत्यर्थः । तन्मते व्याप्त्यविषयकत्वस्य लिङ्गाविषयकपदार्थत्वमते । उक्ताऽनुगतरूपेति । प्रकृतपक्षसाध्यकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणं यत्पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितविषयतानिरूपितविषयतानिरूपितविषयतानिरूपितविषयतात्वं तद्रूपविशिष्टविषयतात्वावच्छिन्नेत्यर्थः । इतरेषां । उदाहरणोपनयनिगमनानां ।

ननु साध्यवद्विशेष्यकत्वरूपस्य लिङ्गिविषयकत्वस्य निवेशे घटः प्रमेयो द्रव्यत्वादित्यादौ हेतावतिव्याप्तिः, पञ्चम्यर्थस्यापि प्रमेयत्वेन साध्यवत्त्वादतः साध्यतावच्छेदकरूपेण साध्यविषयकत्वरूपं तद्वाच्यम् । तच्च वन्हिमान् वन्हिसामग्रीमत्वादित्यादिहेतावतिप्रसक्तमित्यत आह । लिङ्गिविषयकत्वं चेति । न च साध्यवद्विशेष्यकत्वविरहेण नातिव्याप्तिरिति वाच्यम् । अनुपदमेव स्वयं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न च तादृशविषयतावहिर्भूतविषयतामात्रनिवेशेनैव हेतुवारण-संभवे साध्यांशनिवेशनं व्यर्थमिति वाच्यम्। तादृशविषयतान्तर्भूतसाध्यविषयताभिन्नत्वस्यैवात्र वहिर्भावेणेत्यनेन विवक्षिततया दर्शितहेतौ तादृशसाध्यविषयताभिन्नहेतुत्वादि विषयतामादायातिप्रसंगस्य वारकतया तत्सार्थक्यात्। भेदप्रतियोगिकोटौ निविष्टस्य साध्यांशस्य चाऽखण्डाभावघटकतयाऽ वैयर्थ्यात्।

यत्र च प्रकृतहेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्भूतसाध्यविषयतायाः अप्रसिद्धिः तत्र वहिर्भूतान्तमनुपादेयमेव शब्दैक्यस्याऽविवक्षितत्वादिति नाव्याप्तिः। तादृशविषयतान्तर्भूतत्व—साध्यीयत्वोभयाभाव एव वा वहिर्भावेत्यन्तार्थः।

---

वक्ष्यमाणत्वात्। तथा च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयतावहिर्भूतसाध्यविषयकत्वं लिङ्गिविषयकत्वम्। साध्यस्य हेतुतावच्छेदकरूपत्वे अयं वन्हिमान् वन्हिसामग्रीमत्वादित्यादौ। तादृशेति हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वेत्यर्थः। पूर्ववन्निर्वाच्य इति। प्रकृतहेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वव्यापकप्रतिबन्धकतानवच्छेदकत्वमित्यर्थः। तादृशविषयताबहिर्भूतेति हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयताबहिर्भूतेत्यर्थः। विषयतामात्रनिवेशेनैवेति। विषयताशालिबोधजनकत्वनिवेशेनैवेत्यर्थः। मात्रपदेन साध्यव्यावृत्तिः। तादृशविषयतान्तर्भूतेति। हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्भूतेत्यर्थः। साध्यविषयताभिन्नत्वस्यैवेति। तथा च तादृशसाध्यविषयताभिन्नसाध्यविषयता-शालित्वं लिङ्गिविषयकत्वम्। एवकारेण वहिर्भूतविषयताव्यावृत्ति। अनुयोगिकोटिप्रविष्टसाध्यांशनिवेशनं समर्थयति। दर्शितहेताविति। वन्हिसामग्रीमत्वहेतावित्यर्थः। तादृशेति तादृशविषयतान्तर्भूतेत्यर्थः। तत्सार्थक्यात्। साध्यांशनिवेशसार्थक्यात्। अवैयर्थ्यात्। सार्थक्यात्। वन्हिमान् धूमादित्यादौ हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्भूतसाध्यविषयताप्रसिद्ध्याऽव्याप्तिमाशंक्याह। यत्र चेति। सर्वत्रैकशब्दाभिलप्यं लक्षणमाह। तादृशेति। हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वेत्यर्थः। तादृशोभयाभावविशिष्टसाध्यविषयताशालित्वं लिङ्गिविषयकत्वम्। हेतुतावच्छेदकावच्छिन्नेत्यस्य फलमाह दीधितौ वन्हिमानित्यादि। हेतौ नातिप्रसंगइति। हेतोः हेतुविशिष्टहेतुत्वविषयतावहिर्भूतसाध्यविषयिताकत्वेपि हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयतावहिर्भूतसाध्यविषयिताकत्वविरहादिति भावः। अक्षतमेवेति। ननु साध्यतावच्छेदकविशिष्टसाध्यविषयकत्व-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तेन वन्हिमान्वन्हिसामग्रीमत्वात् अयं हेतुरिदं वा हेतुत्वं तत्त्वेन प्रतीयमानत्वादित्यादौ नातिप्रसंगः ।

हेतुतावच्छेदक-हेतुहेतुत्वानां निवेशस्य प्रयोजनं क्रमशः प्रदर्शयति । तेनेति । तत्वेनेति । हेतुत्वेन हेतुत्व त्वेन चेत्यर्थः । हेतुहेतुत्वयोस्तादात्म्य-संबन्धेन साध्यत्वं बोध्यम् । हेतुत्वावच्छिन्नसाध्यकस्थले हेतुत्वेन प्रतीयमानत्वरूपप्रकृतहेतोरपि साध्यतावच्छेदकाक्रान्ततया हेतुजन्य-बोधस्य साध्यविषयकत्वमक्षतमेव साध्यतावच्छेदकविशिष्टनिरूपित-विषयतापर्यन्तस्याविवक्षितत्वादिति हेतुविषयतावहिर्भावेशव्यावृत्ति-संगतिः न च हेतुविषयितावहिर्भूतत्वनिवेशापेक्षया साध्यतावच्छेदक विशिष्टविषयकत्वनिवेशनमेव लाघवेनोचितमिति वाच्यम् । विशिष्टविषयतावहिर्भावे निवेशनीये हेतुविषयतावहिर्भावस्य स्वातन्त्र्येणा-ऽनिवेशनीयतया गौरवानवकाशात् । हेत्वंशमनिवेश्य विशिष्टस्य दुर्नि-वेशतया विशिष्टनिवेशेनैव तन्निवेशात् । हेत्वंशाप्रवेशे एव हेतुतावच्छेदक-विषयत्वहेतुत्वविषयत्वयोर्वहिर्भावस्य पृथङ् निवेशनीयतया गौरवात् । एवं च प्रमेयत्वाद्यवच्छिन्नसाध्यकस्थलेपि हेत्वंशनिवेशनप्रयोजन-संभवादयं हेतुरित्युपलक्षणपरं बोध्यम् ।

लिङ्गिविषयकेत्यस्य पूर्ववत्साध्यवद्विशेष्यकार्थकत्वोपगमे वन्हिमान् वन्हिसामग्रीमत्वात्, अयं हेतुः तत्त्वेन प्रतीयमानत्वात् अनयोरतिप्रसंग-

---

विरहान्नातिव्याप्तिरित्यतआह । अविवक्षितत्त्वादिति । व्यावृत्तिसंगतिरिति । तथा च हेतुविषयतायाः साध्यतावच्छेदकाक्रान्तत्वेपि हेतुविषयतावहिर्भूतत्व-विरहान्नातिव्याप्तिरिति भावः । विशिष्टविषयतावहिर्भावश्च न वहिर्भावत्रयं-किन्तु एक एव; तथा च साध्यतावच्छेदकावच्छिन्नविषयतानिवेशमते हेतुता-वच्छेदकवहिर्भूतत्व हेतुत्ववहिर्भूतत्वयोरावश्यकत्वेन गौरवमिति विशिष्टविषयता-वहिर्भावनिवेश इत्याशयेनाह । विशिष्टेति । हेत्वंशमनिवेश्य विशिष्टस्य दुर्नि-वेशतया विशिष्टनिवेशे तन्निवेशादित्याह । स्वातन्त्र्येणेति । गौरवादिति । हेतुतावच्छेदकप्रविष्टसाध्यकप्रतिज्ञायामव्याप्तिश्च वोध्या । तादात्म्येन प्रमेयसा-ध्यकं द्रव्यसाध्यकं धूमादित्यादिकं न्यूनतापरिहाराय दर्शयति । एवं चेति । ननु लिङ्गिविषयकेत्यस्य साध्यवन्मुख्यविशेष्यकत्वार्थकत्वं परित्यज्य दर्शित विषयतावहिर्भूतसाध्यविशेष्यकत्वरूपगुरुतरारम्भः किमर्थं इत्यत आह । लिङ्गिविषयकेति । अतिप्रसंगवारणसंभवेपीति । साध्यवन्मुख्यविशेष्यकत्व

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



लिङ्गविषयकज्ञानजनकत्वाऽनियतलिङ्गिविषयकज्ञानजनकत्वनियतावयव-ताच्छेदकरूपवत्त्वं तत्त्वमित्यादिकं तु तादृशरूपान्तरापरिचये दुर्ग्रहत्वादनुपादेयम् ।

इति दीधितौ प्रतिज्ञालक्षणम् ।

वारणसंभवेपि इदं हेतुत्वमित्यादौ पञ्चम्यर्थस्य तादात्म्यसंबन्धेन साध्यवत्तया साध्यप्रकारतानिरूपितविशेष्यताथकत्वेपि स्वरूपसंबन्धेन हेतुत्वत्वसाध्यकस्थले निरूपितत्वसंबन्धेन ज्ञानत्वावच्छिन्नसाध्यकजनकतात्वावच्छिन्नपक्षकस्थले च हेतावतिव्याप्तिवारणं न संभवति इति गुरुतरारम्भः । लिङ्गिविषयतायाः पूर्वोपदर्शितविषयिताया वहिर्भावनिवेशनं लिङ्गपदस्य धर्मपरतां च विनैव लिङ्गबोधकप्रतिज्ञाविशेषेऽव्याप्तिं लिङ्गिपदविषयपदयो; साध्यवद्विशेष्यपरतां विनैव दर्शितव्यतिरेक्युदाहरणेऽतिव्याप्ति प्रकारन्तरेण वारयतां मतमुपन्यस्य दूषयति । लिङ्गेति ।

निगमनस्योदाहरणस्य च वारणाय नियतान्तद्वयमवयवतावच्छेदकविशेषणम् । प्रतिज्ञात्वोदाहरणत्वयोरपि लिङ्गलिङ्गिविषयकज्ञानजनकत्वसमानाधिकरणतया ऽसंभवातिप्रसंगौ अतः सामानाधिकरण्यमुपेक्ष्य नियतत्वप्रवेशनम् । उदाहरणविशेषत्वमादायातिप्रसंगवारणायावच्छेदकान्तम् । आदिपदात्पञ्चमीविभक्तिमत्त्वानियतलिङ्गिविषयकज्ञानजनकत्वनियतावयवतावच्छेदकरूपवत्वादिपरिग्रहः । रूपान्तरेति ।

---

विरहादिति भावः । पञ्चम्यर्थस्य । हेतुत्वस्य । साध्यवत्तया । वास्तविकेत्यादिः । हेतुत्वत्वसाध्यकस्थल इति । हेतुत्ववत् तेनप्रतीयमानत्वादित्यत्र हेतावित्यर्थः। जनकता ज्ञानवती तत्वेन प्रतीयमानत्वादित्यत्र च हेतावित्यर्थः । धर्मपरतां । लिंगत्वपरतां । दर्शितव्यतिरेक्युदाहरणे । यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषय इत्यत्र च यन्न द्रव्यं तज्जलान्यत्वप्रकारकप्रमाविषय इत्यत्रच । व्युतिरेक्युदाहरणे । एवं वन्हिमान् वन्हिसामग्रीमत्वादित्यत्र हेतौ । गन्धवतीतरेभ्यो भिद्यते इत्यत्र प्रतिज्ञायां इत्यपि वोध्यम् । अतिव्याप्तिं । अव्याप्तिमित्यपि वोध्यम् । निगमनस्येति । वारणाय लिङ्गविषयकज्ञानजनकत्वानियतेति । तादृशजनकत्वाव्याप्येत्यर्थः । उपनयत्वस्य तादृशजनकताव्याप्यत्वाद्वारणम् प्रतिज्ञात्वस्यापि गन्धवती इतरेभ्यो भिद्यते गन्धादित्यत्र लिङ्गज्ञानजनकत्वसमानाधिकरणत्वादनियतान्तम् । उदाहरणस्य चेति लिङ्गिविषयकज्ञानजनकत्वनियतेति । साध्यवत्पक्षविषयकज्ञानजनकत्वव्याप्येत्यर्थः । अत्रापि सामानाधिकरण्यप्रवेशे उदाहरणविशेषेऽतिव्याप्तिर्बोध्या । हेतूपनययोस्तु एकतरविशेषणेनापि वारणात्त्यागः । तथा च लिङ्गिविषयकज्ञानजनकत्वनियतावयवतावच्छेदकरूप-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यद्यपि निरुक्तस्यापि रूपस्यापरिचयादन्तरपदमनर्थकम् । तथापि आत्माश्रयभयेन तथाविधरूपान्तरपरिचयोऽपेक्षणीयः । तच्च रूपमनुमित्य न्यूनानतिरिक्तविषयकशाब्दधीजनकवाक्यत्वादिकमेव, तथा च तस्यैव तद्घटकस्य लक्षणत्वसंभवाद्व्यर्थविशेषणता । न च तस्य विशिष्याघटकत्वान्न व्यर्थविशेषणतेति वाच्यम् । प्रतिज्ञात्वे हेतुत्वादिसाधारणस्यावच्छेदकत्वस्य दुर्घटतया विशिष्यैव तन्निवेशस्यावश्यकत्वादित्येतल्लाभायान्तरपदम् ।

अत्र च साध्यादिभेदेनाऽभिन्नं प्रतिज्ञात्वं यद्यवच्छेदकत्वेन निवेश्यते तदा तस्य प्रकृतसाध्यविषयकत्वनियतत्वासंभवादप्रसिद्धिः । यदि च साध्यादिभेदेन भिन्नं तत्, तदा यादृशसाध्यपक्षकप्रतिज्ञायां प्रकृतलिङ्गबोधकत्वं नियतं तत्राऽव्याप्तिरित्यपि दूषणं बोध्यम् ।

इति गादाधर्यां अवयवग्रन्थे प्रतिज्ञालक्षणम् ।

---

वत्वमात्रोक्तौ निगमने, लिंगविषयकज्ञानजनकत्वानियतावयवताच्छेदकरूपवत्वमात्रोक्तौ चोदाहरणेऽतिव्याप्तिरिति दलद्वयनिवेशनमिति समुदितार्थः । असंभवातिप्रसंगाविति । लिंगविषयकज्ञानजनकत्वानियतेत्यत्र सामानाधिरण्यप्रवेशेऽसंभवः । दलान्तरे सामानाधिकरण्यप्रवेशे तूदाहरणेऽतिव्याप्तिरित्यर्थः । इदं जलं निःस्नेहत्वप्रकारकप्रमाविषयत्वाभावादित्यादौ यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषय इत्युदाहरणे तत्तदुदाहरणत्वमादायाऽतिप्रसंगवारणायावयवतावच्छेदकेति । निरुक्तस्यापीति । तादृशावयवतावच्छेदकरूपस्यापीत्यर्थः । आत्माश्रयेति । अवयवतावच्छेदकताग्रहे अवयवतावच्छेदकत्वविशिष्टविशिष्टरूपग्रहोऽपेक्षित इत्याशयः । तथाविधेति । तादृशावयवतावच्छेदकेत्यर्थः । तच्चरूपमिति । तादृशावयवतावच्छेदकरूपमित्यर्थः । तथाविधरूपान्तरपरिचयवतामेव लक्षणस्य सुग्रहतेत्यत आह । तथाचेति तादृशवाक्यत्वस्य तादृशरूपत्वेच । तस्यैव तादृशवाक्यत्वस्यैव । तद्घटकस्य । तादृशावच्छेदकत्वघटकस्य । व्यर्थविशेषणतेति । तादृशावयवतावच्छेदकस्येत्यादिः । तन्निवेशस्य तादृशवाक्यत्वनिवेशस्य । स्वयं दूषणान्तरमाह । अत्र चेति ।

केचित्तु साध्यपक्षविशेषनियन्त्रितं न प्रतिज्ञात्वं तथासति प्रतिज्ञापदस्य नानार्थता स्यात्, किन्तु जातिविशेषः, शक्यतावच्छेदकतया जातिसिद्धेरिति वदन्ति । तन्मतं दूषयति । मूले-प्रतिज्ञात्वमिति । अत्र च प्रतिज्ञापदप्रवृत्तिनिमित्तत्वेन पक्षता । प्रतिज्ञापदप्रवृत्तिनिमित्तत्वं चोभयवादिसिद्धमेव, तत्र जातिरूपाधिर्वेति विवादात् नाश्रयासिद्धिः । अनुगतेति । प्रतिज्ञेत्याकारकहेत्वादि-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



१७-प्रतिज्ञात्वं जातिः, अनुगतानतिप्रसक्ततान्त्रिकव्यवहारादिति केचित्। तन्न देवदत्तप्रभवत्वादिना जातिसंकरप्रसंगात्। प्रतिज्ञाजन्यं विजातीयं ज्ञानं व्यवहारादिति तज्जनकं वाक्यं प्रतिज्ञेत्यपि न, तज्जनकत्वं तज्जनकत्वज्ञानं वा नानुगतरूपमन्तरेण संभवतीत्युक्तस्यानुसरणीयत्वात्।

---

व्यावृत्ततान्त्रिकानुगतबुद्धिजनकत्वादित्यर्थः। न च जातेर्व्यासज्यवृत्तित्वविरहादेकैकपदेपि प्रतिज्ञात्वजातेर्व्यवहारापत्तिरिति वाच्यम्। प्रतिज्ञाघटकतत्तदानुपूर्वीव्यङ्ग्यत्वस्य तादृशजातौ स्वीकारात्। अनतिप्रसक्तपदोपादानं च न्यायबहिर्भूतप्रतिज्ञासमानाकारकवाक्यवारणाय। तान्त्रिकेति। शक्यतावच्छेदकतैव जातिसाधिका, व्यवहारस्तु तान्त्रिकेषु प्रसिद्ध इति भावः। देवदत्तप्रभवत्वादिनेति। देवदत्तप्रभवतावच्छेदकवैजात्येनेत्यर्थः पुरुषविशेषजन्यतावच्छेदकवैजात्येनेति यावत्। अथैतद्वैजात्यं देवदत्तप्रभवपंचाशद्वर्णानुगतं-तथा चैतद्वैजात्यं विहाय प्रतिज्ञात्वं यज्ञदत्तोच्चरितप्रतिज्ञायां। प्रतिज्ञात्वं विहाय निरुक्तवैजात्यमुदासीनवर्णे, देवदत्तोच्चारितप्रतिज्ञायां च तद्द्वयसमावेशरूपसंकर इति न संभवति, निरुक्तवैजात्यस्यैव सिद्धान्तेऽङ्गीकर्तुमशक्यत्वात्। तस्य पंचाशद्वर्णानुगततया कत्व-गत्वादिना संकरात्। तादृशवैजात्यं विहाय कत्वादि यज्ञदत्तोच्चरितककारादौ कत्वादिकं विहाय तादृशवैजात्यं देवदत्तोच्चरितखकारादौ देवदत्तोच्चरितककारादौ कत्व तादृशवैजात्ययोः समावेशात्। यदि च पञ्चाशद्वर्णेषु देवदत्तप्रभवतावच्छेदकवैजात्यमेकमनुगतं न स्वीक्रियते येनोक्तदोषः स्यात् किन्तु देवदत्तमात्रोच्चरितककारमात्रसामान्ये एव। एवं च देवदत्तमात्रोच्चरितककारसामान्यवृत्तिवैजात्यं विहाय प्रतिज्ञात्वस्य यज्ञदत्तोच्चारितप्रतिज्ञादौ प्रतिज्ञात्वं तादृशवैजात्यस्य देवदत्तमात्रोच्चरितककारे सत्वात्, देवदत्तोच्चरितककारघटितप्रतिज्ञायामुभयोः समावेश इति सांकर्यमुच्यते-तदा कत्वादिकमादायैव प्रतिज्ञात्वस्य सांकर्यं संभवति-कत्वं विहाय प्रतिज्ञात्वं ककाराऽघटितप्रतिज्ञायां प्रतिज्ञात्वं विहाय कत्वमुदासीनककारे ककारघटितप्रतिज्ञायामुभयोः समावेशादिति देवदत्तप्रभवत्वानुधावनमसंगतमेवेति चेत्-मैवम्-प्रतिज्ञात्वस्य जातित्ववादिभिरेकदेशाऽतिव्याप्तिवारणाय व्यासज्यवृत्तित्वं स्वीकार्यं। आंशिकत्वं च न दोषाय तुल्ययुक्त्या परिकल्प्यम्। एवमपि न्यायान्तर्गतपर्वतोवन्हिमानिति वाक्यत्वमुदासीनपर्वतोवन्हिमानिति वाक्यसाधारणं देवदत्तमात्रोच्चरितपर्वतोवन्हिमानितिवाक्यवृत्तिएकं, एवं च देवदत्तमात्रोच्चरितवाक्यवृत्तितादृशवैजात्यं विहाय प्रतिज्ञात्वं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एतेन शब्दोऽनित्य इति लिङ्गिधीपरवाक्यजन्यज्ञानवृत्ति कृतकत्वादित्यादिवाक्यजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यं प्रतिज्ञेति निरस्तम् ।

ननु प्रतिज्ञा न साधनाङ्गं, विप्रतिपत्तेः पक्षपरिग्रहे तत्र प्रमाणाकाङ्क्षायां हेत्वभिधानस्य प्राथम्यादिति चेन्न । विप्रतिपत्त्यग्रे समयबन्धानन्तरं शब्दानित्यत्वं साधयेति मध्यस्थस्य वादिनो वाऽऽकांक्षायां शब्दाऽनित्यत्वं साध्यं, न च साध्यनिर्देशं विना हेतुवाक्यं निष्प्रतियोगिकमन्वयं बोधयितुमीष्टे । न च वादिवाक्येऽनुपस्थितमपि योग्यतया अन्वेति । अतिप्रसंगात् ।

---

यज्ञदत्तोच्चरितपर्वतोवन्हिमानिति प्रतिज्ञायां प्रतिज्ञात्वं तादृशवैजात्यं च देवदत्तोच्चरितपर्वतोवन्हिमानिति वाक्ये तदुभयसमावेशेन देवदत्तोच्चरितन्यायान्तर्गतपर्वतोवन्हिमानिति प्रतिज्ञायां कल्पितवैजात्यमपि व्यासज्यवृत्त्येवेति एकधर्मावच्छिन्नपर्याप्तत्वं न वैकत्र समावेश इति कल्पितवैजात्यानुसरणम् । एवं च कल्पितवैजात्यस्य प्रतिज्ञात्वस्य च कत्वादिना सह नैकधर्मावच्छिन्नपर्याप्तत्वरूपएकत्र समावेशः । कत्वादीनामव्यासज्यवृत्तित्वादिति न तत्सांकर्यावकाशः । उक्तस्येति । अस्मदुक्तलक्षणस्येत्यर्थः । **एतेनेति** अनुगतजनकतावच्छेदकरूपं विना तज्जनकत्वतद्ग्रहयोरसंभवेनेत्यर्थः । वृत्त्यन्तमवृत्त्यन्तं च परिचायकं, तेनैकदेशस्य प्रतिज्ञातदितरसमुदायस्य च व्युदासः । **साधनाङ्गम्** । न्यायघटिका । **पक्षपरिग्रहे** पक्षे साध्यग्रहे । शब्दाऽनित्यत्वादिकोटिपरिग्रहे सतीति यावत् । **तत्र** । साध्ये । **प्रमाणाकांक्षायां** । ज्ञापकाकाङ्क्षायां । **प्राथम्यात्** प्रथममुचितत्वात् । **समयबन्धः** । सदृष्टान्तोदाहरणेन शब्दानित्यत्वं साधनीयमित्यादिसंकेताभिप्रायः । **शब्दाऽनित्यत्वंसाधयेत्याकाङ्क्षायां** शब्दाऽनित्यत्वं कथमिति प्रश्ने । **वादिनः** प्रतिवादिनः । यद्यपि विप्रतिपत्तिः तत्संशयोत्तरं पर्वते वन्हिनिर्णयोजायतामित्येकतरकोटिकनिर्णयेच्छैव युक्ता तथापि प्रतिवादिवन्मध्यस्थस्यापि पर्वतस्य वन्ह्यभाववत्त्व एव निर्भरत्वात्कोवन्हिमानित्येवाकाङ्क्षेति प्रदर्शनाय वादिन इत्यस्याप्यभिधानम् । तथा चाऽनित्यः कइत्येवाकाङ्क्षा बोध्या । यद्वा हेत्वर्थान्वयाय यदि साध्यवानित्येव प्रतिजानीयात्तदा को वन्हिमानिति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न च विप्रतिपत्तितः साध्योपस्थितिः। तस्याः प्रतिवादिविप्रतिपत्त्या प्रमाणादिव्यवस्थया चाऽन्तरितत्वात्, परविप्रतिपत्तिं समयबन्धं च विना स्थापनाया अभावात्। विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च। आवृत्तौ तु सैव प्रतिज्ञा। न चाऽवयवान्तराद्धेत्वन्वययोग्या साध्योपस्थितिः। नाप्यवयवयवान्तरेणाऽऽक्षेपात्। साध्यान्वये तदभिधानं तदभिधाने च साध्यान्वय इत्यन्योन्याश्रयात्। तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या वा नेहाक्षेपः।

---

जिज्ञासा स्यादतः पक्षः साध्यवानिति प्रतिज्ञा कार्या इति दीधितिकाराभिप्रायः। **साध्यं**–हेतूपन्यासेन। **साध्यनिर्देशं**। साध्यस्य प्रतिज्ञां। **निष्प्रतियोगिकं**। निर्विशेष्यकं। तथा च हेत्ववयवार्थस्य साध्येऽन्वयं विना जिज्ञासानिवृत्त्यसंभवात्साध्योपस्थितये प्रतिज्ञाऽऽवश्यकीति भावः। **अतिप्रसंगात्**। पदानुपस्थितस्य विशेष्यतयाऽन्वये द्रव्यत्वावच्छिन्नेपि धूमादित्यादिहेत्ववयवार्थान्वयप्रसंगात्।

**तस्याः**। साध्योपस्थितेः। **प्रतिवादिविप्रतिपत्त्या**। उक्तविप्रतिपत्तिरभावकोटावेव प्रमाणमिति विरुद्धप्रतिपत्तिजनकवाक्येनेत्यर्थः। यदि च विप्रदिपत्तिपदं तदेकदेशपरं तदाविरुद्धाकारकप्रतिवादिवाक्यमेव प्रतिवादिविप्रतिपत्तिरिति वोध्यम्। **प्रमाणादीति**। न्यायमतेन मया शब्दानित्यत्वे प्रमाणं वक्तव्यमित्यादिसमयवन्धेनेत्यर्थः। सर्वमिदं तयोरावश्यकत्वे स्यात्तदेव नेत्यत आह। **परेति** **निराकाङ्क्षत्वाच्चेति**। जनितान्वयबोधकत्वादितिभावः। ननु पक्षः साध्यवान्नवेति विप्रतिपत्त्येकदेशस्य पक्षः साध्यवानिति भागस्यैव पुनरावर्त्तनं कार्यमिति तदर्थे एव हेत्वर्थस्यान्वयो भविष्यति इति विफलः प्रतिज्ञोपगम इत्यतआह। **आवृत्ताविति** विप्रतिपत्त्येकदेशस्य पुनरावर्तने तु इत्यर्थः। **सैव**। आवृत्तिरेव। शंकते। **नचेति**। **अवयवान्तरात्**। उदहरणादितः। **अतदर्थत्वात्**। हेत्वन्वययोग्यसाध्योपस्थापकत्वाभावात्। पक्षविशेषणतापन्नसाध्यस्यैव हेत्वन्वययोग्यत्वादिति भावः। **तदनुपस्थापनात्**। प्राक् निगमनोपस्थापनासंभवात्। कथायामाकाङ्क्षाक्रमेणैवाभिधानादिति भावः। अवयवान्तरेणेत्यादिमूलं क्वचिन्न दृश्यते। **अवयवान्तरेण**। उपनयेन। व्यतिरेक्युदाहरणे साध्यवाचकपदाच्छ्कायास्तुच्छत्वमित्युदाहरणत्यागः। **आक्षेपात्**। उपनयेन प्रतीतस्वार्थानुपपत्त्या

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अन्ये तु शब्दाऽनित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्यानुयोगः तथापि प्रमाणमात्रे नाकाङ्क्षा किन्तु विशिष्टे, विशिष्टन्तु विशेषणं साध्यमनभिधाय न शक्याभिधानम्। न च वस्तुतो यत्साध्यं तत्र प्रमाणंवदेति मध्यस्थनियोगः; वादिद्वयमध्ये तदसंभवात्। तस्मात्साध्याभिधानं विना न हेतोराकाङ्क्षा न वाऽन्वयबोधकत्वमिति प्रतिज्ञा साधनाङ्गमिति।

इति चिन्तामणौ प्रतिज्ञालक्षणम्।

साध्यनिर्देशानन्तरं कुत इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितम्। अन्यथाऽनाकाङ्क्षिताभिधाने निग्रहापत्तेः। लोके तथैवाऽऽकाङ्क्षानिवृत्तिरिति व्युत्पत्तेरिति प्रतिज्ञानन्तरं हेतूपन्यासः।

अनुमितीत्यादि। जनकान्तं न्यायावयवार्थकम्। निगमनवारणाय साध्याविषयकेति।

निगमनवारणायेति। प्रतिज्ञोदाहरणोपनयविशेषाणां विवक्षणीय हेतुविभक्तिमत्वविशेषणेन वारणसंभवान्न तदुक्तम् ननु साध्याविष-

---

साध्यवत्तया पक्षानुमानादित्यर्थः। तथा च तेन हेत्वन्वययोग्यसाध्योपस्थितिरितिभावः। साध्यान्वये इति। साध्ये हेत्ववयवार्थान्वये उदाहरणानन्तरं साध्यव्याप्यवान् क इत्याकांक्षयोपनयाभिधानमित्यर्थः। दूषणान्तरमाह। तस्मादिति। उपनयादित्यर्थः। पक्षस्य साध्यवत्वं विनापि तद्व्याप्यवत्वप्रतीतिसंभवादिति भावः। निबन्धनकृतां मतमाह। अन्येत्विति मध्यस्थस्येति। इदमुपलक्षणम्। वादिनोवेत्यपि द्रष्टव्यम्। अनुपयोगः। प्रश्नः। नाकाङ्क्षा। न प्रश्नः। न च शब्दाऽनित्यत्वे प्रमाणं वदेति प्रश्नवाक्यादेव साध्योपस्थितिर्भविष्यतीति वाच्यम्। तदा धूमादिति पञ्चमी न स्यात्, किन्तु धूम इत्येव स्यात्। विशिष्टे। शब्दाऽनित्यत्वग्राहकत्वविशिष्टे। न शक्याभिधानम्। न विशिष्टबोधाभिप्रायप्रयुक्तहेत्ववयवेन बोधयितुं शक्यम्। वादीति। वादिप्रतिवादिनोः साध्यविवादे वस्तुगत्या यत्साध्यं तत्प्रश्नाभावादित्यर्थः। द्वयोरेकस्यावश्यं बाधितत्वादिति भावः।

इति विलासिन्यां प्रतिज्ञा लक्षणम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



साध्याऽविषयकत्वं च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्ट-हेतुत्वविषयतावहिर्भावेण, पूर्वोपदर्शितसाक्षात्परंपरासाधारणप्रकृतपक्षविशेषणत्वेन वा तेन पूर्वोपदर्शितहेतौ नाव्याप्तिः

यकबाधजनकत्वनिवेशे वन्हिमान् वन्हिसामग्रीमत्वादित्याद्युक्तहेताव-व्याप्तिरत आह । साध्याविषयकत्वं चेति । बहिर्भावेणेति । विवक्षणी-यमिति शेषः । साध्यांशोपादानं हेतविभक्तिमत्वदलसार्थक्याय ।

एतत्कल्पे तादृशसाध्याविषयकत्वप्रतियोगिकोटौ साध्यांशमुपादाय दलान्तरोपादानं प्रक्षालनाद्धीतिन्यायेन संदर्भविरुद्धमतः कल्पान्तरमाश्र

---

शाब्दज्ञानजनकत्वे सति साध्याऽविषयकशाब्दज्ञानकारणं यो हेतुमान् शब्दस्तत्वं लक्षणार्थः । हेतुसमानानुपूर्वीकोदासीनवाक्यस्य वारणाय जनकान्त-मिति । न्यायावयवत्वार्थकमिति । तेन प्रतिज्ञैकदेशस्य न्यायान्तर्गतत्वेपि न क्षतिः । एतेनोदासीनस्य धूमादितिभागस्य न्यायान्तर्गतत्वनिवेशेनैव वारण-संभवान्न्यायावयवत्वनिवेशो न युक्त इति परास्तम् । निगमनैकदेशे तस्मादिति भागेऽतिव्याप्तेश्च । दीधितौ—साध्याविषयकेतीति । विषयितासंबन्धेन-साध्यवद्भिन्नेत्यर्थः । निगमनजन्यबोधस्य विषयितासंबन्धेन साध्यवत्वान्नाति-व्याप्तिरिति भावः ।

ननु हेतुविभक्तिमत्वमित्यस्य हेतुत्वबोधकविभक्तिमत्वमित्यर्थः । तत्र धूमा-दालोकत्वान्पर्वतोवन्हिमानितिप्रतिज्ञायां । यो योधूमवान् स स वन्हिमान् यथा धूमाद्वन्हिमन्महानसमित्युदाहरणे पर्वतो धूमादालोकवद्वृत्तिवन्हिमानित्यादिस्थ-लीयधूमादालोकसमानाधिकरणवन्हिव्याप्यधूमवानित्युपनये च किंवाऽऽलोका-द्वन्हिसाध्यकप्रतिज्ञोदाहरणोपनयेषु चातिव्याप्तेरकथनेन न्यूनता इत्याशंक्याह— गादाधर्यां । प्रतिज्ञोदाहरणोपनयविशेषाणामिति । विवक्षणीयेति तथा चोक्तस्थलेषु यथाश्रुतार्थेऽतिव्याप्तेरग्रे "प्रकृतसाध्यान्वितार्थोपस्थितिजनक हेतुविभक्तिमत्वमित्यादिना वक्ष्यमाणपरिष्कृतहेतुविभक्तिमत्वनिवेशेऽभावान्नि-गमनमात्रानुसरणम् । उक्तहेतौ । वन्हिसामग्रीमत्वहेतौ । अव्याप्ति-रिति । तस्य साध्याविषयकवोधजनकत्वाभावादिति भावः । विवक्षणीय-मिति । तथा च हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयता-वहिर्भूतं यत्साध्यविषयत्वं तच्छून्यज्ञानजनकत्वं विवक्षणीयमित्यर्थः । ननु तादृशविषयतावहिर्भूतविषयताशून्यत्वमेवास्तु किं साध्यांशनिवेशेनेत्यत आह । साध्यांशोपादानमिति । अखण्डाभावघटकतया तत्सार्थक्यादिति भावः । प्रयोजनमाह । हेतुविभक्तिमत्वदलसार्थक्यायेति । अन्यथा तद्वारणीये

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यति। पूर्वोपदर्शितेति। तस्माद्वन्हिमानित्यादिनिगमने मत्वर्थाद्यंशे एव साध्यस्य विशेषणतयाऽतिव्याप्तिरित्यतः साक्षात्परंपरासाधारणेति। तथा च तत्र साध्यस्य परंपरया पक्षविशेषणत्वान्न दोषः। हेतुत्वं प्रमेयं प्रमेयादि त्यादौ प्रमेयत्वादिसाध्यके हेत्ववयवेऽव्याप्तिः हेतुतावच्छेदकीभूतसाध्यस्य परंपरया पक्षविशेषणत्वादतः पूर्वोपदर्शितेति।

---

व्यतिरेक्युदाहरणादौ निरुक्तविषयतावद्विभूतविषयतावत्त्वादेवातिव्याप्तिविरहेण तद्वैयर्थ्यापत्तेः। न च विषयतान्तभूर्तसाध्यविषयताभिन्ना, तादृशविषयतान्तभूतत्वसाध्यीयत्वोभयाभाववती या या साध्यविषयता तच्छून्यत्वमित्यर्थोऽस्तु इति वाच्यम्। द्वितीयस्य साध्यस्याऽसंभववारकत्वेपि प्रथमस्य तस्याऽखण्डाभावसंपादकत्वानपायाच्चरमस्याधिक्यात्। दलान्तरोपादानं। हेतुविभक्तिमत्वोपादानम्। इदन्तुबोध्यम्। पूर्वोपदर्शितेत्यादि अग्रिमस्यानुषङ्गपक्षाभिप्रायकतया, अननुषंगपक्षे साध्याविषयकत्वमात्रश्यकम्। अवतरणन्तु अनुषंगपक्षे बोध्यम्। पूर्वोपदर्शितेति। प्रतिज्ञालक्षणोपदर्शितेत्यर्थः। तत्र साक्षात्पक्षविशेषणत्वेन यत्साध्यविषयकत्वं तच्छून्यत्वमात्रोक्तौ अतिव्याप्तिमाह। तस्माद्वन्हिमानिति। एवकारेण पक्षव्यावृत्तिः। अतिव्याप्तिरिति। मत्वर्थद्वारैव पक्ष विशेषणत्वेन साध्यविषयकबोधजनकत्वादिति भावः। परंपरया पक्षविशेषणत्वेन यत्साध्यविषयकत्वं तच्छून्यत्वमात्रोक्तौ अव्याप्तिमाह। हेतुत्वमिति। हेत्ववयवे। प्रमेयादितिहेतौ। परंपरया। प्रमेयद्वारा। पक्षविशेषणत्वात्। परंपरया पक्षविशेषणत्वेन यत्साध्यविषयकत्वं तच्छून्यत्वविरहादिति यावत्। दीधितौ— तेन। तादृशवह्निभूतसाध्यविषयताशून्यत्वनिवेशेन, साक्षात्परंपरासाधारणपक्षविशेषणत्वेन साध्यविषयताशून्यत्वनिवेशेन वा। पूर्वोपदर्शितहेतौ। वन्हिसामग्रीमत्वादिति हेतौ। नाव्याप्तिः। तादृशविषयताशून्यत्वादिति भावः। प्रकृतेति। अत्र पूर्वोक्तप्रतिज्ञाजन्यबोधीयसाध्यविषयताशून्यत्वं न निवेश्यं, निगमनातिव्याप्तेरित्यत आह। तच्चेति। पक्षांशे साध्यस्य विशेषणत्वं चेत्यर्थः। साक्षात्पक्षनिरूपितं। अयं गौरित्यादौ। संबन्ध्यादिनिरूपितं च पर्वतो वन्हिमानित्यादौ। तादृशविशेषणतात्मकेति। पक्षविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रकारतात्मिका पक्षविशेष्यतानिरूपितसंबन्धिप्रकारतानिरूपितप्रकारतात्मिका वा इत्यर्थः। तादृशसंबन्धावच्छिन्नपक्षविशेष्यतानिरूपितसाध्यप्रकारतायाः प्रकृतपक्षविशेष्यतानिरूपिताऽभेदसंबन्धावच्छिन्नप्रकारता संबन्ध्यंशे निरूपितत्वसंबन्धावच्छिन्नसाध्यप्रकारताया अनुगतरूपेण शून्यत्वम्। तथा च निगमनजन्यबोधीयसाध्यविषयतायाः तादृशविषयतानिरूपितसंबन्ध-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इदं न दण्डाज्जातं दण्डसंयोगाजन्यद्रव्यत्वात्, अयं न धूमादालोकवान् आर्द्रेन्धनशून्यत्वादित्यादौ व्यतिरेक्युदाहरणस्य,

प्रकृतसाध्यपक्षकप्रतिज्ञाजन्यबोधे यादृशयादृशपक्षांशे साध्यस्य विशेषणत्वं तादृशेत्यर्थः । तच्च साध्यतावच्छेदकसंबन्धावच्छिन्नं साक्षात्पक्षनिरूपितं, पक्षांशे अभेदादिसंबन्धेन विशेषणतापन्न संबन्ध्यादिनिरूपितं च, तादृशविशेषणतात्मक साध्यविषयता-शून्यत्वं समुदितार्थः । अयं वन्हिमान् वन्हिमत्पर्वता वृत्तिधर्मशून्यत्वादित्यादिहेतावव्याप्तिवारणाय प्रकृतेति, पक्षतावच्छेदका-वच्छिन्नार्थकम् । न चैवमननुषङ्गपक्षे निगमनजन्यबोधे साध्यस्य पक्षतावच्छेदकावच्छिन्नाविशेषणत्वादतिव्याप्तितादवस्थ्यमिति वाच्यम् । अननुषंगपक्षे पक्षनिष्ठमुख्यविशेष्यतानिरूपितप्रकारतापन्नत्वरूपं पक्ष-विशेषणतापन्नत्वं यदि निवेश्यते, तदा पक्षतावच्छेदकावच्छिन्नत्वा-विवक्षणेपि क्षस्मादितरेभ्यो भिद्यते इत्यादिनिगमनातिव्याप्तेरशक्य परिहारतया एतत्कल्पस्याननुषङ्गपक्षाभिप्रायकत्वात् ।

अयं धूमाभाववान् वन्ह्यभावादित्यादौ यो यो धूमवान् स स वन्हिमानित्यादेर्व्यतिरेक्युदाहरणस्य यथाश्रुतहेतुविभक्तिमत्त्वनिवेशनेनापि वारणसंभवाद्विवक्षणीयस्य प्रकृतसाध्यान्वयबोधनक्षमार्थोपस्थितिप्रयो-जकहेतुविभक्तिमत्त्वस्य व्यावृत्तिस्थलमाह । इदमिति । उदाहरणस्य साध्याविषयकत्वरक्षणाय अभावसाध्यकानुधावनम् । हेतुविभक्तिपदस्य ज्ञापकत्वरूपहेतुत्वबोधकविभक्त्यर्थकत्वे प्रथमोदाहरणे नातिव्याप्तिः, तत्र जनिधात्वर्थोत्पत्त्यन्वितप्रयोज्यत्वस्यैव पञ्चम्यर्थत्वात् । अतः स्थलान्तरमाह । अयमिति । व्यतिरेक्युदाहरणस्येति । यद्दण्डाज्जातं

---

विषयतानिरूपितविषयतारूपत्वान्नातिव्याप्तिरिति वन्ह्यादिसाध्यकनिगमनवारणा-यैकविधसाध्यविषयकत्वनिवेशेपीतरभेदादिसाध्यकनिगमनानां वारणाय तादृश-तादृशविषयताशून्यत्वकूटं द्रष्टव्यम् । हेतुत्वं प्रमेयं प्रमेयादित्यादौ हेतुजन्यबोधे हेतुत्वे आधेयतासंबन्धेन विशेषणतापन्नप्रमेयाद्यंशे प्रकारत्वं प्रमेयत्वस्येति नाव्याप्तिः । साक्षात् । पचतीत्यादौ । एतच्च परंपरासाधारणनिरूपितत्वं नास्तीति सूचनाय । पक्षांशे इत्यादि । वन्हिमानित्यादौ । पक्षतावच्छेदका-वच्छिन्नाऽविशेषणत्वादिति । पक्षविशेषणत्वेन साध्यविषयकत्वशून्यत्वादिति भावः । इदं च विशेषणमनुषङ्गपक्षे निगमनसामान्यवारकं—नत्वननुषङ्गपक्षे एतत्पक्षे हि पक्षतावच्छेदकावच्छिन्नविवक्षात्यागेपि वन्हिमद्वृत्तिधर्मशून्यत्वादिति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



197 हेतुत्वं च–अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजक शाब्दज्ञानजनकसाध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम् । 209

हेतुत्वपञ्चकसाध्यान्वितस्वार्थबोधकेदंपदशालिनः उपनयस्य च वारणाय-हेतुविभक्तिमदिति । तदर्थश्च प्रकृतसाध्यान्वितस्वार्थबोधनक्षमार्थोपस्थितिजनकविभक्तिमत्वम् ।

हेत्विति संपातायातम् ।

तद्दण्डसंयोगाजन्यद्रव्यत्वाभाववत् । यो यो धूमादालोकवान् स स आर्द्रेन्धनवानित्याकारकस्येतिशेषः । साध्याविषयकत्वरक्षायै व्यतिरेकि पर्यन्तानुधावनम् । यद्यप्यन्वय्युदाहरणस्य साध्यविषयकत्वेपि पक्षतावच्छेदकविशिष्टसाध्याविशेषणकत्वादतिव्याप्तिस्तदवस्थैव द्वितीयकल्पे– तथापि प्रथमकल्पे व्यावृत्तिघटनाय अभावसाध्यकव्यतिरेकानुसरणम् ।

एतादृशोदाहरणस्य साध्यान्वितस्वार्थबोधकपदशालित्वनिवेशेनैव वारणसंभवात्तादृशविभक्तिमत्वपर्यन्तस्य व्यावृत्तिस्थलमाह । हेतुत्वपञ्चकेति । साध्यान्वितेति । निगमनोपस्थाप्यसाध्यान्वितेत्यर्थः ।

---

हेतुसंग्रहाय मुख्यविशेष्यतोपादानेपि तस्माद्वह्निमानित्यादिकं कतिपयनिगमनमेव वार्यते न सर्वं तस्मादितरेभ्योभिद्यते इत्यादौ भेदाश्रयताया एवाख्यातार्थस्य मुख्यत्वेन भानादिति भावः । एतत्कल्पस्य । द्वितीयकल्पस्य । अयं तस्मादितरेभ्यो भिद्यते इत्यनुषङ्गपक्षः । वारणसंभवादिति । स्थलान्तरानुधावनं व्यर्थम्, तथापीति शेषः । व्यावृत्तिस्थलमाहेति । व्यावृत्त्यर्थं स्थलान्तरमाहेति शेषः । दीधितौ—दण्डसंयोगेति । संयोगपदं साध्याविशेष्यस्य वारणाय । द्रव्यपदं च दण्डरूपादौ व्यभिचारवारणाय । द्रव्यत्वमात्रस्य घटादौ व्यभिचार इति दण्डसंयोगाजन्यत्वनिवेशः । यद्दण्डाजातं तद्दण्डसंयोगजन्यद्रव्यमिति तु नोदाहरणं दण्डरूपे व्यभिचारात् हेत्वभावाऽलाभाच्च दण्डरूपे दण्डसंयोगाजन्यद्रव्यत्वाभावान्न व्यभिचारः । सिद्धान्ते तु विशिष्टाभावस्यातिरिक्ततया व्यापकत्वम् । अनतिरिक्तत्वे तु वैशिष्ट्यावच्छिन्नप्रतियोगिताकाभावत्वेन वाच्यम् । प्रथमोदाहरणे । यद्दण्डाज्जातं तद्दण्डसंयोगाजन्यद्रव्यत्वाभाववदित्युदाहरणे । प्रयोज्यत्वस्यैवेति । एवकारेण ज्ञापकत्वव्यावृत्तिः । तथा च ज्ञापकत्वरूपहेतुत्वप्रतिपादकविभक्तिमत्वमात्रेणापि वारणसंभवात्साध्यान्वयिस्वार्थबोधजनकेत्यादिव्यर्थमितिभावः । दीधितौ–व्यतिरेक्युदाहरणस्य । यद्दण्डाज्जातमित्यादि ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विशेषणतया साध्यान्वितत्वस्याविवक्षणादितिभावः। न चोपनये व्याप्तिघटकतया साध्यविषयकत्वसत्वान्नातिव्याप्तिः प्रसज्यते। अनुषङ्गपक्षे निगमनोपस्थाप्यसाध्येन सममिदं पदार्थस्य हेतुत्वस्यानन्वयाद्व्यावृत्तिदानस्यानुषङ्गपक्षाभिप्रायकतया। अननुषङ्गपक्षे च निरुक्तविशिष्टविषयताबहिर्भूतसाध्यविषयताशून्यत्वस्यैव साध्याविषयकत्वपदार्थतया पक्षविशेषणतया साध्याविषयकत्वस्याप्रयोजकत्वादितिवाच्यम्।

---

यद्यपि अन्वय्युदाहरणस्येति। यद्दण्डसंयोगाऽजन्यद्रव्यत्वाभाववत् तन्नदण्डाज्जातम्, एवं य आर्द्रेन्धनशून्यः स न धूमादालोकवान् इत्यस्य चेत्यर्थः। द्वितीयकल्पे। साक्षात्परंपरासाधारणपक्षविशेषणत्वेन साध्यविषयताशून्यत्वकल्पे। वन्हिमान् धूमादित्यादिस्थलीयस्यैव वा। एवं चाऽन्वय्युदाहरणे एवातिव्याप्तिसंभवे व्यतिरेकिपर्यन्तानुधावनं व्यर्थमित्याशयः। यद्दण्डाज्जातत्वाभाववत् तद्दण्डसंयोगाजन्यद्रव्यत्वाभाववदिति व्यतिरेक्युदाहरणस्यापि संभवादन्वयिपदं चिन्त्यम्। प्रथमकल्पे वहिर्भूतसाध्यविषयतासत्वादेवाऽतिव्याप्त्यभावाद्द्वितीयकल्पेइति। तथापि। द्वितीयकल्पेऽतिव्याप्तिसत्वेपि। प्रथमकल्पे। वहिर्भूतसाध्यविषयताशून्यत्वोघजनकहेतुविभक्तिमच्छब्दत्वकल्पे। व्यावृत्तिघटनाय। हेतुविभक्तिमत्वस्य व्यावृत्तिदानाय। यद्यप्युक्तस्थलीयस्य धूमादालोकव्यापकीभूताभावप्रतियोग्यार्द्रेन्धनशून्यत्ववानयमित्याकारकोपनयस्यापि - वारणसंभवादुदाहरणमात्रानुसरणमयुक्तम्, तथापि हेतुत्वपक्षकोपनयस्य वारणेनैवोपनयान्तरस्य वारणमर्थतःसिद्धमतोन तस्य पृथगुपन्यासः। एतादृशोदाहरणस्य। यो यो धूमादालोकवान् स आर्द्रेन्धनवानित्याकारकस्य। स्वंहेतुत्वं। पदशालित्वनिवेशनैवेति। एवकारेण विभक्तिमत्वव्यावृत्तिः। वारणसंभवादिति। साध्यान्वितस्वार्थोपस्थापकपदवत्वाभावादितिभावः। दीधितौ–हेतुत्वपक्षकेति। हेतुत्वं प्रमेयं-इतरभिन्नं वा हेतुत्वादित्यत्र। स्वाथवोधकेति। हेतुत्ववोधकेत्यर्थः। इदंपदशालिनः। इदं पदवतः। उपनयस्य। प्रमेयत्व (इतरभेद) व्याप्यहेतुत्ववद्धेतुत्वमित्याकारकस्य। वारणायेति। साध्यविषयतानिरूपितस्वार्थविषयताकोपस्थितिजनकपदवत्वादिति भावः। हेतुविभक्तिमदिति। तथा च तादृशोपस्थितिजनकविभक्तिमत्वाभावान्नातिव्याप्तिरिति भावः। ननु साध्यविषयतानिरूपितस्वार्थविषयताकवोधो न निवेश्यते येनोक्तदोषवारणाय विभक्तिनिवेशः स्यात् किन्तु साध्यविशेष्यतानिरूपितस्वार्थप्रकारताकवोध एव, विभक्तित्वाऽनिवेशेन लाघवादित्यत आह विशेषणतयेति। प्रकारतयेत्यर्थः। अत्र दीधितिकृतां विभक्तिव्यावृत्तिप्रदर्शनं प्रथमकल्पमभिप्रेत्य द्वितीयकल्पं वा उभयथापि न संभवतीत्याशंकते नचेति।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



उपनयपदस्य इतरत्वव्यापकीभूताभावप्रतियोगिमदिदमित्याकारकाभावसाध्यकव्यतिरेक्युपनयपरत्वात् । प्रकृतसाध्येति । प्रकृतसाध्यान्वितस्वार्थबोधप्रयोजकाकांक्षादिमद्धेतुविभक्तिमत्वमित्यर्थः । उपदर्शितस्थले च धूमज्ञानज्ञाप्यालोकाभावादिरूपसाध्यांशे पञ्चम्यर्थानन्वयान्नातिव्याप्तिरितिभावः । नन्वेवं हेतुपदमनर्थकं साध्यान्वितस्वार्थबोधकविभक्तिशालिनो हेत्वतिरिक्तावयवस्य साध्यविषयकत्वनियमेनाऽतिप्रसंगानवकाशात् । न च पक्षविशेषणतया साध्याविषयकत्वनिवेशपक्षे ज्ञानादिसाध्यके य इच्छति स जानातीत्युदाहरणे ज्ञानादिरूपसाध्यान्वितस्वार्थबोधकाख्यातविभक्तिशालिनि विशेषणविभक्तेरभेदार्थकत्वमते प्रमेयत्वादिपक्षकप्रमेयत्वादिसाध्यकोपनये पक्षीभूतसाध्यान्विताऽभेदबोधकप्रथमाविभक्तिशालिनि चाऽतिव्याप्तिवारणाय हेतुपदोपादानमावश्यकमिति वाच्यम् ।

---

**उपनये** । उपनयमात्रे । **व्याप्तिघटकतयेति** । इतरभेदसाध्यकेऽपि उपनयेऽन्वयव्याप्तिप्रवेशमभिप्रेत्य । **साध्यविषयकत्वादिति** । साध्याविषयकत्वविरहादितिभावः । द्वितीयकल्पाभिप्रायकत्वं चेद्वयावृत्तिदानस्योच्यते तदाऽतिव्याप्तिः ननु प्रतिज्ञोत्तरं हेतुरेवोद्भाव्यते नोदाहरणादिकमित्यत्र किं नियामकमतआह । साध्यनिर्देशानन्तरमिति । प्रतिज्ञावाक्यात्पक्षतावच्छेदकविशिष्टे साध्यबोधानन्तरं । कुत इत्याकाङ्क्षायां-हेतोराकांक्षया प्रयुक्ते कुत इति प्रश्ने । साधनताभिव्यञ्जकेति । ज्ञापकताबोधकेत्यर्थः । उचितमिति । साधनताभिव्यञ्जकपञ्चमीविभक्तिमल्लिङ्गप्रतिपादकवाक्यमित्यर्थः । तेन धूमेनेति प्रयोगनिरासः । अन्यथा । अस्यैव विवरणं । अनाकाङ्क्षिताभिधाने इति । साध्यनिर्देशोत्तरमुदाहरणाद्यभिधाने इति यावत् । **निग्रहापत्तेरिति** । अप्राप्तकालनिग्रहापत्तेरिति यावत् । ननु प्रतिज्ञोत्तरमुदाहरणादेरिव हेतोरपि अनाकाङ्क्षितत्वमविशिष्टमत आह । लोक इति । तथैव । साधनताभिव्यञ्जकविभक्तिमल्लिंगवचनेनैव कुत इत्याकांक्षानिवृत्तिः इति अनुभवसिद्धत्वादिति भावः । हेतुत्वंचेति । अनुमितिकारणीभूतो यो लिङ्गपरामर्शस्तत्प्रयोजकशाब्दज्ञानलापनं नास्तीत्याह । **अनुषङ्गपक्षेइति** । **इदंपदार्थस्य** । उपनयघटकेदंपदार्थस्य । एतेन साध्यान्वितस्वार्थबोधकपदशालित्वमात्रेणैव वारणमुक्तम् । **अनन्वयात्** । भिन्नवाक्यत्वेनेत्यादिः । नतूपनयघटकाऽयंपदस्याऽऽवृत्तिरेवाऽनुषंगः । तथा च निगमनोपस्थाप्यसाध्यान्वितस्वार्थबोधकत्वं हेतुत्वबोधकोक्तोपनयघटकायंपदस्याऽक्षतमेवेति व्यावृत्तिः संभवतीति चेन्न । उपनयघटकायंपदसदृशपदान्तरस्याऽऽवृत्तिरेवानुषंगः, नतूपनयघटकस्यैवाऽऽवृत्तिस्तथेति द्वितीय-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पक्षविशेषणतया साध्याविषयकत्वनिवेशपक्षे हेतुपदोपादानेऽपि यो यो धूमवान् स वन्हिमान् तथा धूमाद्वन्हिमन्महानसमितिदर्शितस्वदृष्टान्तोदाहरणेऽतिव्याप्तेः, तद्वारणाय प्रकृतपक्षविशेषणतापन्नसाध्यान्वितार्थबोधकत्वस्यावश्यं निवेशनीयतया तादृशोदाहरणोपनययोः तथाविधसाध्यान्वितस्वार्थबोधकविभक्तिमत्त्वविरहेणातिप्रसङ्गानवकाशादित्यत आह। हेत्वितीति। इदमुपलक्षणम्। पक्षविशेषणतया साध्याविषयकत्वानिवेशकल्पे विभक्तिसत्त्वमपि नोपादेयम्। तत्कल्पस्यानुषङ्गपक्षपरतया तत्पक्षे उपनयस्य निगमनैकवाक्यताविरहेण साध्यान्वितस्वार्थबोधकपदशालित्वाभावाद्दर्शितविभक्तिपदव्यावृत्तेश्च अनुषङ्गपक्षेऽसङ्गतेस्तत्कल्पे व्यावृत्त्यभावादिति केचित्।

वस्तुतस्तु अनुषङ्गपक्षे उपनयस्थस्यैव पक्षबोधकेदंपदस्य निगमनघटकीभूतसाध्यान्वितस्वार्थबोधकतया तादृशबोधे च प्रयोजनान्तरविरहेण स्वजन्यत्वानिवेशनादुपनये विभक्तिपदव्यावृत्तिस्सम्भवतीत्यवधेयम्। ननु प्रथमसाध्याविषयकत्वनिर्वचनपक्षे पर्वतः पर्वताभिन्नत्वप्रकारकज्ञानाभाववान् तादृशज्ञानाभावात् यः पर्वतभिन्नत्वेन ज्ञायते स पर्वतभिन्नत्वेन ज्ञायते यथा पर्वतभिन्नत्वज्ञानाभावादु पन्नं ज्ञानं इत्यादौ विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभावसाध्यहेतुकव्यतिरेक्युदाहरणेऽति -

---

कल्पेऽतिव्याप्त्यलग्नकतेत्याशयः। न च तथापि निगमनघटकायंपदस्ययोऽर्थःसएवोपनयघटकतत्पदस्यापीति द्वितीयकल्पे साध्यान्वितस्वार्थबोधकत्वसंभवादतिव्याप्तिर्लगत्येवेति वाच्यम्। स्वजन्यपदार्थोपस्थितिसहकारेण साध्यान्वितस्वार्थबोधकत्वासंभवादतिव्याप्त्यलग्नतैवेत्याशयात्। तथापि पक्षविशेषणतया साध्यविषयत्वमादाय व्यावृत्तिः स्यादित्यत आह। अननुषंगपक्षेति। अप्रयोजकत्वादिति। तस्यानुषंगपक्षाभिप्रायकत्वादिति भावः। अभावसाध्यकेति। हेतुत्वपक्षकेतरभेदसाध्यकहेतुत्वत्वादिहेतुकेत्यर्थः। अयं धूमाद्वन्हिमान् आलोकादित्यादिस्थलीयस्य धूमाद्वन्हिव्याप्यालोकवानयमित्युपनयस्यापि-वन्हिस्वरूपसाध्यान्वितस्वार्थबोधकपंचमीविभक्तिमत्वात्तत्रातिव्याप्तिरतः प्रकृतपदम्। तथा च तत्र धूमज्ञानज्ञाप्यवन्हित्वावच्छिन्ने पञ्चम्यर्थहेतुत्वस्यानन्वयान्नातिव्याप्तिः। स्वार्थबोधप्रयोजकेति। शाब्दबोधस्वरूपयोग्यहेत्ववयवसंग्रहाय आकांक्षादीति। पक्षविशेषणतया साध्यविषयताशून्यबोधजनकत्वं केवलहेत्वर्थबोधमादाय, साध्यान्वितस्वार्थबोधजनकविभक्तिमत्वन्तु प्रतिज्ञाहेत्वर्थविशिष्टवैशिष्ट्यबोधमादायेतिएकधाशाब्दबोधनिवेशो न संभवतीति ध्येयम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यदि च पर्वते पर्वतभिन्नत्वप्रकारकज्ञानस्य विशेष्यतया अभावस्य साध्यत्वं हेतुत्वं च सिषाधयिषया च न्यायप्रयोगः तत्र यथा तादृशज्ञानाभावादुत्पन्नं ज्ञानमिति दृष्टान्तशालिनि व्यतिरेक्युदाहरणेऽतिव्याप्तिरित्युच्यते ।

व्याप्तिः तत्र हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्भूताया एव साध्यविषयतायास्सत्त्वात् । साध्यीभूततादृशाभावान्वितस्वार्थबोधकपञ्चमीविभक्तिमत्त्वाच्च, प्रथमकल्पे साध्ये पक्षविशेषणतापन्नत्वानिवेशात् दृष्टान्तोपस्थाप्यस्य तादृशसाध्यस्य पक्षानन्वितत्त्वस्याकिञ्चित्करत्वादित्यत आह यदिचेति । सिषाधयिषया न्यायप्रयोगस्य सविवादतया यदि चेत्युक्तं तस्य चोच्यत इत्यनेनान्वयः । समवायसम्बन्धावच्छिन्नाभावस्य साध्यत्वे ज्ञानस्य समवायेन ज्ञानरूपप्रतियोग्यनधिकरणतया न व्यतिरेकदृष्टान्तत्वसम्भव इति विशेष्यतयेत्युक्तम् । अत एव महानसत्वादिप्रकारकज्ञानाभावस्साध्यतया उपेक्षितः विशेष्यतयापि ज्ञानस्य तादृशज्ञानवत्त्वाभावात् । साध्यस्य हेतुतायामेव हेतुत्वविशेषणतापन्नतथाविधसाध्यविषयतायाः हेतुतावच्छेदकविशिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्भावस्सम्भवतीति तदादरः । ज्ञानाभावादुत्पन्नमिति असंसर्गाग्रहविधया तादृशज्ञानाभावस्य पर्वतत्वप्रकारकज्ञानोत्पादकत्वं बोध्यं । व्यतिरेकिपर्यन्तानुधावनं विशिष्टविषयताबहिर्भूतसाध्यविषयत्वाभावनिर्वाहाय । प्रकृतसाध्ये विशेषणतया अन्वितो यस्स्वार्थः तद्बोधकत्वं च दर्शितहेतुत्वपक्षकोपनयस्थेदंपदस्य नास्तीति तद्विवक्षणे विभक्तिपदवैयर्थ्यमिति विशेष्यविशेषणसाधारणमेवान्वितत्वं निवेशनीयं इत्युक्तोदाहरणजन्यबोधे पञ्चम्यर्थस्य साध्यविशेष्यत्वेऽप्यति सङ्ग एवेत्यभिप्रायः । अवयवान्तरेति । स्वभिन्नावयवघटकपदजन्योपस्थितिसहकारेण स्वाघटकपदजन्योपस्थितिसहकारेण वा तत्पदार्थान्वितस्वार्थबोधकविभक्तिमत्त्वमित्यर्थः । तेन तादृशसाध्यस्य प्रतिज्ञाद्यवयवस्थपदोपस्थापितत्वेऽपि नातिव्याप्तिः । न चैवमनुषङ्गपक्षे साध्याविषयकत्व विशेषणमनर्थकं निगमनस्य तत्पक्षे उपनयैकवाक्यताविरहेणावयवान्तरोपस्थापितार्थान्वितस्वार्थबोधकविभक्तिमत्त्वाभावाद्यावृत्त्यसङ्गतेरितिवाच्यम् । चैत्रःपचति पाककृतिसामग्रीमत्त्वादित्यादौ पाककृत्यादिसाध्यकप्रतिज्ञायां हेत्ववयवस्थपञ्चम्युपस्थाप्यहेतुत्वान्वितस्वार्थबोधकाख्यातविभक्तिमत्त्वादतिव्याप्तिवारणाय साध्याविषयकत्वोपादानस्यावश्यकत्वात् । प्रथमरीत्या साध्याविषयकत्वनिर्वचनस्याननुषङ्गपक्ष इव अनुषङ्गपक्षेऽपि सम्भ-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तदा अवयवान्तरोपस्थापितार्थान्वितस्वार्थबोधकविभक्तिमत्त्वं वक्तव्यम् । उदाहरणान्यत्वेन वा विशेषणीयम् । केचित्तु साध्यविषयकधीजनकत्वानियतहेतुविभक्तिमत्त्वनियतावयवतावच्छेदकरूपवत्त्वं समुदितलक्षणार्थं इत्याहुः ।

तच्चिन्त्यम् । हेतुत्वप्रतिपादकेति । विभक्त्यर्थहेतुत्वविशेष्यकान्वयबोधजनकन्यायावयवत्वमर्थः । हेतुत्वं प्रमेयमित्यादिप्रतिज्ञावारणाय विभक्त्यर्थेति । तस्मादितरेभ्यो भिद्यत इत्यादिनिगमनवारणाय हेतुत्वेति विशेष्येति च ।

वात् अननुषङ्गपक्षे एवेयं विवक्षा, अनुषङ्गपक्षे तूदाहरणान्यत्वविशेषणेनानुपदोक्तोदाहरणं वारणीयमित्यपि वदन्ति ।

साध्यघटितार्थबोधकोक्तहेतावव्याप्तिं हेतुविभक्तिमदुक्तोदाहरणेऽतिव्याप्तिञ्च प्रकारान्तरेण वारयतां मतमाह । केचित्त्विति । निगमने हेतुविभक्तिमत्त्वनैयत्यादतिव्याप्तिवारणाय अनियतान्तम् । हेतुत्वस्यापि साध्यबोधकोक्तहेतुवृत्तिया असम्भवइति असामानाधिकरण्यमुपेत्य अनियतत्वनिवेशः । उदाहरणोपनययोस्साध्याबोधकयोरपि सम्भवादुदाहरणोपनयसामान्यवारणाय नियतान्तम् । हेतुविभक्तिमदर्शितोदाहरणवृत्त्युदाहरणत्वमादायातिप्रसङ्गवारणाय सामानाधिकरण्यमुपेत्य नियतत्वनिवेशनम् । विभक्तिमत्त्वमनुपादेयं, हेतुत्वप्रतिपादकपदवत्त्वनैयत्यनिवेशनैवानतिप्रसङ्गात् , हेतुत्वप्रतिपादकपदवत्त्वनैयत्यार्थप्रतिपादकविभक्तिमत्त्वनैयत्योर्वैकल्पिकमुपादानं वा । तत्र च द्वितीयकल्पे विशेषणविभक्तेर्निरर्थकत्वमताभिप्रायेण । उदाहरणविशेषत्वमादायोक्तोदाहरणेऽतिप्रसङ्गवारणायावयवतावच्छेदकेति । चिन्त्यमिति चिन्ताबीजं पूर्ववत् । यथाश्रुतप्रतीतद्वितीयलक्षणार्थस्य निगमनसाधारणतयाऽन्यथा व्याचष्टे विभक्त्यर्थेति । विभक्तिजन्यहेतुत्वोपस्थितिद्वारा हेतुत्वमुख्यविशेष्यकशाब्दधीजनकन्यायावयवत्वमित्यर्थः । तेन हेतुत्वे विभक्त्यर्थहेतुत्वविशेषणस्याव्यावर्तकत्वेऽपि न क्षतिः । निगमनवारणायेति तत्र तिङर्थस्य विशेष्यत्वादितिभावः । विशेष्येतीति हेतुत्वविशेष्यकत्वस्य तत्रापि सत्त्वेन मुख्यविशेष्यतापर्यन्तानिवेशने तत्रातिव्याप्तिरेवेतिभावः । ननु घटो दण्डादित्यादिप्रतिज्ञाघटितघटादिपक्षकनिरूपकतासंसर्गकदण्डादिनिष्ठहेतुतासाध्यकन्यायान्तर्गते तस्माद्दण्डादित्याकारकनिगमने अननुषङ्गपक्षे विभक्त्यर्थहेतुत्वविशेष्यकबोधजनकेऽतिव्याप्तिरत आह । घटोदण्डादिति । ज्ञापकत्वरूपहेतुत्वस्यैव प्रकृते निवेशनीयतया जनकत्वरूपहेतुत्व साध्यकप्रथमस्थले नातिव्याप्तिप्रसक्तिरित्यतो वह्निपक्षकधूमनिष्ठ

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



घटो दण्डात् वह्निर्धूमादित्यादिकाः न प्रतिज्ञाः। तदवृत्तेरतदात्मनश्च तद्धर्मं व्यापकत्वायोगात् सम्प्रदायविरोधाच्च । तेन तन्नत्यनिगमने नातिप्रसङ्ग इति भावः ।

उदाहरणेति क्वचिज्जिज्ञासानुत्पादेऽपि तद्योग्यतासत्त्वान्नाव्याप्तिः । अनुक्तोदाहरणस्थलेऽपि तादृशस्वरूपयोग्यतासत्त्वात्तद्वारणाय न्यायावयवेति । उदाहरणत्वं चेदं न न्यायावयवत्वगर्भम् । वैयर्थ्यात् ( साध्याविषयकेत्यादि अयं न दण्डात् दण्डसंयोगाजन्यद्रव्यत्वादित्यादौ प्रतिज्ञानिगमनयोर्वारणाय साध्याविषयेत्यादिव्याख्यातार्थकम् । उपनयविशेषवारणाय हेतुपञ्चम्यन्तेति )

हेतुतासाध्यकस्थलान्तरानुसरणम् । तदवृत्तेरिति । तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धेन व्यापकत्वानभ्युपगमादिति भावः । तादात्म्येन स्वस्य स्वधर्मव्यापकत्वसत्त्वादाह ; अतदात्मन इति । तद्धर्मेति । तद्वृत्तिधर्मेत्यर्थः । ज्ञाप्यताया एव नवीनमते पञ्चम्यर्थतया ज्ञाप्यत्वसाध्यकतादृशप्रतिज्ञा सम्भवत्येव, तथाचासम्भववारणाय लक्षणस्थहेतुत्वपदेनापि तादृशस्य हेतुत्वरूपार्थस्यैव विवक्षणीयतया तत्रत्यनिगमनेऽतिव्याप्तितादवस्थ्यमित्याशङ्क्याह सम्प्रदायविरोधाच्चेति । न्यायानन्तर्गतस्य धूमादित्यादिवाक्यस्योदाहरणप्रयोजकजिज्ञासोपधायकत्वविरहेऽपि तत्स्वरूपयोग्यतामादायातिव्याप्तिं प्रसज्य न्यायावयवत्वदलं सार्थकीचिकीर्षुर्जनकपदस्य स्वरूपयोग्यतापरत्वं स्फुटयति । क्वचिदिति । अभ्युपेत्य फलोपधाननिवेशेऽपि न्यायावयवत्वनिवेशनमावश्यकमित्याह । उदाहरणत्वं चेति वैयर्थ्यात् । प्रयोजनान्तराभावात् । तथा च यत्रोदाहरणान्तमेव प्रयुक्तं तत्राप्युदाहरणप्रयोजकजिज्ञासाफलोपादानसम्भवेनातिव्याप्तिवारणाय न्यायावयवत्वनिवेशनं जनकपदस्य फलोधानपरत्वेऽप्यावश्यकमेवेति भावः । चतुर्थलक्षणे प्रसिद्धप्रतिज्ञानिगमनयोरसाध्याविषयकत्वविशेषणव्यावृत्तिर्न घटते पञ्चम्यन्तत्वाभावादिति पञ्चम्यन्ततद्विशेषे तद्व्यावृत्तिमाह अयं न दण्डादिति । अयं दण्डादित्यादिप्रतिज्ञायाःसम्प्रदायविरुद्धत्वं प्रागभिहितमित्यभावसाध्यकानुधावनम् । वन्हिमान्वन्हिसमर्थामत्त्वादित्यादौ यथाश्रुताऽव्याप्तेराह—व्याख्यातार्थकमिति । हेतुतावच्छेदकविशिष्टेत्यादिनेत्यादिः । उपनयविशेषेति । साध्याविषयकबोधजनकाभावसाध्यकव्यतिरेक्युपनये त्यर्थः । उदाहरणस्य च पञ्चम्यन्तस्यापि सम्भवात्तद्वारणायोदाहरणा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



हेत्विति हेतुत्वबोधकार्थकम्। हेतुपञ्चम्योर्वैकल्पिकमुपादानम्। उपनयस्य चान्तेऽनुसन्धीयमाना प्रथमैवान्तः। एवं दण्डादित्यादेः स्वपरस्यापि दृष्टान्तस्य पञ्चम्यन्तत्वे अन्वयायोगात् कस्यचिद्व्यतिरेकिण उदाहरणस्य पञ्चम्यन्तत्वसम्भवे तु तद्वारणं पूर्ववत्। अत्र चार्थवद्भागस्य हेतुपञ्चम्यन्तत्वं बोध्यम्। तेन निरर्थकतसिलन्ते वन्हिप्रमात इत्यादौ नाव्याप्तिः।

न्यत्वस्य निवेशनीयतया तत एवोदाहरणसामान्यवारणसम्भवादुपनयपर्यन्तानुधावनम्। धूमादालोकाभावादिसाध्यके धूमादालोकव्यापकाभावप्रतियोगिमानयमित्याद्युपनयेऽतिव्याप्तिवारकतया तत्पदसार्थक्यं बोध्यम्। उपनयस्य कस्यचिदपि पञ्चम्यन्तत्वासम्भवाद्धेतुपदवैयर्थ्यमाशंक्याह—हेतुत्वबोधकार्थमिति। हेत्विति। तादृशार्थकहेतुपदस्य पञ्चमीपदस्य च वैकल्पिकमुपादानमित्यर्थः। तथाच हेतुत्वबोधकान्तत्वं पञ्चम्यन्तत्वं पृथङ् निवेश्य लक्षणद्वयं करणीयमित्यर्थः। नन्वेवं प्रथमलक्षणे हेतुत्वपक्षके तद्बोधकेदंपदान्तोपनयेऽतिव्याप्तिरित्यत आह—उपनयस्य चेति। श्रूयमाणविभक्त्यन्तत्वाभावादनुसन्धीयमानेति। तथा च तस्य हेतुत्वबोधकत्वाभावादेव नातिव्याप्तिरिति भावः। ननु द्वितीयलक्षणे अयं न गुणो द्रव्यासमवेतत्वादित्यादौ यथा दण्डादित्यादिस्वपरपञ्चम्यन्तपदघटितदृष्टान्तशालिनि व्यतिरेक्युदाहरणे अतिव्याप्तिरित्यत आह एवमिति। दृष्टान्तस्येत्यत्रानुसन्धीयमानप्रथमैवान्त इत्यनुषज्यते—अन्वयायोगादिति। प्रथमान्तत्वं विना समानविभक्तिकत्वाभावेन तादृशशाब्दबोधे प्रथमान्तपदोपस्थाप्यसाध्याभावसाधनाभाववद्भेदान्वयानुपपत्तेरित्यर्थः। नन्वेवमपि अयं न घटो दण्डाजन्यत्वात् यो घटस्सदण्डादित्यादौ उदाहरणे लक्षणद्वयातिव्याप्तिर्दुर्वारैव साध्याविषयकबोधजनकत्वात् पञ्चम्यन्तत्वाच्चेत्यत आह कस्यचिदिति पूर्ववदिति। अवयवान्तरोपस्थापितार्थान्वितस्वार्थबोधकत्वोदाहरणान्यत्वयोरन्यतरविशेषणेनेत्यर्थः। ननु पञ्चम्यास्तसिलित्यत्र पञ्चम्या इत्यस्य पञ्चम्यन्त इत्यर्थकतापत्ते पर्वतो वन्हिमान्वन्हिप्रमात इत्यादौ हेत्वयवस्य तसिलन्तस्य हेतुपञ्चम्यन्तताविरहादव्याप्तिरित्यत आह अत्रचेति। हेतुपंचम्यन्तत्वमिति हेतुत्वबोधकान्तत्वं पंचम्यन्तत्वं चेत्यर्थः। अर्थवद्भागस्येति। स्वघटकार्थवद्भागपूर्वत्वाभाववद्धेतुत्वबोधकादिघटितत्वमेव तदन्तत्वमिह विवक्षितमिति भावः। अर्थवत्त्वमाकांक्षानिर्वाहकत्वम्।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



२०। प्रतिज्ञावाक्यधीजन्यकारणाकांक्षानिवर्तकज्ञानजनकहेतु-विभक्तिमद्वाक्यत्वं वा ।

पञ्चम्यादेः तसिलाद्यादेशत्ववादिनां नये तु नानुपपत्तिगन्धोऽपि । केचित्तु । हेतुपञ्चम्यन्तत्वं हेतुत्वप्रतिपादकपदशालित्वं पूर्ववत् ।

साध्याविषयकबोधजनकत्वञ्च इतरनैरपेक्ष्येण प्रकृतहेतुत्वाविशिष्टसाध्यविषयक-

तसिलं विनापि तत्पूर्वपञ्चम्यैव प्रकृतान्वयबोधौपयिकाकांक्षानिर्वाहात् न तसिलादेराकांक्षानिर्वाहकत्वं न तु किञ्चिदर्थवाचकत्वं तसिलादेरवाचकत्वेऽपि तद्घटकप्रत्येकवर्णानां वाचकत्वात् एकाक्षरकोशे सर्वेषां वर्णानां वाचकत्वबोधनात् उक्तसूत्रे पञ्चमीपदस्य षष्ठ्यन्तत्वमपि सम्भवतीत्यभिप्रायेण यथाश्रुतस्यैव साधुतां समर्थयति । पञ्चम्यादेरिति आदिपदाभ्यां सप्तम्यादेस्त्रलादेश्च परिग्रहः। नानुपपत्तिरिति तथासति तसिल एव हेतुत्वप्रतिपादकत्वात् पञ्चमीत्वाच्चेति भावः । तसिलादेः पञ्चम्यनादेशतापक्षे उक्तहेतावव्याप्तिवारणाय पञ्चम्यन्तत्वमविवक्षतां मतमाह केचित्त्विति हेतुत्वप्रतिपादकपदशालित्वमिति । तथा च पञ्चम्यन्तत्वानिवेशात्तसिलः पञ्चम्यनादेशतापक्षेऽपि न तदन्तहेतावव्याप्तिरिति भावः । ननु हेतुत्वप्रतिपादकपदस्यान्तत्वाविवक्षणे दर्शितव्यतिरेक्युपनये अतिव्याप्तितादवस्थ्यमित्यत आह पूर्ववदिति । प्रकृतसाध्यान्वितस्वार्थबोधकतादृशपदशालित्वरूपमित्यर्थः । एवं च प्रथमलक्षणे तादृशस्वार्थबोधकविभक्तिशालित्वं साध्याविषयकधीजनकत्वं च निरुक्तविशिष्टविषयताबहिर्भूतसाध्यविषयताशून्यधीजनकत्वरूपं निविष्टं तत्र तु तादृशहेतुत्वप्रतिपादकपदशालित्वं साध्याविषयकज्ञानजनकत्वं च निर्वक्ष्यमाणमन्यविधं प्रविष्टमिति भेद इत्यवधेयम् । पर्वतोवह्निमानित्यादिन्यायान्तर्गतप्रतिज्ञादेर्निर्वाच्यसाध्याविषयकज्ञानजनकताशालिनो वारणाय हेतुत्वप्रतिपादकपदोपादानम् । वह्नि द्रव्यत्ववान् वह्निमान् हेतुत्वं प्रमेयमित्यादिन्यायान्तर्गप्रतिज्ञादावतिव्याप्तिवारणाय विशेषणतया साध्यान्वितत्वनिवेशनेऽपि सुन्दरवह्निमत्सधर्मा पर्वतोवह्निमानित्यादावतिव्याप्तिवारणाय तदावश्यकत्वम् । न चैवमप्यालोकाद्वह्निमत्सधर्मा पर्वतो वह्निमानित्यादावतिव्याप्तिर्दुर्वारैव तत्रापि विवक्षणीयप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुताविशिष्टसाध्यविषयकज्ञानाजनकत्वस्याक्षतत्वादिति वाच्यम् । हेतुत्वप्रतिपादकेरपस्य प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वप्रतिपादकार्थकत्वात् । यथाश्रुतं साध्याविषयक-



CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पंचम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा ।

ज्ञानाजनकत्वं, साध्यं चेह न विवक्षितम् । वैयर्थ्यादित्याहुः पञ्चम्यन्तेति ।

ज्ञानजनकत्वं अयं वह्निमान्वह्निसामग्रीमत्त्वादित्यादिन्यायस्थले हेत्ववयवे अव्यापकं. पूर्वनिरुक्ततन्निवेशे च साध्यान्वितस्वार्थबोधकहेतुत्वप्रतिपादकपदशालित्वविशेषणे हेतुत्वप्रतिपादकेत्यस्य वैयर्थ्यं प्रतिज्ञाया निरुक्तसाध्याविषयज्ञानजनकत्वाभावादेव वारणादतस्साध्याविषयकज्ञान जनकत्वमन्यथा निर्वक्ति साध्येति । एवं च पर्वतोवह्निमानित्यादिप्रतिज्ञायास्साध्यविषयकज्ञानजनकत्वेऽपीतरनैरपेक्ष्येण हेतुत्वविशिष्टसाध्यविषयकज्ञानजनकतया साध्याविषयकेत्यादिनाऽवारणात् हेतुत्वप्रतिपादकत्वं पदविशेषणमर्थवद्भवति हेत्ववयवस्यापि प्रतिज्ञासहकारेण हेतुत्वविशिष्टसाध्यविषयकज्ञानजनकतया असम्भववारणायेतरनैरपेक्ष्येणेति । स्वाघटकपदासहकारेणेत्यर्थकं अजनकेत्यस्य प्रतियोगिविशेषणम् । तथा च स्वेतरावयवजन्यहेतुत्वविशिष्टसाध्यविषयकज्ञानजनकं यत्तदन्यत्वमिति समुदायार्थः । जनकपदस्य जनकतावच्छेदकधर्मपर्याप्तयाश्रयसमुदायत्वलाभायेतरनैरपेक्ष्येणेति । हेत्ववयवस्य प्रतिज्ञासहकारेण तादृशबोधजनकत्वेऽपि तादृशधर्मपर्याप्त्याश्रयसमुदायभेदस्याक्षततया इतरनैरपेक्ष्याप्रवेशोऽपि लक्षणसमन्वयात्, अयं धूमाद्वह्निमान् धूमाद्वह्निमतोऽन्यत्रावर्तमानधर्मादित्यादिहेतोर्धूमनिष्ठहेतुताविशिष्टसाध्यज्ञानजनकस्य संग्रहाय प्रकृतेति प्रकृतहेतुतावच्छेदकावच्छिन्नविशिष्टेत्यर्थकम् । प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वमितराविशेषणतया अवगाहिन एव ज्ञानस्येतरनिरपेक्षहेतुवाक्येन जननात्तादृशहेतुत्वप्रकारकज्ञानसामान्याजनकत्वस्यैव सकलहेत्ववयवसाधारण्यात् साध्यांशोपादानमनर्थकमिति तत्परित्यजति । साध्यंचेति । अत्र साध्यान्वितस्वार्थबोधकत्वनिवेशेऽपि हेतुत्वपक्षकोपनये साध्यान्वितार्थबोधे स्वजन्यत्वनिवेशे अनुषङ्गपक्षे साध्यान्वितपक्षबोधस्योपनयाजन्यतया तद्वारणेऽप्यनुषङ्गपक्षे निगमनोपस्थापितसाध्यान्वितहेतुत्वबोधकेदंपदशालिन्यतिव्याप्तिः । न च हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वप्रतिपादकपदशालित्वनिवेशान्न तत्रातिव्याप्तिरिति वाच्यम् । गोत्वाभावविशिष्टहेतुत्वं सास्नाभाववत् गोत्वाभावादित्यादिन्यायान्तर्गतोपनये तथाप्यतिव्याप्तेरवारणात्, अनुषङ्गपक्षेऽप्युक्तन्यायान्तर्गतप्रतिज्ञायामतिव्याप्तेश्च, विशेषणतया साध्यान्वितस्वार्थबोधकत्वं निवेश्य तद्वारणे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अनुमितिपरवाक्यत्वमवयवत्वं हेतुत्वादौ पञ्चमी लाक्षणिकी । वृक्षाद्विभजत इत्यादौ लाघवेनावधित्वे अवधिमत्त्वे वा शक्तत्वात् ।

द्रव्यनिष्ठावधित्वमिव विभागनिष्ठमवधिमत्त्वमपि सम्बन्धविशेषः । स चातिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत् । तत्सम्बन्धाग्रहेऽपि व्यवहारः, शक्तिभ्रमात् ।

साध्यांशवैयर्थ्यं, अनुषङ्गपक्षेऽप्युपनयस्थेदंपदार्थस्य कुत्रापि विशेषणताविरहात् पदान्तरोपस्थापितेन प्रकृतहेतुना साक्षाद्विशेषितहेतुत्वप्रतिपादकपदशालित्वं निवेश्योक्तविशिष्टहेतुत्वप्रपञ्चकप्रतिज्ञोपनययोः वारणेऽपि प्रकृतहेतुत्वशिष्टाविषयकज्ञानजनकत्वनिवेशेनैवोपपत्तौ नव्य व्यत्यासस्येतरनैरपेक्ष्येणेत्यभिधानस्याकिञ्चित्करत्वमित्यस्वरसः—पञ्चम्या लाक्षणिकत्वं व्यवस्थाप्य तद्वत्त्वेन निगमनेऽतिव्याप्तिं प्रसञ्जयन् पञ्चम्यन्तपदं सार्थकयति हेतुत्वादाविति । हेतुत्वं जनकत्वं आदिना ज्ञापकत्वपरिग्रहः जनकत्वोपादानं दृष्टान्तविधया । गुरुशरीरं तत्क्रियानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वरूपमपादानत्वं वा दृष्टान्तविधया आदिपदग्राह्यं हेतुत्वं ज्ञापकत्वमेव तर्हि कुत्र तच्छक्तिरित्यपेक्षायामाह – वृक्षादिति इत्यादौ इत्यादिवाक्यस्थपञ्चमीप्रतिपाद्ये । विनिगमनाविरहं निराकरोति लाघवेनेति । वृक्षादिनिष्ठावधित्वस्य निरूपकत्वादिसम्बन्धेन विभागे अन्वयसम्भवेऽपि न वृक्षादित्यादौ वृक्षादिनिष्ठावधिताया आश्रयतासम्बन्धावच्छिन्नाभावस्य वृक्षाद्यवधिकविभागेऽपि सत्त्वेनातिप्रसङ्गभिया तादृशबोधोपगमासम्भवात् वृत्त्यनियामकनिरूपकत्वसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वाद्विभागनिष्ठवृक्षादिनिरूपितमवधिमत्त्वमेव पञ्चम्या प्रतिपाद्यत इति नव्यमतानुसारेणाह अवधिमत्त्वेनेति । नन्ववधिमत्त्वमवधितानिरूपकत्वमेव तत्र वृक्षादेरवधितायामेवान्वयस्योपगन्तव्यतया एकदेशान्वयदोषः, निरूपकत्वं च तज्ज्ञानजनकज्ञानविषयत्वमिति ज्ञापकत्वापेक्षया गौरवमेवेत्यत आह —द्रव्यनिष्ठमिति । सम्बन्धविशेषः । अवधिमन्निष्ठोऽवधितानिरूपितसम्बन्धविशेषः । अवधिमत्त्वमेव स्वरूपसम्बन्धविशेषः तन्निरूपकत्वेमेवावधित्वमिति वैपरीत्यस्यापि सम्भवेन विनिगमनाविरहादिति भावः । अन्यदेतदिति । अनतिरिक्तत्वेऽप्यवधितात्वादेरनुगमकवर्णस्यानुगतप्रतीत्यनुरोधेनावश्यकत्वात्तस्य प्रवृत्तिनिमित्तत्वेन लाघवादिति भावः । नन्ववधित्वादावेव पञ्चम्याश्शक्तौ ज्ञापकत्वादावधित्वादिसम्बन्धाग्रहे वृत्त्यग्रहेण पञ्चम्याः ज्ञापकत्वबोधकत्वग्रहासम्भवात् तत्प्रत्यायनेच्छया पञ्चमीप्रयोगो न स्यादित्यत आह—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वृक्षादपैति पततीत्यादौ लाघवाद्विभागे शक्तिः तज्जनकत्वं च क्रियायाः संसर्गमर्यादया भासत इत्यपि वदन्ति ।

तत्सम्बन्धाग्रहेत्विति । ज्ञापकत्वादाववधित्वसम्बन्धाग्रहेऽपीत्यर्थः । व्यवहारः । ज्ञापकत्वादिपरपञ्चमीप्रयोगः । शक्तिभ्रमात् । ज्ञापकत्वादौ शक्तिभ्रमात् । अपादानताघटकविभागत्वजात्यवच्छिन्ने शक्तिवादिनां मतमुपन्यस्यति । वृक्षादिति । अपैत्यर्थोऽपगमः,स्पन्दमात्रं न तु विभागावच्छिन्नस्पन्दः तर्हि त्यजितुल्यतया धात्वर्थतावच्छेदकविभागाश्रयतया वृक्षाद्यपादानस्य कर्मताप्रसङ्गात्, नाप्युत्तरसंयोगावच्छिन्नस्पन्दः वृक्षाद्भूमिं प्रयातीतिवत् वृक्षाद्भूमिमपैतीति प्रयोगप्रसङ्गात् पततीत्यत्राधस्संयोगावच्छिन्नस्पन्दस्स्पन्दत्वावान्तरजात्यवच्छिन्नो वा पतत्यर्थः, उभयत्र वृक्षादिनिष्ठविभागजनकत्वं पञ्चमीलभ्यमेवेति प्रवृत्तिनिमित्तलाघवाद्विभाग एवैतस्याः शक्तिरित्यर्थः । नन्वेवं जनकत्वं कुतो लब्धं तदन्तर्भावेण शक्तौ च न ज्ञापकत्वाद्यपेक्षया लाघवमित्यत आह जनकत्वं चेति । अथ यत्नादेः स्वनिष्ठविभागानुकूलक्रियाश्रयत्वाद्विभागमात्रस्य पञ्चम्यर्थत्वे स्वं स्वस्मात्पततीत्यादेरपि प्रयोगस्स्यादिति भेदप्रतियोगितावच्छेदकत्वसहित एव विभागः पञ्चम्यर्थो वाच्यः, स्वनिष्ठक्रियायास्स्वनिष्ठविभागजनकत्वेऽपि स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वविरहान्नोक्तातिप्रसङ्ग इति कुतो लाघवमिति चेन्न । भेदप्रतियोगितावच्छेदकत्वे लक्षणयैवोपपत्तौ तदन्तर्भावेण शक्तेरकल्पनादिति तात्पर्यवशाच्छक्यलक्ष्यार्थयोरपि युगपदन्वयोपगमादिति लक्ष्यार्थभेदप्रतियोगितावच्छेदकत्वविनिर्मोकेण पञ्चम्या विभागाबोधकत्वव्युत्पत्तेर्न विभागमात्रतात्पर्येण स्वं स्वस्मात्पततीति प्रयोगप्रसङ्गः । अथवा केवलविभागे पूर्वपूर्वप्रयोगाभावादेव न प्रयोगः । वस्तुतो भेदप्रतियोगितावच्छेदकत्वस्य पञ्चम्यर्थत्वेऽपि वृक्षात्पत्रं पततीत्यत्र पत्रात्पत्रं पततीति प्रयोगो दुर्वारः, पत्रान्तरनिष्ठभेदमादाय ततः प्रत्येतव्यस्य पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति पत्रनिष्ठविभागजनकत्वस्य पत्रनिष्ठक्रियायामबाधात् । न च भेद एव पञ्चम्यर्थः तस्य स्वप्रतियोगितावच्छेदकत्वस्वाश्रयनिष्ठविभागजनत्वोभयसम्बधेन क्रियान्वयो वाच्य इति नोक्तातिप्रसङ्गः, तत्पत्रनिष्ठक्रियावच्छिन्नप्रतियोगिताकभेदाश्रय पत्रान्तरनिष्ठविभागजनकतायास्तत्पत्रक्रियायामसत्त्वेन तस्या उभयसम्बन्धेन पत्रान्तरान्वितभेदान्वयायोग्यत्वादिति वाच्यम् । पत्रान्तर-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अतः पचम्यन्तेति लाक्षणिकविशेषणम् । तस्मादित्यत्र च तत्पदे न लक्षणा ।

निष्ठेतत्क्रियावच्छिन्नभेदस्य वृक्षेऽपि सत्त्वेन तद्भेदाश्रयवृक्षनिष्ठ-विभागजनकतायास्तत्क्रियायां सत्त्वेन पत्रान्तरनिष्ठभेदस्योक्तसम्बन्धेन तत्क्रियान्वययोग्यताया अक्षतेः, अधिकरणभेदेनाभावभेदाभावात् । अथ पत्रादित्यत्राधेयतासम्बन्धेन पत्रविशिष्टभेद उपतिष्ठते विशिष्टस्यव च स्वाश्रयनिष्ठविभागजनकत्वघटितोभयसम्बन्धेनान्वयः, विशिष्टस्या-धिकरणमेव विशिष्टनिरूपितपरम्परासम्बन्धघटकं पत्राधेयत्वविशिष्टस्यैव चाऽधेयतासम्बन्धेन पत्रविशिष्टस्याधिकरणं विशेषणीभूतपत्रमेव न तु वृक्षः अतो नोक्तोभयसम्बन्धन पत्रविशिष्टभेदस्य तत्क्रियान्वय योग्यता । भेदप्रतियोगितावच्छेदकत्वदलरक्षार्थं स्वपदेन पत्रान्तर-विशिष्टभेदस्यैवोपादेयत्वात्, तदुपादाने तदाश्रयपत्रान्तरविभागजन-कत्वस्य तत्क्रियायां घटयितुमशक्यत्वादितिचेत् तर्हि विभाग एव शक्तिरस्तु तस्यैवाधेयतासम्बन्धन प्रकृत्यर्थविशिष्टस्य स्वस्वाश्रयनिष्ठ-भेदप्रतियोगितावच्छेदकत्वसहितजनकतासम्बन्धेन तत्क्रियायामन्वय उपेयतां तावताप्युक्तस्थले पत्रात्पत्रं पततीति प्रयोगवारणसम्भवात्, आधेयतया यत्पत्रविशिष्टविभागजनकत्वं तत्क्रियायास्तादृशविशिष्टा-श्रयतत्पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य तत्क्रियायामभावादित्य-लमधिकेन । अत्र जनकतासम्बन्धेस्य वृत्त्यनियामकतया पूर्ववदाका-शात्पतति न वृक्षादित्यादावनुपपत्तिरिति विभागजनकत्वमेवार्थो वाच्य इति क्व लाघवमित्यस्वरसः । अत इति । निगमनस्थायं तस्मादिति पंचम्याः लाक्षणिकत्वान्निगमनवारणायेति शेषः । पंचम्यन्तेति । तथा च पञ्चमीपदस्य पञ्चम्यन्तत्वाभावान्नातिव्याप्तिरिति भावः । नन्वेव-मपि पञ्चम्यन्ततत्पदस्य तादृशधूमादिपदवद्धूमादिज्ञाने लाक्षणिक-त्वाद्दुर्वारैव निगमनातिव्याप्तिरत आह । तस्मादित्यत्रेति । तत्पदे न लक्षणेति । न धूमादिज्ञाने शक्तिविरह इत्यर्थः । तेन तत्पदशक्य-धूमादिना तज्ज्ञानस्य सम्बन्धसत्त्वाच्छक्तिज्ञानशून्यकाले शक्यसम्बन्ध-ग्रहात्पदान्तरस्येव तत्पदस्यापि तादृशार्थबोधकतया अशक्यापत्ता-पत्त्वाच्च तत्पदे लक्षणायास्तथा बोधकत्वस्य च दुरपवादत्वेऽपि न क्षतिः । लक्षणे च लाक्षणिकत्वं शक्यार्थतात्पर्यराहित्यं अतो निगमने तत्पदस्य तात्पर्यविषयीभूतधूमज्ञानलाक्षणिकत्वेऽपि नातिव्याप्तिरित्यव-धेयम् । शक्तस्यैवेति । तत्पदस्य वक्तृबुद्धिस्थवाचकत्वाद्धूमादिज्ञाने

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



शक्त्यैव तादृशज्ञानोपस्थितिसम्भवात् । पर्वतो वह्निमान् वह्निसामग्रीमान् वा तस्मादित्यादिकस्तु न प्रयोगः सम्प्रदायविरोधादिति वदन्ति । यत्तु हेत्वन्वयानुरोधात् वन्हिमानित्यादावपि ज्ञानलक्षणेति । तदसत् । पंचम्याः ज्ञापकत्वे ज्ञाप्यत्वे वा लक्षणयैवोपपत्तौ तत्र लक्षणायां मानाभावात् ।

तात्पर्येण च प्रकृते तत्पदप्रयोगेण ज्ञानस्य वक्तृबुद्धिस्थतताया आवश्यकत्वात् । विशिष्टहेतुज्ञानस्याप्रक्रान्तत्वेऽपि न क्षतिरिति भावः । नन्वेवं तत्पदेन यत्र हेतुनिर्देशः तत्र पंचम्यन्तलाक्षणिकपदाभावादव्याप्तिरित्यत आह-पर्वतइति । वन्हिमान् तस्मादित्यत्र हेतुभूतधूमादेरप्रक्रान्तत्वाद्धेतोः प्रक्रान्तत्वरक्षायै वन्हिसामग्रीमानिति । अत्र वन्हिरूपहेतोः प्रक्रान्तत्वेन तत्पदेन स्फुटतरतत्परामर्शादिति भावः । सम्प्रदायाननुरोधिनां तथा प्रयोगो दुर्वार एवेत्यत्र लक्षणे वदन्तीत्यस्वरसः सूचितः । प्रतिज्ञास्थसाध्यवाचकपदस्य ज्ञानलाक्षणिकत्वात् प्रतिज्ञायामपि पंचम्यन्तपदव्यावृत्तिः सम्भवतीति मतमुपन्यस्य दूषयति यत्त्विति । अथवा निगमनस्थवन्ह्यादिपदस्य वन्ह्यादिज्ञाने लाक्षणिकतया तस्मादिति पंचम्या जनकत्वं जन्यत्वं वार्थः । तथा च पंचमीमादाय निगमने न व्यावृत्तिसङ्गतिः, अवधित्वादेरिव जनकत्वादेरपि स्वरूपसम्बन्धरूपतया विनिगमकाभावेन जन्यत्वस्यापि वाच्यत्वेन पंचम्याऽलाक्षणिकत्वादितिवादिनो मतं दूषयति । यत्त्विति । एवं चाग्रे जन्यत्वे शक्तावपि ज्ञाप्यत्वे लक्षणैवेत्युपसंहारस्सङ्गच्छते । हेत्वन्वनुरोधादिति । हेत्वनुशिष्टपंचम्या जन्यजनकभाव एवार्थः न तु ज्ञाप्यज्ञापकभावः "हेतुर्ना कारणं बीजमि" ति कोशाद्धेतुकारणपदयोः पर्यायतास्थितेः ज्ञापकार्थकताया हेतुपदस्य कोशादावदर्शनात् । तथा च प्रतिज्ञास्थवन्ह्यादिपदस्य मुख्यार्थपरत्वे मुख्यार्थस्य वह्न्यादेर्धूमज्ञानाद्यजन्यत्वेन ज्ञाने लक्षणां विना पंचम्यर्थान्वयानुपपत्तिः स्यादिति भावः । ज्ञानलक्षणा । वह्न्यादिज्ञानलक्षणा, तत्पक्षे च तस्य विषयता सम्बन्ध एव मतुबर्थः ज्ञानविषयतापर्यन्तमेव वा वह्न्यादिपदार्थ इति भावः । ज्ञापकत्व इति । प्रकृत्यर्थवृत्तिकर्मत्वादीनां सुबर्थतावादिप्राचीनमतेन । ज्ञाप्यत्वे वेति । नव्यमतेन । तत्र । वह्न्यादिपदे । लक्षणायाम् । लक्षणानिर्वाहकतात्पर्ये । मानाभावादिति । जन्यजनकभावस्य पञ्चम्यर्थत्वेऽपि तल्लाक्षणिकताया आवश्यकत्वात्तत्रैव ज्ञानान्तर्भावेणोपपत्तावुभयत्र लक्षणाया अयुक्तत्वादिति भावः । न च सुब्विभक्ते-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अत एवोक्तमावृत्तौ सैव प्रतिज्ञेति ।

रानुशासनिकातिरिक्तार्थेन लक्षणानुशासनं विनापि तल्लक्ष्यार्थं-विभक्तेस्साधुत्वे कर्मत्वादिरूपलक्ष्यार्थं षष्ठ्याद्यनुशासनवैयर्थ्यादिति कथमेतदिति वाच्यम् । हेताविति तृतीयाबोधकसूत्रस्थहेतुपदस्य कारण ज्ञापकोभयपरतया तदनुवृत्तिमता "विभाषागुणेऽस्त्रियामि" ति सूत्रेण ज्ञापकत्वेऽपि पञ्चम्या अनुशिष्टत्वात् । यदपि तत्र गुणपदं न वैशेषिक-सिद्धगुणपरं पुण्याभावान्न सुखीत्यादौ पंचम्या अनुपपत्तिरिति पराश्रितपरं तत्, पराश्रितत्वञ्च साध्यवदधिकरणाश्रितत्वं, तथा सति उक्तस्थले पुण्याभावप्रयोज्यसुखाद्यभावाश्रयवृत्तितया तत्प्रयोजकत्वा-त्पंचम्युपपत्तेः । तथा च ज्ञानकरणतावादिमते धूमादिपदार्थज्ञानरूपहेतुः साध्यवति न समवायादिना वर्त्तते । तथापि विषयतयैव तत्र वृत्तिरिति नानुपपत्तिः । एवं सति धूमज्ञानाद्वह्निमानिति प्रयोगस्स्यादिति तु न देश्यम् । ज्ञापकताबोधकपंचम्यन्ततत्तदर्थवाचकपदस्य तत्तदर्थज्ञान एवानादितात्पर्यात् । धूमज्ञानपदस्य धूमज्ञानज्ञान एव तात्पर्यात् । ज्ञानज्ञाप्यत्वस्य पंचम्यर्थतामते च ज्ञानविषयधूमादिरूपहेतोस्संयोगा-दिनैव साध्यपदाश्रितत्त्वान्नानुपपत्तिगन्धोऽपि । प्रतिज्ञास्थवह्न्यादि-पदस्य मुख्यार्थपरत्वे मणिकृतोऽपि स्वरसं दर्शयति अत एवोक्तमिति । आवृत्ताविति । तेन ग्रन्थेन पुनरनुसन्धीयमानस्य प्रतिवादिवाक्यसह कारेण मध्यस्थसंशयजनकस्य पूर्वोक्तसाध्यवद्धर्मिबोधकवादिवाक्यस्य प्रतिज्ञात्वमभ्युपगतं तत्र च वह्न्यादिपदं न तज्ज्ञानादिपरं तथा सति विषय संशायकत्वासम्भवाद्विप्रतिपत्तिवाक्याभ्यां कोट्युपस्थितिद्वारा मानसस्सं-शयो जन्यते इति सिद्धान्तिभिरपि वह्निः पर्वतोऽभाव इत्यादित आकां-क्षादिरहिताच्छब्दात्संशयानुदयेन धर्मिणि तत्तदभावकोट्योः प्रत्येकं शाब्दधीजनकसामग्रीभ्यामेव परस्परविरोधेन शाब्दबोधमनुत्पाद्य मान-सस्संशयो जन्यत इत्यभ्युपगमात्, प्रतिवादिनिवृत्तये पर्वते वह्निस्स्था-धनीयः इत्यभिसन्धेः प्रथमतोऽनियमात् शब्दादेव पर्वते वह्निनिश्चयो भविष्यतीत्यभिप्रायेणापि प्रथमं पर्वतो वह्निमानिति प्रयोगात्पूर्वप्रयुक्त-वह्निपदस्य सर्वत्र ज्ञानपरत्वासम्भवाच्चेति भावः । वर्धमानोपाध्या-यानामपि पंचम्या ज्ञापकत्वबोधकत्वे संवादमाह अत एवेति । यथासम्भ-वमिति । समभिव्याहृतद्रव्यादिपदार्थं जन्यनित्यरूपे तत्तदन्वययोग्य-तानुसारेणेत्यर्थः । नन्वावृत्तौ सैव प्रतिज्ञेति मणिकृतोऽभ्युपगमवादः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अतएव व्याचक्षते यतो द्रव्यं गुणाः कर्मेत्यत्र हेतुत्वं यथासम्भवमुत्पादकत्वं ज्ञापकत्वं चेति । अतएव लोके किं वह्निमदिति पृष्टे तद् गृहं वह्निमदित्युत्तरिते कुत इति जिज्ञासा धूमवत्त्वादित्युत्तरं च । नहि तत्र ज्ञाने प्रश्नः । येन लक्षणया ज्ञानेनोत्तरयेत् ।

नवा परकीयभाविप्रश्नानुरोधादजिज्ञासिताभिधानम् । नवा कुत इति प्रश्ने ज्ञातमित्यध्याहारः । मानाभावात् ।

ननु तत्र निर्भरः मध्यस्थसंशयात्परतोपि हेतुवाक्यसमभिव्याहृतसाध्यनिर्देशस्य साम्प्रदायिकत्वात् । हेतुत्वं यथा सम्भवमित्युपाध्यायग्रन्थोऽपि पंचमीप्रतिपाद्यं हेतुत्वं कचित् समभिव्याहृतपदमुख्यार्थनिरूपितं कचिच्च लक्ष्यार्थनिरूपितं कारणत्वमित्यर्थकतयोपपद्यते, यदप्युक्तमुभयपदे लक्षणाऽनौचित्यमिति, तदपि शिथिलं ज्ञापकतायाः पंचम्यर्थत्वे सूत्रस्थहेतुपदस्योभयपरतया वाक्यभेदापत्तेः । अनुशासनानुरोधेनोभयत्र लक्षणाया एवोचितत्वादित्यतो युक्त्यन्तरमाह । अतएवेति । जिज्ञासा प्रश्नः । धूमवत्त्वादित्युत्तरंचेति । प्रयुज्यत इति शेषः । उपष्टम्भं विवृणोति । नहीति । ज्ञाने प्रश्न इति । प्रश्नस्थवह्निपदं वन्हिज्ञानपरमित्यर्थः । वन्हेरेव जिज्ञासितत्वादितिशेषः । लक्षणया ज्ञानेनोत्तरयेदिति । लक्ष्यार्थज्ञानपरमुत्तरं वाक्यमित्यर्थः । अपितु प्रश्नसमानविषयकत्वानुरोधान्मुख्यार्थवह्निपरमेव तादृशोत्तरं प्रयुक्तमिति शेषः । तथा च तत्र वह्नौ कुतइति धूमादिति च प्रश्नोत्तरवाक्ययोरर्थे पंचम्यौ तदर्थान्वयानुरोधेन ज्ञापकत्वं ज्ञाप्यत्वं वा पंचम्यर्थौ वाच्ये इति भावः । ननु प्रथमप्रश्नानुरोधाद्वह्निपदस्य वह्निपरत्ववत्कुत इति प्रश्नस्थपंचम्यर्थान्वयानुरोधात्तदुत्तरधूमादिति पंचम्यर्थान्वयानुरोधाच्च ज्ञानपरत्वमप्यविरोधादेकदा शक्यलक्ष्यार्थानन्वयेऽपि वह्निं बोधयित्वा वह्निज्ञानं बोधयिष्यतीत्यभिप्रायेणैवैकपदप्रयोगे बाधकाभावादत् अत एव तथाविधतात्पर्यानुरोधेन नानार्थस्थले व्यावृत्तिरित्यत आह नवेति । परकीयभाविप्रश्नानुरोधादिति । तादृशप्रश्नस्वीयतदुत्तरवाक्यद्वयस्थपञ्चम्यर्थान्वयानुरोधादित्यर्थः । अजिज्ञासिताभिधानम् । प्रथमजिज्ञासाऽविषयज्ञानप्रत्यायनेच्छया वह्निपदप्रयोगः, परकीयत्वेन भावित्वेन च प्रथमं कुत इति प्रश्नस्याज्ञानात्, परकीयवह्निज्ञानहेतुजिज्ञासाया अज्ञानेन वन्हिज्ञान प्रत्यायनेच्छायाः प्रथममसम्भवादिति हेतुसूचनाय परकीयत्व

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



दाहो दहनात् न जलात् जलं स्पर्शवत् रूपात् न गन्धात् नापि शब्दादित्यादौ नञर्थान्वयानुरोधात् जन्यत्वरूपहेतुमत्त्वं जन्यज्ञानविषयत्वरूपज्ञाप्यत्वञ्च

भावित्वाभिधानम् । ननु तत्र ज्ञातमित्यध्याहारात्कुत इत्यादि-पञ्चम्यर्थस्य ज्ञानेऽन्वयो न तु वह्न्यादावित्यत आह नचेति । प्रश्नस्थ-पदस्य उत्तरवाक्येऽनुषङ्गस्य व्युत्पत्तिसिद्धत्वात्कुत इत्यत्र ज्ञातमित्य-ध्याहारेणैव धूमादित्यत्रापि ज्ञानान्वयसम्भवात् तत्राध्याहारान्तरविर-हेऽपि न क्षतिरित्यतः कुत इत्यत्रैव अध्याहारश्शङ्कितः । मानाभावादिति । पदार्थान्तरान्वयस्य वक्तुरनभिप्रेतत्वनिश्चयेऽपि बोधस्यानुभाविकत्वात्-सर्वत्राश्रुतपदकल्पनासम्भवादित्यर्थः । इदं त्ववधेयम् । गृहं वन्हिमदिति प्रयोक्तुर्वह्निपदे ज्ञानतात्पर्यं कुत इति वाक्यजन्यज्ञान हेतुजिज्ञासाबोधेऽनुपयुक्तं स्वाभिप्रायस्य स्वबोधाहेतुत्वात् , कुत इति पृच्छकपुरुष-तात्पर्यस्यैव तत्रोपयोगात् । तथा च स्वजिज्ञासां बोधयितुकामस्य कुत इति प्रयोक्तुः परप्रयुक्तवह्निपदोपस्थापितज्ञानमादाय कुत इति पञ्चम्यर्थान्व-यबोधो भवत्वित्यभिप्रायं ज्ञात्वैव प्रतिवक्ता प्रष्टुर्वह्निज्ञानहेतुजिज्ञासां कुत इतिशब्दादनुषज्यमानस्त्रोक्तवह्निपदसहितात् ज्ञास्यति, एवं गृहं वह्निमदिति प्रयोक्तुः प्रथमं वह्निपदे ज्ञानतात्पर्यविरहेऽपि कुतइति प्रश्नानन्तरं प्रष्टुर्वह्निज्ञानहेतुजिज्ञासाया ज्ञाने किमर्थमन्यद्वह्निपदं प्रयोक्तव्यं पूर्वं वह्निपदाल्लक्षणयोपस्थापितज्ञानमादायैव धूमादिति वाक्यं धूमज्ञाने वह्निज्ञापकतां बोधयत्वित्यभिप्रायसम्भवात् तज्ज्ञानेन धूमादिति पञ्चम्यर्थस्य ज्ञानान्वयो भविष्यतीति किमनुपपन्नम् । नहि प्रयोक्तृपुरुषस्यैकार्थतात्पर्यं पुरुषान्तरस्यान्यार्थतात्पर्यविरोधि अन्यैर-प्यन्यतात्पर्येण प्रयुक्तान्यपि पदान्यादायान्यार्थपरश्लोकस्य मौनिना निबन्धनात् । न वा स्वीयप्राथमिकमन्यतात्पर्यमुदीच्यमपरतात्पर्यं विरु-णद्धि बीजाभावात् । युज्यते च वह्न्यादिपदस्य वह्न्यादिप्रकारकज्ञान-विषयत्वे लक्षणा, साध्यान्वयिजन्यज्ञानविषयत्वस्य पञ्चम्यर्थत्वे गुणस्सत्तावान् द्रव्यत्वादित्यादिप्रयोगस्य दुर्वारतापातात् , द्रव्यत्वादि-ज्ञाप्यसत्त्वादेर्गुणादावपि सत्त्वात् , साध्यवाचकपदस्य लाक्षणिकत्वे पक्षान्वयिसाध्यतावच्छेदकविशिष्टसाध्यप्रकारकज्ञानविषयत्वरूपसाध्यवा - चकपदार्थे पञ्चम्यन्तार्थलिङ्गज्ञानप्रयोज्यत्वान्वयात् द्रव्यत्वादिप्रकार-ज्ञानप्रयोज्यसत्त्वादिप्रकारकज्ञानविषयत्वस्य गुणादौ बाधेन कथितातिप्रसङ्गवारणसम्भवात् । न च जन्यज्ञानविषयत्वरूपपञ्चम्यर्थस्य साध्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विशिष्टपक्षेऽन्वयस्स्वीक्रियते सत्तादिरूपसाध्यविशिष्टगुणादिरूपपक्षस्य च न द्रव्यत्वादिलिङ्गज्ञाप्यतेति नातिप्रसङ्गः। वह्न्यादिमतःपर्वतादेः द्रव्यत्वादिरूपसाध्यविशिष्टस्य पृथिवीत्वादिज्ञाप्यत्वेऽपि वह्न्यादिविशिष्टस्य न तथात्वमिति विशेषणावच्छिन्न एव पञ्चम्याः ज्ञाप्यत्वबोधकत्वात् न पर्वतो वह्निमान् पृथिवीत्वादित्यादिप्रयोगः। विषयतायाः पर्याप्तिसम्बन्धेन विशिष्टेऽन्वयोपगमात् द्रव्यत्वादिरूपसाध्यवत्त्वेन वह्न्यादिरूपपक्षतावच्छेदकविशिष्टपर्वतादौ पृथिवीत्वादिज्ञाप्यत्वेऽपि न क्षतिरिति वाच्यम्। एवमपि द्रव्यत्ववान् पर्वतो वह्निमान् धूमान्न पृथिवीत्वादित्यादौ नञर्थान्वयानुपपत्तेर्दुर्वारत्वात् पृथिवीत्वज्ञाप्यतापर्याप्त्यधिकरणद्रव्यत्वविशिष्टपर्वतादौ वह्न्यादिरूपविशेषणान्तरावच्छिन्नेऽपि तज्ज्ञाप्यत्वविरहासम्भवात्। अस्मन्मते च तत्र पर्वताद्यन्वयिनि वह्न्यादिप्रकारकज्ञानविषयत्वे पृथिवीत्वादिरूपलिङ्गज्ञानप्रयोज्यत्वस्य पञ्चम्यन्तार्थस्याभावान्वयात्तदभावस्य तत्राबाधेनानुपपत्तिविरहात्। एवं साध्ये ज्ञाप्यत्वान्वयपक्षेऽपि उक्तप्रयोगानुपपत्तिर्दुष्टव्या वह्न्यादेरपि प्रमेयत्वादिना पृथिवीत्वादिज्ञाप्यत्वात्। यदि च प्रयोज्यत्वं समभिव्याहृतपक्षविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयता च खण्डशो लक्षणया पञ्चम्यर्थः अन्वयबलात्साध्ये पक्षांशे तत्तद्रूपेण हेतुज्ञाप्यतालाभः नञ्समभिव्याहारस्थले च लिङ्गज्ञानान्वितप्रयोज्यत्वरूपैकार्थस्य निरुक्तविधेयतारूपापरपञ्चम्यर्थेऽभावो नञा प्रत्याय्यत इत्युच्यते; तदा साध्यतावच्छेदकपक्षतावच्छेदकादेर्द्विधाभानाद्गौरवं। साध्यान्वयिनी पक्षविशेष्यतानिरूपितविधेयता, पक्षान्वयिनी साध्यविधेयतानिरूपितविशेष्यता वा पञ्चम्यर्थ इति विनिगमनाविरहः, एकपदस्यार्थद्वये खण्डशो लक्षणा, पदद्वयस्यैव वा प्रत्येकमर्थद्वये लक्षणेत्यत्र को विशेष इति। प्रसङ्गतः पञ्चम्याः जनकत्वज्ञापकत्वार्थकत्वं नञर्थान्वयस्थले अनुपपत्तिप्रदर्शनेन निराकुर्वन् जन्यत्वज्ञाप्यत्वार्थकतां व्यवस्थापयति। दाहो दहनादित्यादिना। गन्धस्याज्ञापकत्वं पक्षधर्मताविरहेण शब्दस्यातथात्वं व्याप्तेरपि विरहेणेति प्रदर्शनार्थमुभयोपादानम्। नञर्थान्वयानुरोधादिति। जनकत्वज्ञापकत्वयोः पंचम्यर्थत्वे निरूपकतासम्बन्धावच्छिन्नभावाप्रसिद्ध्या आश्रयतासम्बन्धावच्छिन्नाभावप्रत्यय एव दाहस्पर्शादौ स्वीकार्यः, तथा च तत्र जलगन्धनिष्ठजनकत्वज्ञापकत्वयोरिव दहनरूपादिनिष्ठयोरपि तयोरभाववत्त्वेन दाहो न दहनात् जलं स्पर्शवन्न रूपादित्यपि स्यादितिभावः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नच दाहादिविशेषितजनकत्वादेरेवाभावः तत्र जलादिरूपप्रकृत्यर्थे प्रतीयत इति वाच्यम्। प्रथमान्तार्थस्य पंचम्यर्थविशेष्यतयैव शब्दात्प्रतीतेर्दाहादिविशेषितजनकत्वादिरूपप्रतियोगिनश्शब्दादनुपस्थितस्य नञाऽभावबोधनासम्भवात् पंचम्यर्थस्य प्रकृत्यर्थान्यपदार्थविशेषितस्यापि नञ्समभिव्याहारस्थले भानोपगमे व्युत्पत्तिभेदाद्गौरवम्. सर्वत्रैव प्रकृत्यर्थे विभक्त्यर्थो विशेषणं तत्र निरूपकतया समभिव्याहृतपदार्थान्तरमिति चानुभवसिद्धप्रथमान्तपदार्थविशेष्यताभङ्गेनासम्भवदुक्तिकम्। इन्धनस्य दाहो दहनादित्यादौ तुल्ययुक्त्या दहनादेर्दाहजनकत्वादिविशेष्यत्ववदिन्धनादेरपि दाहसम्बन्धादिविशेष्यतया इन्धनं दाहसम्बन्धि दहनो दाहजनक इत्यादि समूहालम्बनबोधस्य स्वीकारेण वाक्यभेदप्रसंगात्। यत्रान्यस्य दाहो दहनान्नैतदिन्धनस्य तत्रैतदिन्धनस्य दाहो न दहनादिति प्रयोगानुपपत्तिश्चेति। अत्र वदन्ति। जन्यतायाः पंचम्यर्थत्वे दाहो दहनान्न परमाणुपरिमाणादित्यादिप्रयोगानुपपत्तिः। पारिमाण्डिल्यस्य कार्यसामान्येऽजनकतया परमाणुपरिमाणादिजन्यत्वाप्रसिद्धेः नञर्थे प्रतियोगितया अन्वयासम्भवात्, दाहाद्यन्वयिनि जन्यत्वे प्रकृत्यर्थस्य निरूपितत्वसम्बन्धेनाभावबोधोपगमे च वृत्त्यनियामकसम्बन्धावच्छिन्नाभावभ्युपगमः, लक्षणया प्रकृत्यर्थनिरूपितत्वस्य प्रकृत्यर्थस्याभावान्वयोपगमेऽपि गगनं न परमाणुपरिमाणादित्यादौ जन्यत्वान्वययोग्यत्वानुपपत्तिः, पारिमाण्डल्यनिरूपितत्वाभाववज्जन्यत्वाभाववद्गगनमित्याकारिकायाः द्विधा नञर्थावगाहिप्रतीतेरुपगमे च घटो न घटजनकादित्यपि स्यात्, घटजनकाद्यनिरूपितजन्यत्वाभावस्य घटादावबाधात्, दण्डाद्यनिरूपितजन्यत्वत्वावच्छिन्नाभावस्य पटादौ बाधेन पटो न दण्डादित्यादेरनुपपत्तेश्च, गगनादेर्जन्यत्वभ्रमदशायां गगनं न पारिमाण्डल्यादित्यादिवाक्यस्याबोधकतापत्तेः पंचम्यर्थजन्यतासामान्ये लक्षणया प्रकृत्युपस्थाप्यपारिमाण्डल्यनिरूपितत्वगगनवृत्तित्वोभयत्वावच्छिन्नाभावबोधापगमे च जनकतायाः पंचम्यर्थत्वेऽपि तत्सामान्ये लक्षणया प्रकृत्युपस्थाप्यपारिमाण्डल्यवृत्तित्वगगननिरूपितत्वोभयत्वावच्छिन्नाभावबोधापगमेन सामञ्जस्यम्। नच तत्र लक्षणाया आवश्यकत्वेऽपि दाहो न जलादित्यादौ लक्षणां विनैवोपपत्तये जन्यत्वस्य पंचम्यर्थत्वमिति वाच्यम्। जलादेरपि कार्यजनकत्वभ्रमदशायां दाहो न पारिमाण्डल्यादित्यादाविवान्वयबोधस्यानुभाविकतया तदनुरोधेन तत्रापि जन्यतायां जलादिनिरूपितत्वाभावबोधस्यावश्योपेयत्वादिति।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

